# गृहस्थरत्नाकरः ।

# GṚHASTHA-RATNĀKARA

A TREATISE ON SMṚTI

BY

CAṆḌEŚVARA ṬHAKKURA

EDITED BY

MAHĀMAHOPĀDHYĀYA KAMALAKṚṢṆA SMṚTITĪRTHA.



PRINTED AT THE BAPTIST MISSION PRESS.
PUBLISHED BY THE ASIATIC SOCIETY OF BENGAL.

CALCUTTA.
1928.



# PREFACE.

The present work, Gṛhastha-ratnākara, is the third of Chaṇḍeśvara Ṭhakkura's Code of Smṛtiratnākaras. The first two, viz., Vivāda-ratnākara (1887) and Kṛtya-ratnākara (1925) have been published in the Bibliotheca Indica series. The present treatise was written by the author after his Vivāda-ratnākara, as the latter is referred to in the former.[1]

The history of the author has been dealt with by the present editor in his preface to Kṛtya-ratnākara. The salient facts are reproduced below.

The author was a Maithili Brahmin and flourished in the first half of the fourteenth century when the Karṇāṭa dynasty was reigning supreme in Mithilā. Devāditya and Bīreśvara, his father and grandfather, were successive ministers of peace and war to the kings of that dynasty. Caṇḍeswara succeeded to the hereditary post and was minister to the King Hara-singha Deva. It was at the instance of his royal patron that he undertook to write seven treatises on Smṛti and one on Polity, the name of each work ending with the suffix "Ratnākara" (sea).

From the author's introductory verses to Kṛtya-ratnākara we find that he made a gift of many villages to Brahmins, got a huge tank excavated in Abhirāmapura and was the first Indian Brahmin to touch and worship the celebrated deity "Paśupati nātha" of Nepal. The concluding verse of Vivāda-ratnākara enlightens us about the author's age. It purports that Caṇḍeśvara "performed the rite of तुलापुरुषदान[2] on the banks of the Bāgmatī in the waxing half of the month of Śrāvaṇa in the year 1236 of the Śaka era" (i.e. July, 1315 A.D.).

[1] Vide p. 531, Gṛhastha, उक्तं विवादरत्नाकरे विस्तरम् ।

[2] Making gifts of jewels and precious metals, equal in weight to one's own body.

The Jurists of Bengal have often differed from those o Mithilā, regarding the interpretation of religious texts. Bu Caṇḍeśvara has been highly appreciated by Raghunandana an other Bengal Jurists. Raghunandana has quoted a text of th Gṛhastha-ratnākara in his Udvāhatattva,[1] and quotations fron other treatises of the series also occur in Raghunandana's Smṛt collections.

Not that Caṇḍeśavara was simply a Jurist, he was a poe and politician as well. His Rāja-nīti-ratnākara (B. O. R S 1924) contains all the fundamental principles of Hindu Polity The twenty-six introductory verses to Kṛtya ratnākara aga contain much genuine poetry.

The present treatise is concerned, as the name indicate with the enumeration and description of the threefold duties a Hindu householder (Gṛhastha), viz (1) Civil, (2) Religiou and (3) Sanitary. The members of the twice-born classe become "Gṛhasthas" on the completion of their Vedic studie The intending "Gṛhastha" has to secure the permission of th Vedic preceptor and then seek the hand of an accomplishe girl of his caste, with the sanction of his parents.

"Marriage" is dealt with in the "civil" portion of th book. Here the author describes the eight kinds of marriag with their relative merits and also the topics of अधिवेदन an परिवेदन. "Supersession" (अधिवेदन) is 'marrying' a secon wife in the lifetime of the first one.' No other compiler Smṛti has dealt with this topic. Caṇḍeśvara's treatment the subject shows that it was ordinarily punished in ancie society. परिवेदन is the "marriage of a younger brother who elders are unmarried." It was absolutely forbidden in ancier society. The following duties are exhaustively treated in th "religious" portion of the book, viz., prayers, ceremoni ablutions, propitiation of the gods and manes, and hospitality.

The "sanitary" regulations relate to purification of th body, bathing, eating and so on. Caṇḍeśvara is of opinion tha

[1] Vide the chapter on सामान्यकाल.

flesh-eating is not a sin, if rendered absolutely necessary for the sustenance of human life; and that a person, suffering from a disease, curable by meat-diet only, incurs no sin whatsoever by partaking of meat.[1]

Caṇḍeśvara has divided the day-time into four parts and prescribed the duties for each, to be discharged by the twice-born classes. The first quarter of the day is to be spent in cleansing the body and worshipping the gods; the second quarter in reciting the Vedas; the third in earning money; and the fourth is to be utilised for recreation of one's mind and body. The author has referred to sixty eight topics in his introduction but has finished the book with sixty-five only, and स्थापकरणम्, रक्षोघ्नाचारवर्णन and भारतश्रवण are not treated separately.

The treatment of the present work is methodical and gives evidence of the profundity of the author's scholarship.

The author has not left untouched a single source of the Vedas and Saṃhitās, the entire texts of some of the latter being now lost. Unlike other compilers of Smṛti, he has mingled his comments with the original quotations, without placing them separately, which circumstance has added considerably to the difficulty of the editors.

The present edition is the outcome of the comparison of three manuscripts, marked क, ख and ग, respectively, secured from the District Judge of Darbhanga, the library of the Asiatic Society of Bengal, and Babu Brajanandana Sinha of Sakri (Darbhanga). The Society's manuscript is incomplete and I consulted another for the pages which are wanting in it. This manuscript has also been marked by me as ख.

To bring out this edition, I consulted the original Saṃhitās, the Purāṇas, the Gṛhya-sūtras, the Epics and the complete works of Raghunandana and Hemādri.

My heartfelt thanks are due to the Council of the Asiatic Society for permitting me to edit this rare work and freely use their library. To Mr. Johan van Manen, the General Secretary,

[1] Vide page 382, Gṛhastha.

I wish to pay special tribute for the encouragement and advice freely bestowed.

In conclusion, I beg to acknowledge my indebtedness to the following three gentlemen, who very kindly lent the manuscripts to me :—

Babu Ashutosh Chatterji, Babu Brajanandana Sinha and Babu Bireswara Chakravarty.

MM. KAMALAKṚṢṆA SMṚTITĪRTHA.

BHATPARA,
*April*, 1928.

# भूमिका।

गृहस्थरत्नाकरोऽयं स्मृतिनिबन्धकारस्य मैथिलसंख्यावतश्चण्डेश्वरस्य कृतिकल्पतरुरत्नाकराख्यस्मृतिनिबन्धस्य चतुर्थो भागः। ग्रन्थकार एवास्मिन् ग्रन्थे प्रतिग्रहविधितरङ्गे दानरत्नाकरस्य, कुसीदतरङ्गे विवादरत्नाकरस्य, यजनभाजनतरङ्गे कृत्यरत्नाकरस्य च नामानि समुल्लिख्यामुष्य चतुर्थतां प्रकटयामास। यद्यप्यस्य सम्यक् परिचयो मत्सम्पादित-कृत्यरत्नाकरभूमिकायां विवृत एवास्ते तथाप्येतद्ग्रन्थाध्येतॄणां तत्परिचयजिज्ञासासम्पूरणाभिवाञ्छया किञ्चित् प्रकटीक्रियते।

असौ सर्व्वशास्त्रदर्शी चण्डेश्वरो मगधनरपतेर्हरिसिंहदेवस्य सान्धिविग्रहिक आसीत्। अस्मिंश्च राजनि सान्धिविग्रहिकता अमुष्य पितृपैतामहक्रमागता। यतोऽस्य पिता वीरेश्वरस्तत्पिता च देवादित्योऽस्यैव राज्ञः सान्धिविग्रहिकधुरमूढवान्।

एतस्य नेपालप्रदेशावस्थानावसरे तुलापुरुषमहादानकृतिपरिचायकेन स्वकृत-विवादरत्नाकरोपसंहारलिखितश्लोकेनैवं ज्ञायते यथाऽयं त्रयोदश-शत-शकाब्दीय इति। यथा—

रसगुणभुजचन्द्रैः सम्मिते शाकवर्षे
सहसि धवलपक्षे वाग्मतीसिन्धुतीरे।
अदित तुलितमुच्चैरात्मना स्वर्णराशिं
निधिरखिलगुणानामुत्तरः सोमनाथः॥

अस्य नेपालावस्थाने एतदपि प्रमाणम्।

ख्रीष्टीय चतुर्विंशत्यधिकत्रयोदशशततमे संवत्सरे दिल्लीश्वरस्य गीयासुद्दिनतोग्लकवाहादूरस्य सैन्यैः संघर्षमवाप्य पराजितो मिथिलापतिर्हरिसिंहदेवो नेपालमाश्रितवान् तत्र स्वीयसान्धिविग्रहिकस्य चण्डेश्वरठक्कुरस्य साहाय्येनाऽयं निजाधिपत्यं संस्थापयामास। इति।

नेपाले भगवतः पशुपतिनाथस्य पूजायां नेपालराजेतरकृतमङ्गस्पर्शनं तदुपज्ञमेवाभूत्। अभिरामपुरे चासौ चण्डेश्वरो विशालं सरो निर्म्माया-ज्वयां कीर्त्तिमवाप। अन्यच्चासौ ब्रह्मचारिणो द्विजगणान् षडङ्गवेदान-ध्याप्य स्ववित्तव्ययेन गृहस्थानकृत। एवमन्यानि बहून्येव सत्कर्म्माण्यस्य लोकैरेवाभिज्ञायन्ते।

सुतरामसौ निबन्धकर्त्ता वङ्गीयनिबन्धकारेभ्यो रघुनन्दनभट्टा-चार्य्येभ्यो द्विशतवर्षपूर्व्वकालीनः प्रामाणिकश्चाग्र्यमिति। बहवस्तत्परवर्त्ति-निबन्धकर्त्तारः स्वस्वग्रन्थेष्वेनं चण्डेश्वरं प्रमाणितवन्तः। विशेषतो रघुनन्दन-भट्टाचार्य्याः स्वनिबन्धे अनेकेषु स्थानेषु गृहस्थरत्नाकरादिमतं प्रमाणरूपेण प्रदर्शयामासुः, विशेषरूपेणोद्वाहतत्त्वे।

ग्रन्थोऽयं सारवानपि सुबोध्यो वर्णाश्रमिणामतिप्रयोजनीयश्च। मैथिलैरिदानीमप्येनं बहुमन्यमानैरेतत्प्रदर्शितसरणिरनुस्रियते।

अस्य च रचनाकौशलं हेमाद्रि-पारिजात-कल्पतरुष्वपि प्रायशो दुर्लभमिति मन्यामहे। नासौ कूटतार्किक इव पाण्डित्याभिमानेन शास्त्रार्थं विकृतमकरोत् परन्तु वर्णाश्रमाचारे परस्पर-विरुद्धानां संहिता-कारवचसां तत्तद्विरोधमपनीय चात्मनो धर्म्मविश्वासे प्रगाढ़मनुरागं प्रदर्शयामास।

अस्य च ग्रन्थस्योपजीव्यभूतानां धर्म्मसूत्रसंहितादीनां चिचतुराणि पुस्तकानि वैदिकाचारिणामदृष्टदोषादलभ्यान्येव जातानि परन्तु तानि चाहत्य कृतायासवित्तव्ययेनापि मया तेषामेकस्य द्वयोर्वा कानिचित्पत्रा-ण्येव काशीराजकीय कुइन्सकलेजान्तःपातिपुस्तकागारे परिदृष्टानि।

चण्डेश्वरश्चैतस्मिन् ग्रन्थे अधिवेदन-वाच्यावाच्य-त्याज्यात्याज्य-तरङ्गाण्यवतार्य्य अनेकप्राचीनग्रन्थनिबन्धेभ्य उत्कर्षं प्रकटयामास।

एतत्प्रदर्शितयागव्यापाराणां साम्प्रतमनुपयोगितया लङ्घितानामपि प्रमाणपरिपाटीविरोधसमाधानकौशलं सर्व्वेषामेव विस्मयाय प्रभवति।

अस्य च सम्पादनाय चत्वार्य्यादर्शपुस्तकान्यधिगतान्यासन् एकं राजेन्द्रलालमित्रमहोदयानां नोटिशनिर्दिष्टं दारवङ्गवास्तव्यानां बाबु गुणेश्वरसिंहमहोदयानां पुस्तकागारात् तदानीन्तनानां दारवङ्गजेलाजजपदाधिरूढानां श्रीमतां आशुतोषचट्टोपाध्यायानां साहाय्येनाधिगतं तमेवादर्शं कृत्वा मुद्रणोपयोगाय प्रतिलिपिः कृता । तदेव क-चिह्नितम् ।

द्वितीयं एसियाटीकसोसाइटीपुस्तकागारात् प्राप्तं तच्च पञ्चमहायज्ञपर्य्यन्तमासीत् । तमेव ख-चिह्नितं कृतवानस्मि ।

तृतीयं ग-चिह्नितं दारवङ्गराघवपुरवास्तव्यात् दारवङ्गपतिसपिण्डज्ञातेर्भूस्वामिनो बाबुसाहेबोपाधिमतः श्रीमतो व्रजनन्दनसिंहमहोदयादधिगतं स च विद्यानुरागी-धार्म्मिकवरो व्रजनन्दनो मदर्थं प्रभूततमानायासानङ्गीकृत्य मिथिलावर्त्तिसुदूरपल्लीग्रामादाहृत्य मह्यमदात् तस्य चैवमहैतुकं विद्यानुरागं विद्वदनुरागञ्च स्मारं स्मारं विस्मितो भगवत्सन्निधे तस्य दीर्घमायुरभिकामये ।

अथापरमेकमर्द्धखण्डितं स्थाने स्थाने विलुप्तप्रायं काशीवासिसुहृद्वर-श्रीवीरेश्वरचक्रवर्त्तिनः सकाशादधिगतं तच्च भोज्याभोज्यतरङ्गादारभ्य स्वोपयोगाय व्यवहृतमिति तदपि ख-चिह्नितमेव रक्षितम् ।

चतुर्षु पुस्तकेषु राघवपुरागतस्यैव सम्यक् शुद्धत्वं तदनु सोसाइटी-पुस्तकस्य ।

ग्रन्थेऽस्मिन् बहुषु स्थानेषु "मूले" इति यः पाठान्तरः प्रदत्तः स च तत्तत्प्रमाणभूत-मन्वादि-मूलपुस्तकीय इत्यवधारणीयम् ।

अस्य च सम्पादनसौकर्य्याय यानि च गृह्यसूत्रोपनिषत्पुराण-संहितादीनि प्रयोजनीयान्यासन् तानि सर्व्वाण्येव प्रायश एसियाटीक-सोसाइटी-पुस्तकागारादधिगतानि कानिचिच्च गवर्णमेण्ट-संस्कृतकालेज-पुस्तकागारे परिदृष्टानि कानिचिच्च रघुनन्दनभट्टाचार्य्यपादीयग्रन्थादीनि मदायत्तान्येवासन् ॥

निबन्धकृताऽनेन ग्रन्थोपक्रमणिकायामष्टषष्टितरङ्गा लिख्यन्ते इति प्रतिज्ञातं किन्तु संगृहीतेषु त्रिष्वेवादर्शपुस्तकेषु षट्षष्टितरङ्गात् परं समाप्तमिति लिखनं दृश्यते परन्तु राघवपुरीय ग-चिह्नितपुस्तकोपसंहारे लेखकेन एवं लिखितं यथा-इतःपरं ऋणापाकरण-रक्षोघ्नाचारवर्णन-भारतादिश्रवणरूपतरङ्गत्रयात्मकं पत्रं वा प्रचाणि आदर्शपुस्तके अभावात् न लिखितम्।

एतावता एवमपि सम्भावना नानुचिता यथा निबन्धकारः प्रतिज्ञायापि ऋणापाकरण-रक्षोघ्नाचारवर्णन-भारतश्रवणरूपतरङ्गत्रय-मौदास्यात् न लिखितमथवा लिखितमपि चिराद्विनष्टमिति।

अस्य च सम्पादनकर्म्मणि मया यथोचितः श्रमो यत्नश्च विहितः किन्तु तादृशश्रमयत्नयोरनुरूपं फलमाप्तं न वेति सन्दिह्यते इतःपरम् विद्वांसः पाठकाः प्रमाणम्।

यस्याश्चादेशेनैतत्सम्पादनकर्म्मण्यधिकारो लब्धस्तामेव प्रथमं सोसाइटीसभां प्रति सबहुमानं कृतज्ञतां प्रदर्श्य परिशेषे एतत्सभासम्पादकानां श्रीमतां श्यानम्यानेन साहेबमहोदयानां प्रति धन्यवादं ज्ञापयामि। असौ च मनीषी एतद्बृहत्कर्म्मसम्पादकतायामभिरतं संप्रेक्ष्य परामर्शदान-प्रयोजनीयपुस्तकप्रदानादेश्चदानेन च मां सर्व्वथा उपकृतमकरोत्। विश्वपतेश्चरणारविन्दयोः समर्पितमस्तु एतत्सम्पादनकर्म्म॥ इति शं।

महामहोपाध्याय—

**श्रीकमलकृष्णस्मृतितीर्थः।**

एप्रेल, १९२८। भट्टपल्ली।

२४ परगणा।

# गृहस्थरत्नाकर-विषयसूची।

## पृष्ठाङ्काः प्रदत्ताः।


| | पृः | | पृः |
|---|---|---|---|
| अग्निहोत्राधानादि ... | ६५ | गार्हस्थ्यम् ... ... | ४ |
| अतिथिपूजा ... ... | २६० | जपविधिः ... ... | २४१ |
| अधिवेदनम् ... ... | ८४ | तर्पणविधिः ... ... | २५१ |
| अनवलोकनीयानि ... | ५६० | तर्पणोत्तरकर्म्म ... | २६६ |
| अनाक्रमणीयानधिष्ठेयानि | ५५६ | त्याज्यात्याज्ये ... ... | ५६० |
| अन्यापद्वृत्तयः ... ... | ४४६ | दन्तधावनम् ... ... | १७२ |
| अभक्ष्याणि ... ... | ३५२ | दारनिरूपणम् ... ... | ४० |
| आचमनविधिः ... | १५० | दारानुक्रमणम् ... | ३४ |
| आचमननिमित्तानि ... | १६१ | दुग्धानि ... ... | ३६७ |
| आचमनापवादः ... | १६७ | दैवलक्षणम् ... ... | ६६ |
| आपद्वृत्तिः ... ... | ४२३ | द्विराचमननिमित्तानि ... | १६६ |
| आभ्यन्तरशौचम् ... | ५२३ | द्रव्याणां धर्म्माधर्म्मसत्त्वानि | ४७१ |
| आवसथ्याधानम् ... | ६२ | नियमः ... ... | ५२५ |
| आर्षलक्षणम् ... ... | ७० | निवासः ... ... | ५३० |
| आसुरलक्षणम् ... | ७२ | पक्षिणः ... ... | ३७१ |
| आह्निकम् ... ... | १३४ | पञ्चमहायज्ञाः ... | २७२ |
| कन्यावरवयःक्रमः ... | ३६ | परदारादिवर्ज्जनं ... | ५८६ |
| कन्यास्वयंवरः ... ... | ४१ | परिवेदननिषेधः | ८७ |
| कुलनाशनानि ... | ५२६ | पर्व्वकृत्यम् ... ... | ४०७ |
| कुसीदम् ... ... | ४४४ | पशुहिंसाविधिनिषेधौ ... | ३६१ |
| कृषिः ... ... | ४२६ | पश्वादयः ... ... | ३७४ |
| क्रियास्नानम् ... ... | २०६ | पाशुपाल्यम् ... ... | ४४३ |
| क्रोधादीनां परिवर्ज्जनम् | ४६५ | पैशाचम् ... ... | ७८ |
| क्षत्रियवैश्यधर्म्मवृत्तयः ... | ४६६ | प्रतिग्रहविधिः ... | ४५५ |
| गमनप्रवेशनविधिः ... | ५४७ | प्राजापत्यलक्षणम् ... | ७१ |
| गान्धर्व्वलक्षणम् ... | ७५ | प्रातःस्नानादि ... ... | १७६ |

| | पृः |
|---|---|
| ब्रह्मचर्य्यम् ... ... | ५२४ |
| ब्राह्मणधर्म्मकर्म्मवृत्तयः | ४९४ |
| ब्राह्मणस्यापद्वृत्तौ वाणिज्यम् | ४३३ |
| ब्राह्मणलक्षणम् ... ... | ६५ |
| भोजनविधिः ... ... | ३०९ |
| भोजनोत्तरकर्म्म ... | ३९६ |
| भोज्याभोज्यानि ... | ३३४ |
| मत्स्याः ... ... | ३७८ |
| मद्यापेयत्वम् ... ... | ३९३ |
| मूत्रपुरीषोत्सर्गः ... | १३६ |
| मांसभक्षणवर्ज्जनयोर्विधिः | ३८० |
| यजनयाजने ... ... | १११ |
| यमाः ... ... | ५०६ |
| रजस्वलाधर्म्मः ... ... | ४०६ |
| राक्षसलक्षणम् ... | ७७ |
| वरनिरूपणम् ... ... | २९ |
| विवाहभेदाः ... ... | ५९ |
| विवाहगुणागुणौ ... | ८१ |
| विवाह्याविवाह्यकन्यानिरूपणम् | ८ |
| वाच्यावाच्ये ... ... | ५३५ |
| शूद्रकर्म्मधर्म्मवृत्तयः ... | ४७५ |
| शूद्राप्रदेयानि ... ... | ५६३ |
| शौचम् ... | १४३, ५२२ |
| सङ्करवर्ज्जनं ... ... | ५८७ |
| सन्ध्योपासनम् ... ... | २२३ |
| सम्बन्धः ... ... | ५४ |
| स्तेयापवादः ... ... | ५१९ |
| स्नातकव्रतानि ... ... | ४८२ |
| स्नानविधिः ... ... | १९३ |

# गृहस्थरत्नाकरः ।

श्रीगणेशाय नमः ।

उज्झित्वा दिग[1]म्बरं वरतरं वासो वसानश्चिरं
[2]हित्वा भैक्ष्यमनातुरो रतिकरस्थानं समालम्बितः ।
त्यक्त्वा भस्म कृताङ्गरागसुरभिः श्रीखण्डसारद्रवै-
र्देवः पातु हिमाद्रिजापरिणयं कृत्वा गृहस्थः शिवः ॥ १ ॥

अध्याप्य श्रुतिमङ्गषट्कसहितां यो ब्रह्मचर्य्याश्रयो[3]
गार्हस्थ्ये समयोजयत् द्विजगणान् वित्तैः कृतार्थीकृतान् ।
स श्रीमान् महितः समस्तसचिवश्रेणीषु चण्डेश्वरो
मीमांसाशरणो[4] गृहस्थविषयं प्रस्तौति रत्नाकरम् ॥ २ ॥

[5]गार्हस्थ्याख्यतरङ्गोऽत्र प्रथमं परिकीर्त्तितः ।
विवाह्याविवाह्यकन्याया निरूपणमतःपरम् ॥ ३ ॥

---

१ (ख) उज्झित्वादिमम् ।
२ (ख) पुस्तके—हित्वावासरसं पुनः पितृवने कैलासहर्म्याश्रयः ।
३ (ख) —चर्य्याश्रमे ।    ४ (ग) प्रावलम् ।
५ (ख) पुस्तके अधिकः श्लोकः—

ब्रह्माण्डं ब्रह्मकल्पो वसनमणिगणालङ्कृतं गोसहस्रं
सत्कामा कामधेनुं त्रिभुवनतिलकाश्चावनी कल्पवल्ली । ?
हेमाकल्पं गजानां शतमदित महाभूतकुम्भं सयत्नं
सत्सङ्गिः ? सप्तसिन्धोः कनकमयतुलापुरुषं पौरुषेण ॥

निरूपणं वरस्याथ दारानुक्रमणान्ततः ;
कन्यायाश्च वरस्याथ वयःक्रमनिरूपणम् ॥ ४ ॥
दातुर्निरूपणञ्चाथ ततः कन्यास्वयंवरः ।
स्त्रीपुंसयोश्च सम्बन्धो भेदः परिणयस्य च ॥ ५ ॥
गुणागुणौ विवाहस्य प्रोच्यते चाधिवेदनम् ।
परिवेदनक्रियायाश्च निषेधस्तदनन्तरम् ॥ ६ ॥
आवसथ्यस्य चाधानमग्निहोत्रञ्च कीर्त्यते ।
यजनं याजनञ्चास्मिन्नाह्निकञ्च ततःपरम् ॥ ७ ॥
ततो मूत्रकृताशौचमाचमनमतःपरम् ।
आचमने निमित्तञ्च निमित्तञ्च द्विराचमे ॥ ८ ॥
[1]अपवादश्चाचमने ततः स्याद्दन्तधावनम् ।
प्रातःस्नानादिकञ्चाथ क्रिया स्नानविधिस्ततः ॥ ९ ॥
तस्माज्जपविधिः प्रोक्तस्सन्ध्योपासनतर्पणे ।
तर्पणोत्तरकर्म्माऽथ कथ्यतेऽस्मिन् यथायथम् ॥ १० ॥
ततः पञ्च महायज्ञास्ततश्चातिथिपूजनम् ।
भोजनस्य विधिश्चाथ भोज्याभोज्यविधिस्ततः ॥ ११ ॥
अभक्ष्यविधिरेतस्मिन् मांसभक्षणवर्ज्जनम् ।
पशुहिंसाविधित्यागस्तत्र[2][ऽस्मिन् प्रकीर्त्तितः ॥ १२ ॥
मद्यापेयत्वमुक्तञ्च] भोजनोत्तरकर्म्म च ।
ततो रजस्वलाधर्म्मः पर्व्वकृत्यमनन्तरम् ॥ १३ ॥

---

१ (ख) अपवादोऽथाचमने ।
२ [ ] (ख) पुस्तके चिह्नितांशो नास्ति ।

विप्रकर्म्म-धर्म्म-वृत्तिरापद्वृत्तिरनन्तरम् ।
कृषिरापदि वाणिज्यं पाशुपाल्यमतःपरम् ॥ १४ ॥
कुसीदं ब्राह्मणस्यास्मिन्नन्यापद्वृत्तयस्ततः ।
प्रतिपक्षः क्षत्रवैश्यधर्म्मकर्म्मप्रवृत्तयः ॥ १५ ॥
द्रव्यधर्म्माधर्म्मतत्त्वं शूद्रधर्म्मप्रवृत्तयः ।
स्नातकव्रतमेतस्मिन् संयमो नियमस्ततः ॥ १६ ॥
स्तेयापवादश्शौचञ्च ब्रह्मचर्य्यमतःपरम् ।
नियमः कुशलाद्योऽथ निवासस्तदनन्तरम् ॥ १७ ॥
वाच्यावाच्ये ततः पश्चाद्गतो गमप्रवेशने[1] ।
अनाक्रम्यानधिष्ठेयमविलोक्यमतःपरम् ॥ १८ ॥
ततः शूद्राप्रदेयानि परदारादिवर्ज्जनम् ।
वर्ज्जनं सङ्करस्याथ त्याज्यात्याज्ये ततःपरम् ॥ १९ ॥
ऋणापाकरणञ्चाथ रक्षोघ्नाचारवर्णनम् ।
श्रवणे भारतादीनां विधानञ्च प्रकीर्त्तिताः ॥ २० ॥
गृहस्थरत्नाकरेऽस्मिन् श्रीचण्डेश्वरमन्त्रिणा ।
मिथिलापृथिवीनाथ-सन्धिविग्रहकारिणा ।
अष्टषष्टिरमी [2]स्पष्टास्तरङ्गाश्चित्तरञ्जदाः ॥ २१ ॥

---

१ (ख) गमनवेशने ।    २ (क) अमी शुभ्राः ।

## अथ गार्हस्थ्यम् ।

तत्र ब्रह्मचारिधर्म्ममभिधाय मन्वर्त्तः—

एष धर्म्मः समाख्यातः प्रथमाश्रमिणि द्विजे ।
अतःपरं समावृत्तः कुर्य्याद्दारपरिग्रहम् ॥

समावृत्तो गुरुकुलादेत्य कृतस्नानादि(ख)संस्कारः ।

मनुः—

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुत[१]ब्रह्मचर्य्यो गृहस्थाश्रममाविशेत् ॥

वेदानधीत्य वेदौ वा वेदं वेति विकल्पः पुरुषशक्तिमपेक्ष्य यथाक्रमं शास्त्राभिहिताध्ययनपौर्व्वापर्य्यानुसारेण, अविप्लुतब्रह्मचर्य्यः शास्त्रोदिताङ्गब्रह्मचर्य्य अधीत्येत्यन्वयः ।

अतएव यमः—

वेदं वेदौ च वेदान् वा ततोऽधीत्य यथाविधि ।
[२]अविशीर्णब्रह्मचर्य्यो दारान् कुर्व्वीत धर्म्मतः ॥

एवञ्च विशीर्णब्रह्मचर्य्यस्याकृतप्रायश्चित्तस्य उत्तरस्मिन् आश्रमे अनधिकार इति द्योतितं भवति विशेषणोपादानात्[३] ।

तथा—

गुरूणामनुमत्या च समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विताम् ॥

लक्षणान्वितां शुभसूचकशारीरचिह्नयुक्ताम् ।

१ (ख) ऽविप्लीर्णा— । २ (क) अवशीर्णा ।
३ (ख) विशेषणोपादानवशात् ।

यमः—

गुरुं वा समनुज्ञाय प्रदाय गुरुदक्षिणाम्।

सदृशानाहरेद्दारान् मातापितृमते स्थितः॥

वा शब्दो नैष्ठिकापेक्षया तेन गुर्वनुज्ञया गुरुदक्षिणां दत्त्वा सदृशान् दारानाहरेत् नैष्ठिकब्रह्मचारी वा स्यादित्यन्वयः। नैष्ठिकब्रह्मचारी यावज्जीवब्रह्मचारी। समनुज्ञायेति समनुज्ञाप्येत्यर्थः।

नारदः—

ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परिग्रहे।

सजातिः श्रेयसी भार्य्या सजातिश्च पतिः स्त्रियाः॥

सजातिर्ब्राह्मणत्वादिना समानजातिः श्रेयसी श्रेष्ठा।

वसिष्ठः—

गृहस्थो विनीतक्रोधहर्षो गुरुणाऽनुज्ञातः स्नात्वाऽसमानार्षेयीमस्पृष्टमैथुनामवरवयस्काम् सदृशीं भार्य्यां विन्देत।

गृहस्थ इति भाविनि भूतोपचारस्तद्धर्म्मप्राप्त्यर्थः॥ तेनाकृतदारोऽपि गार्हस्थ्यसंकल्पवानाश्रमान्तरनिवृत्तो गृहस्थधर्म्मेष्वधिक्रियत इति। [भर्तृयश्च इति लक्ष्मीधरः][1]।

बृहस्पतिः—

समानामुद्वहेत् पत्नीं कुलशीलवयोगुणैः।

तया सह चरेद्धर्म्मं श्रौतस्मार्त्तं च शक्तितः[2]॥

समानामनुरूपां सानुरूपत्वञ्च—

---

१ [ ] चिह्नितांशः (क) (ग) पुस्तके नास्ति।

२ (क) पुस्तके सम्मतः।

वर्षैरेकगुणां भार्य्यामुद्वहेत त्रिगुणः पुमान्।

इत्यादिनोक्तम्।

मनुः— तं प्रतीतं स्वधर्म्मेण ब्रह्मदायहरं पितुः।

स्रग्विनं तल्प आसीनमर्हयेत प्रथमं गवा॥

तं ब्रह्मचारिणं प्रतीतं प्रतिनिवृत्तं ब्रह्मचर्य्याश्रमात् प्रतिनिवृत्य गार्हस्थ्याश्रमप्रवेशोन्मुखं स्वधर्म्मेण दक्षिणादानादिना ब्रह्मदायहरं ब्रह्मैव वेद एव दायो धनं ब्रह्मदायः, तेन पितुस्सकाशात् गृहीतवेदमित्यर्थः। पितुस्सकाशादिति प्रायोवादः। अर्हयित्वा पूजयेत्, पित्रादिभिरिति शेषः। गवा मधुपर्केण।

हारीतः—

गुरुणाऽनुज्ञातोऽलङ्कारादीन् गृह्णीयात् नित्यमुत्तरकालं यथार्थं चैतान् बिभृयात्। आमन्त्र्य गृहानेत्य विधिवत् दारानागृह्याग्नीनाधाय उञ्छशिलाभ्यामयाचितोपपन्नं साधुभ्यो याचनात् सद्यो वा अयाचनात् देवपितृमनुष्यार्थं वृत्त्यादानं कुर्व्वीत नात्मार्थं।

अलङ्कारादीन् स्वगृह्यकथितकुण्डलादीन् आदिशब्देन गृह्योक्तदण्डादिग्रहणं। नित्यमुत्तरकालं समावर्त्तनोत्तरकालं यथार्थं यथाप्रयोजनं समावर्त्तनकाले तु नित्यमेव धारणम्।

यमः—

एकं द्वौ त्रीन् वा वेदानधीत्य गुरुं परितोष्यानुज्ञातो मुञ्जाद्यपनयनं कृत्वा सवर्णां परिणीयावसथ्याधानं कृत्वाऽतिथीन् पूजयेत्।

---

१ (ख)—आहृत्य।

ब्राह्मादिना विवाहेन सवर्णां परिणीयावसथ्याधानं कुर्व्वीतेत्यर्थः। दारपरिग्रहकालानन्तरमेवावसथ्याभिधानात्। ब्राह्मादिना विवाहेन ऋतुकालाभिगामी पुत्रानुत्पाद्यावसथ्याधानं कुर्व्वीतेत्यन्यथः। दारपरिग्रहकालानन्तरमावसथ्याभिधानात्।

काश्यपः—

दाराधीनाः क्रियाः सर्व्वा ब्राह्मणानां विशेषतः।
दारान् सर्व्वान् प्रयत्नेन विशुद्धानुद्वहेत्ततः॥
देवतानां नमस्कारः पितृणाञ्चोदकक्रियाः।
दारतः संप्रवर्त्तन्ते दाराः स्वर्गस्य संक्रमः॥
इत्येतत् कश्यपमतं ब्राह्मणस्यानुशासनम्॥

विशुद्धान् कुलतः स्वरूपतश्च उद्वहेत् परिग्रहेत्[1]।

॥इति महामहेन्द्र-महाराजाधिराज-श्रीहरसिंहदेव-महासान्धिविग्रहिक-वीरेश्वरात्मज-सप्रक्रिय-महासान्धिविग्रहिक-श्रीचण्डेश्वरविरचिते गृहस्थरत्नाकरे गार्हस्थ्यतरङ्गः॥

---

१ (ख) परिणयेत्।

## अथ विवाह्याविवाह्यकन्यानिरूपणम्।

तत्र मनु-शातातपौ[1]—

> असपिण्डा तु या मातुरसगोत्रा च या पितुः।
> सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने॥

मातुरसपिण्डा मातुलदुहित्रादिभ्यो अन्या, "असपिण्डेति समान एकः पिण्डो देहो[2] यस्याः सा सपिण्डा न तथा असपिण्डा, सपिण्डता च एकदेहावयवान्वयेन भवति।

तथाहि—

पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सह। एवं पितामहादिभिरपि पितृद्वारेण शरीरावयवान्वयतः। एवं मातृशरीरावयवान्वयेन मात्रा तथा मातामहादिभिरपि मातृद्वारेण।

तथा मातृस्वसृ-मातुलादिभिरप्येकशरीरावयवान्वयात् तथा पितृस्वस्रादिभिरपि। तथा पत्या सह पत्न्या एकशरीरारम्भकतया। एवं भ्रातृभार्य्याणामपि एकशरीरारम्भकैः स्वस्वपतिभिः सहैकशरीरारम्भकत्वेन।

एवं यत्र यत्र सपिण्डशब्दस्तत्र साक्षात् परम्परया एकशरीरावयवान्वयेन ज्ञेय इति मिताक्षराकारः।

दारकर्म्मणि दारत्वजनके विवाहे मैथुने मिथुनसाध्यधर्म्मपुत्रोत्पत्त्यादौ। मैथुने मिथुनशब्दवाच्यस्त्रीपुंससाध्ये स्वाश्रमादिकर्म्मणि न केवलं स्त्रीसाध्यपाकादिकर्म्मणि अपि तूभयसाध्येऽपीति कल्पतरुः।

---

१ (ख) मनुगौतमौ।

२ मूलपुस्तके देहावयवः।

गौतमः—

असमानप्रवरैर्विवाह ऊर्द्ध्वं सप्तमात् पितृबन्धुभ्यः बीजिन(भ्य)श्च मातृबन्धुभ्यः पञ्चमाच्च। समानप्रवरत्वञ्च प्रवरस्य संख्या-संज्ञयोस्तुल्यत्वे।

यथा—वात्स्यसावर्णयोरौर्व्वादीनां पञ्चतया संज्ञया चौर्व्वा-दिकल्पया।

पितृबान्धवाः—

पितुः पितुः स्वसुः पुत्राः पितुर्मातुः स्वसुः सुताः।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः॥

इति वाक्योक्ताः।

बीजिनश्चेत्यत्रापि ऊर्द्ध्वं सप्तमादिति योज्यम्। बीजी च परक्षेत्रे योऽपत्यमुत्पादयति॥

मातुर्मातुः स्वसुः पुत्रा मातुर्पितुः स्वसुः सुताः।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः॥ इति वाक्योक्ताः।

एषां यः पञ्चमस्तत ऊर्द्ध्वं विवाहः।

यदाह याज्ञवल्क्यः—

अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्।
पञ्चमात् सप्तमादूर्द्ध्वं मातृतः पितृतः क्रमात्॥

पञ्चमात् सप्तमादिति यथासंख्यमन्वयः। भ्रातृमतीमिति पुत्रि-काशङ्कानिवृत्त्यर्थं, आर्षं नाम प्रवरमित्यन्वयः, गोत्रं काश्यपादि, आर्षगोत्रे समाने यस्याः सा समानार्षगोत्रजा न तथाऽसमानार्ष-गोत्रजा।

पैठीनसिः—

असमानार्षेयीं कन्यां वरयेत् पञ्च मातृतः सप्त पितृतः परिहरेत्। त्रीन् मातृतः पञ्च पितृत इति वा।

समानजातीयाविवाहे पञ्च मातृतः सप्त पितृतः। असमानजातीयाविवाहे त्रीणित्यादिव्यवस्थाविकल्पः।

सुमन्तुः—

पितृस्वसृसुतां मातुलसुतां समानार्षेयीं विवाह्य चान्द्रायणञ्चरेत् परित्यज्य चैनां बिभृयात्।

अयञ्च मातृसगोत्रानिषेधो मातृसम्बन्धित्वेन जन्मपरम्परानाम्नः प्रत्यभिज्ञायां सत्याम्।

अतएव व्यासः—

सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्म्मणि।
जन्मनाम्नोरविज्ञाने उद्वहेताविशङ्कितः॥

इदञ्च व्यासाभिधानं हलायुधेन पुत्रिकापुत्रविषयमिति यल्लिखितं तच्चिन्त्यं लक्ष्मीधराद्यस्वरसात्।

पैठीनसिः—

कुलोत्पन्नां युक्ताचारां वरयेत्। पितृमातृस्वसृदुहितरो मातुलसुताश्च धर्म्मतस्ता भगिन्यो वर्ज्जयेत्॥

असमानार्षेयीमित्यादि पैठीनसिवाक्येनैव पितृमातृस्वसृदुहित्रादौ निषेधे सिद्धे पुनर्निषेधो दोषातिशयबोधनार्थः।

दोषातिदोषे मनुः—

पैतृस्वसेयीं भगिनीं स्वस्रीयां मातुरेव च।

मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणञ्चरेत् ॥
एतास्तिस्रस्तु भार्य्यार्थे नोपयच्छेत बुद्धिमान् ।
ज्ञातित्वेनानुपेयास्ताः [1]पतति ह्युपयन्नधः ॥ इति

आप्तस्य सहोदरस्य दुहितरमिति शेषः । मातुलसुतानिषेधः स्तत्यन्तरेऽपि ।

सुमन्तुः—पितृमातृसम्बन्धा आसप्तमादविवाह्याः कन्या भवन्ति आपञ्चमादन्येषां। सर्व्वाः पितृपत्न्यो मातरस्तद्भ्रातरो मातुलाः तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि। अन्यथा सङ्करकारिण्यः। [2]तस्याध्यापयितुरेतदेव । आपञ्चमादिति मातृसपिण्डाविषयम् ।

मातुः सपिण्डा यत्नेन वर्ज्जनीया द्विजातिभिः ।

इति व्यासवचनात् ।

तद्भ्रातरः सोदराः तत्रैव भ्रातृशब्दस्य शक्तेः । एवञ्च पूर्व्वमाप्तस्येति विशेषणमनुवादः । एवमेव हलायुधादयः ।

अन्यथा एषामनन्तराभिहितानां कन्याः परिणीताः सङ्करकारिण्यः सङ्करार्थत्वादधर्म्मकारिण्यो भवन्ति ।

तस्याध्यापयितुस्तद्विवाहजनकमन्त्राध्यापयितुः। एतदेव सङ्करकारित्वमेव इत्यर्थः ।

उद्वहेत् पितृमातृभ्योऽस्तु सप्तमीं पञ्चमीं तथा ।

इति मार्कण्डेयपुराणात् ।

पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम् ।

---

१ (क) पुस्तके पतति परिचयन्नधः ।
२ (ख) पुस्तके तथाऽध्यापयितुः ।

गृहस्थ उद्वहेत् कन्यां न्यायेन विधिना नृप ॥

इति विष्णुपुराणाच्च ।

अत्र विरोधो भासते—

तत्र च उद्वाहपदार्थस्य धनार्जनस्येव रागपरिप्राप्ततया न विधेयत्वमिति व्यवच्छेद एव वाक्यार्थः स च न श्रुत इति विलम्बिता प्रतिपत्तिः । निषेधवाक्येषु च तादृग्व्यवच्छेदस्य स्पष्टत्वात्[१] अविलम्बिता सा ।

अतएव तद्बलेन मार्कण्डेय-विष्णुपुराणवाक्ययोर्विरुद्धाभासयोरन्यथावर्णनं । तत्र च यदि पदार्थः सहसंसर्गो वाक्यार्थ इति नियमस्तदा पञ्चमीसप्तमीपदाभ्यां यथायथं षष्ठी अष्टमी च सामीप्यलक्षणया विवक्षिता तथाऽप्यपदार्थोऽन्यासम्बद्धो[२] वाक्यार्थः, तदा तादृश एव निषेधोऽत्र वाक्यार्थ इत्युभयथापि न विरोधः । अविगीत-सकलशिष्टसम्प्रदायोऽप्येवम् ।

मनुः—

अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् ।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥

सौम्यनाम्नीमनुद्वेगजनकनाम्नीं । यथा धीरा वामा इत्यादि । तन्विति— तनवः सूक्ष्माः केशदशना यस्याः सा तथा ।

शातातपः—

हंसस्वनां मेघवर्णां मधुपिङ्गललोचनाम् ।
ईदृशीं वरयन् कन्यां गृहस्थः सुखमेधते ॥

---

१ (ख) स्फुटत्वात् । २ (ख) पुस्तके ऽप्यतत्संसर्गोऽपि ।

मेघश्यामां स्निग्धश्यामरूपां मधुपिङ्गललोचनां मधुवदीषत्-पिङ्गले लोचने यस्याः तथा सुखमेधते सुखं यथा स्यादेवं बर्द्धते।

आश्वलायनः—

बुद्धिसम्बन्धलक्षणा[१]नुपलक्षेत।
लक्षणामिति शुभसूचकाङ्गानि॥

तानि भविष्यपुराणे व्यक्तानि— तथा—

प्रतिष्ठिततलास्सम्यक् रक्ताम्भोजसमत्विषः।
ईदृशा चरणा धन्या योषितां भोगवर्द्धनाः॥

प्रतिष्ठिततलाः भूभागलग्नसमस्तचरणाग्रभागाः।

करालैरतिनिर्मांसै रुक्षैरथ शिराततैः।
दासीत्वं दुर्भगत्वञ्च प्राप्नुवन्ति न संशयः॥

करालैरतिभयङ्करैः।

अङ्गुल्यः संहता वृत्ताः ऋज्व: सूक्ष्मा नखास्तथा।
[२]कुर्व्वन्त्यनन्तमैश्वर्य्यं राजभोगञ्च योषिताम्॥

संहता अविरलाः।

ह्रस्वासु जीवितं ह्रस्वं विरला वित्तहानये।
दारिद्र्यं सूक्ष्मभुग्नासु प्रेष्यत्वं पृथुलासु च॥

ह्रस्वास्वङ्गुलीदेशासु जीवितमनुरूपह्रस्वलग्नालितं। सूक्ष्मभुग्नासु प्रथमपर्व्ववक्रासु पृथुलासु देशाननुरूपस्थौल्यासु।

परस्परंसमारूढैस्तनुभिर्ह्रस्वपर्व्वभिः।

---

१ (ख) बुद्धिलक्षणसम्पन्नाम्।
२ (क) कुर्व्वते सर्व्वमैश्वर्य्यम्।

बह्वनपि पतीन् हत्वा दासीभवति वै द्विजाः ॥
अङ्गुष्ठोन्नतपर्व्वाणः तुङ्गाग्राः कोमलान्विताः ।
रत्नकाञ्चनलाभाय विपरीता विपत्तये ॥
सुभगत्वं नखैः स्निग्धैस्ताम्रैश्च धनाढ्यता ।
पुत्राः स्युरुन्नतैरेभिः सूक्ष्मैरपि राजता ॥
पाण्डुरैः स्फुटितैरुक्षैर्नीलैर्धूम्रैस्तथा क्रूरैः ।
निःस्वता भवति स्त्रीणां पीतैश्चाभक्ष्यभक्षणम् ॥
सूक्ष्माग्राः स्निग्धवृत्ताश्च समारूढ़ाङ्गुलिकास्तथा ।
यदि स्युर्नुपुरं (?) दध्युर्वाऽन्विवाद्यैः समाप्नुयुः ॥

अङ्गुलयः—

अङ्गुलयः सरलाः पद्माभाः सुवृत्ताऽल्पतनूरुहाः ।
अग्राः कुर्व्वन्ति सौभाग्यं यानस्य गजवाजिभिः ॥
[1]कुप्यते लोमजङ्घास्त्री भ्रमते [2]बद्धपिण्डिका ।
काकजङ्घा पतिं हन्ति वाचाला कपिला च या ॥
जानुभिश्चैव मार्ज्जार-सिंहजान्वनुकारिभिः ।
श्रियमाप्य सुभाग्यस्य प्राप्नुवन्ति सुतांस्तथा ॥
घटाभैरध्वगा नार्य्यो निर्मांसैः कुलटाः स्त्रियः ।
शिरालैरपि सिंहास्या विश्लिष्टैर्धन[3]वर्ज्जिता ॥
अत्यन्तकुञ्चिते ह्रस्वैः स्फुटिताग्रैर्गुरुप्रभैः ।
अनेकग्रस्तथा रोमैः केशैश्चापि तथाविधैः ॥

---

१ (ख) क्लिश्यते ।　　　२ मूले उद्धतपिण्डिका ।
३ (क) बल— ।

अत्यन्तपिङ्गला नारी विषकन्येति[1] विश्रुता ।
सप्ताहाभ्यन्तरे [2]स्त्रीयं पतिं हन्यान्न संशयः ॥
हस्तिहस्तनिभैर्वृत्तैरलोमैः[3] करभोपमैः ।
प्राप्नुवन्त्यूरुभिः शश्वत् स्निग्धैः सुखमनङ्गजम् ॥
दौर्भाग्यं बहुमांसाभिर्वन्ध्यत्वं लोमशालिभिः[4] ।
[5]सव्यावर्त्तं समं चारु सूक्ष्मरोमततं पृथु ॥
जघनं शस्यते स्त्रीणां रतौ सौख्यकरं स्त्रियाः ।
ऊर्द्ध्वं रोमतले यस्याः समं सुश्लिष्टसंस्थितम् ॥
अपि नीचकुलोत्पन्ना राजपत्नी भवत्यसौ ।[6]
अश्वत्थपत्त्रसदृशः कूर्म्मपृष्ठाकृतिस्तथा ।
शशिबिम्बनिभश्चापि तथा च शकटाकृतिः ॥
भगः शुभकरः स्त्रीणां रतिप्रीतिविवर्द्धनः ॥
तिलपुष्पसदृक् यस्तु यश्चाश्वखुरसन्निभः ।
द्वावप्येतौ पररतौ कुर्व्वीत च दरिद्रताम् ॥
उदूखलनिभः शोकं मरणं विवृताननः ।
निरूपैरतिनिर्मांसैर्गजाश्वसमरोमभिः ॥

---

१ (ख) तुल्येति निश्चितं ।
२ (क) जाया (ग) पापा वा ।  ३ (ख) रम्भाभैः ।
४ (ख) रोमशोरुभिः ।  ५ मूलपुस्तके सव्यावर्त्तं ।
६ मूले अधिकं पद्यम्—
अरोमकं भगं यस्याः समं सुश्लिष्टसंस्थितं ।
अपि नीचकुलोत्पन्ना राजपत्नी भवत्यपि ।

दौःशील्यं दुर्भगत्वञ्च दारिद्र्यञ्चाधिगच्छति ।
कपित्थफलसङ्काशः पीनो वलिविवर्ज्जितः ॥
स्फीतः[१] प्रशस्तो नारीणां निन्दितोऽस्त्वन्यथा विदुः ।
पयोधरभराक्रान्तः प्रवरश्चिवली गुरुः ॥
मध्यः शुभावहः स्त्रीणां रोमराजीविभूषितः ।
पणवाभैर्मृदङ्गाभैस्तथा मध्ये यवोदरैः ॥
प्राप्नुवन्ति भयायासं दौःशील्यमपि चेदृशैः ।
[२]अवक्रमुल्वणं पृष्ठमरोमं सुसमाहितम् ॥
नानापुष्पाद्यपर्य्यङ्कं रतिसौख्यकरं परं ।
कुब्जमद्रोणिकं पृष्ठं रोमशं यदि योषितः ॥
स्वप्नान्तेऽपि सुखं तस्य नास्ति हन्यात् पतिञ्च सा ।
विपुलैः सुकुमारैश्च कुचिभिश्च बहुप्रजाः ॥
मण्डूककुचा च या नारी राजानं सा प्रसूयते ।
उन्नतैर्वलिभिर्वन्ध्याः सुवृत्तैः[३] कुलटाः स्त्रियः ॥
आरकर्म्मरता सा स्यात् न प्रभुं स्वं समाप्नुयात् ।
उन्नतावनतैः चुद्रा विषमैर्विषमाशया ॥
[४]सा सुरैश्वर्य्यसम्पन्ना वनिता हृदयैः समैः ।
सुवृत्तमुन्नतं पीनमधरोन्नतमायतम् ॥
स्तनयुग्ममिदं शस्तमतोऽन्यदसुखावहम् ।
उन्नतिः प्रथमे गर्भे द्वयोरेकस्य भूयसी ॥

---

१ (ग) स्निग्धः । २ (क) (ग) पुस्तकद्वये सुवक्रं ।
३ (ख) सावर्त्तैः । ४ मूले आयुरैश्वर्य्य— ।

वामे तु जायते कन्या दक्षिणे जायते सुतः ।

एवंविधाः श्लोकाः प्रसङ्गेन लिखिताः ।

दीर्घं तु [1]चिबुके यस्याः सा स्त्री धूर्त्ता रतिप्रिया ॥
प्रविष्टे तु पुनर्यस्या द्वेष्टि सा पुरुषं सदा ।
स्तनैः सर्पफणाकारैः श्वजिह्वाकृतिभिस्तथा ॥
दारिद्र्यमधिगच्छन्ति स्त्रियः पुरुषचेष्टिताः ।
आरकूटघटैस्तुल्यैर्भवन्ति हि तथा द्विजाः ॥

आरकूटघटैस्तुल्यैः पित्तलघटसदृशैः ।

सुसमं मांसलञ्चाथ शिरारोमविवर्ज्जितम् ।
वक्षो यस्या भवेन्नार्य्या भोगान् भुङ्क्ते यथेप्सितान् ॥
हिंस्रा भवति वक्रेण दौःशील्यं रोमशेन तु ।
निर्मांसेन तु वैधव्यं विस्तीर्णे कलहप्रिया ॥
चतस्रो रक्तगम्भीरा रेखाः स्निग्धाः करे स्त्रियाः ।
यदि स्युः सुखमाप्नोति विच्छिन्नाभिरनीशता ॥
रेखा कनिष्ठिकामूलात् यस्याः प्राप्ता प्रदेशिनीम् ।
शतमायुर्भवेत्तस्या ऊनाया मूलताक्रमात् ॥
संवृत्ताः समपर्व्वाणस्तीक्ष्णाग्राः कोमलत्वचः ।
समाः स्वङ्गुलयो यस्याः सा नारी भोगवर्द्धिनी ॥
बन्धुजीवारुणैस्तुङ्गैर्नखैरैश्वर्य्यमाप्नुयात् ।
नखैर्भुग्नैर्विवर्णाभैः श्वेतपीतैरनीशता ॥
रक्तैर्मृदुभि[2]रैश्वर्य्यं त्रिविधाङ्गुलिभिर्द्विजाः ।

---

१ (ग) चूचुके ।  २ (क) (ख) मूर्द्धभिः

स्फुटैरविरलै रुचैः क्लेशं पाणिभिराप्नुयुः ॥
समरेखा यवा यासामङ्गुष्ठाङ्गुलिपर्व्वसु।
तासां हि विपुलं सौख्यं धनं धान्यं तथाऽक्षयम् ॥
मणिबन्धोऽव्यवच्छिन्नो रेखात्रयविभूषितः।
दधाति नःचिरादेव मणिकाञ्चनमण्डनम् ॥
[१]श्रीवत्साम्बुजशङ्खाङ्क-गजवाजिनिवेशनैः।
चक्रस्वस्तिकवज्रासिपूर्णकुम्भनिभाङ्कुशैः ॥
प्रासादच्छत्रमुकुटैर्हारकेयूरमण्डलैः।
शङ्खतोरणनिर्य्यूहैर्हस्तन्यस्तैर्नृपस्त्रियः ॥
यस्याः पाणितले रेखा [२]यूपकुम्भाश्च कुण्डिकाः।
दृश्यन्ते चरणे यस्या यज्ञपत्नी भवत्यसौ ॥
वीथ्यापणतुलामानैस्तथा मुद्रादिभिः स्त्रियः।
भवन्ति वणिजां पत्न्यो रत्नकाञ्चनशालिनाम् ॥
दात्र-योक्त्र-युगाबन्ध-फालोदूखललाङ्गलैः।
भवन्ति धनधान्याढ्याः कृषीवलजनाङ्गनाः ॥
कोमलं मांसलञ्चैव पीनं रोमविवर्ज्जितम्।
गोपुराकृति नारीणां भुजयोर्युगलं शुभम् ॥
निगूढग्रन्थयो यस्या दशना [३]लोमवर्ज्जिताः।
बाहवो ललिता यस्याः प्रशस्ताह्वत्तकोमलाः ॥
दशना दर्शनीया यस्यास्तस्याः शुभमित्यनुषङ्गः।

---

१ मूले श्रीवत्सध्वजपद्माद्य। २ (ग) रक्ता यूपाश्च कुण्डिकाः।
३ (ग) कूर्परा।

तनुभारनतश्चैव नातिस्थूलो न रोमशः ।
स स्कन्धस्तु सदा स्त्रीणां सौभाग्यारोग्यवर्द्धनः ॥
स्थूले स्कन्धे वहेद्भारं रोमशे व्याधिता भवेत् ।
वक्रे स्कन्धे भवेद्वन्ध्या कुलटा चोन्नतानते ॥
स्पष्टं रेखात्रयं यस्या ग्रीवायां चतुरङ्गुलम् ।
मणिकाञ्चनमुक्ताढ्यं स दधाति विभूषणम् ॥
अधना स्त्री कृशग्रीवा दीर्घग्रीवा च बन्धकी ।
ह्रस्वग्रीवा स्थिरापत्या स्थूलग्रीवा च दुःखिता ॥
अनुन्नता समांसा च समा यस्याः कृकाटिका ।
सुदीर्घमायुस्तस्यास्तु चिरं भर्त्ता च जीवति ॥
निर्मांसा बहुमांसा च शिराला रोमशा तथा ।
कुटिला विकटा चैव त्रिस्त्रीणां सा न शस्यते ॥
न स्थूलो न कृशोऽत्यर्थं न रक्तो न च रोमशः ।
हनुरेवंविधः श्रेयान् ततोऽन्यो न प्रशस्यते ॥
चतुरस्रमुखी धूर्त्ता मण्डलास्या शठा भवेत् ।
अप्रजा वाजिवक्त्रा स्त्री महावक्त्रा च दुर्भगा ॥
श्व-वराह-वृकोलूक-मर्कटास्याश्च याः स्त्रियः ।
क्रूरास्ताः पापकर्म्माणः प्रजाबन्धुविवर्ज्जिताः ॥
मालतीवकुलाम्भोजनीलोत्पलसुगन्धि यत् ।
वदनं मुच्यते नैतत् पानताम्बूलभोजनैः ॥
ताम्राभः किञ्चिदानम्रः स्थौल्यह्रास्यविवर्ज्जितः ।
अधरो यदि तुङ्गश्च नारीणां भोगदः सदा ॥

स्थूले कलहशीला स्यात् विवर्णे चातिदुःखिता ।
उत्तरोष्ठेन तीक्ष्णेन वनिताऽत्यन्तकोपना ॥
जिह्वा तनुतराऽवक्रा नासा दीर्घा च शस्यते ।
स्थूला दीर्घा विवर्णाग्रा वक्रा भिन्ना च निन्दिता ॥
शङ्खकुन्देन्दुधवलैः[1] स्निग्धैस्तुङ्गैरसन्धिभिः ।
मिष्टान्नपानमाप्नोति दन्तैरेभिरनिम्नगैः[2] ॥
सूक्ष्मैर्निम्नैश्चैव स्फुटितैर्विरलैस्तथा ।
सदैव दुःखिता नित्यं विकटैर्भाक्षिणी भवेत्[3] ॥
सुस्पष्टदर्पणाम्भोजपूर्णविम्बेन्दुसुप्रभम् ।
वदनं वरनारीणामभीष्टफलदं शुभम् ॥
स्थूला ह्रस्वा नातिवक्रा नातिदीर्घा समुन्नता ।
ईदृशी नासिका यस्याः सा धन्या तु शुभङ्करी ॥
उन्नता मृदुरोमाणो रेखाः शुद्धा न सङ्गताः ।
वृकाङ्कतुल्याः भ्रुवश्च योषितान्तु सुखावहाः ॥
धनुस्तुल्याभिः सौभाग्यं वन्ध्या स्याद्दीर्घरोमभिः ।
पिङ्गला सङ्गता ह्रस्वा दारिद्र्याय न संशयः ॥
नीलोत्पलदलप्रख्यैरानादैश्चारुपक्ष्मभिः ।
वनिता नयनैरेभिर्भोगसौभाग्यभागिनी ॥
खञ्जनाक्षी मृगाक्षी च वराहाक्षी वराङ्गना ।
यत्र तत्र समुत्पन्ना महान्तं भोगमश्नुते ॥

---

१ मूले धवलैः । २ (क) अनुन्नतैः ।
३ (ग) विमतिर्भवेत् ।

सुगम्भीरैरसंश्लिष्टैर्वक्ररेखाविभूषितैः ।
राजपत्न्यो भवन्तीह नयनैर्मधुपिङ्गलैः ॥
वायसक्षतिनेत्राणि दीर्घापाङ्गानि योषिताम् ।
स्नाविशालानि चाक्षूणि भर्त्तारं हि विभूतये ॥
गम्भीरैः पिङ्गलैश्चैव दुःखिताः स्युश्चिरायुषः ।
वयोमध्ये त्यजेत् प्राणान् उन्नताक्षी च याऽङ्गना ॥
वृत्ताक्षी विषमाक्षी च धूम्राक्षी श्वेतलोचना ।
वर्जनीया सदा नारी स्वनेत्रा चैव दूरतः ॥
उद्भ्रान्तकैरवैश्चित्रैर्नयनैरङ्गनास्त्विह ।
मद्यमांसप्रिया नित्यं चपलाश्चैव सर्वतः ॥
मकराकृतयः कर्णा लसत्केशाग्रसंस्थिताः ।
वहन्ति विकसत्कान्तिं स्वर्णविभूषणम् ॥
खरोष्ट्र-नकुलोलूक-कपोतश्रवणाः स्त्रियः ।
प्राप्नुवन्ति महादुःखं प्रायशः प्रव्रजन्ति वै ॥
ईषद्रापाण्डुगण्डा याः सुवृत्ताः पार्श्वकत्विषः ।
प्रशस्ता निन्दितास्त्वन्या [1]रोमकूपविभूषिताः ॥

एतत् स्त्रीभालाभिप्रायम् ।

अर्द्धेन्दुप्रतिमाभोगमरोमं सुसमान्वितम् ।
भोगसौख्यकरं श्रेष्ठं ललाटं वरयोषिताम् ॥
द्विगुणं परिणाहेन ललाटं त्रिहितश्च यत् ।
शिरः प्रशस्तं नारीणामधन्या हस्तिमस्तकाः ॥

---

१ मूले रोमकूपकदूषिताः ।

सूक्ष्माः श्लक्ष्णा मृदुस्निग्धाः कुञ्चिताग्राः शिरोरुहाः।
भवन्ति श्रेयसे स्त्रीणामन्ये स्युः क्लेशशोकदाः॥
हंसकोकिलवीणालि शिखिवेणुस्वराः स्त्रियः।
प्राप्नुवन्ति बहून् भोगान् भृत्यानाज्ञापयन्ति च॥
भिन्नकांस्यस्वरा नारी खरकाकस्वरा च या।
रोगव्याधिभयं शोकं दारिद्र्यञ्चाधिगच्छति॥
हंस-गोवृष-चक्राङ्क मत्तमातङ्गगामिनी।
स्वकुलं द्योतयेन्नारी महिषी पार्थिवस्य च॥
श्वशृगालगतिर्या स्यात् या च वायसगामिनी।
दासी मृगगतिर्नारी दुर्भगा स्याच्च वन्धकी॥
फणि(णी)नी-रोचना हेम-कुङ्कुमत्विष एव च।
वर्णाः शुभङ्कराः स्त्रीणां यस्य दूर्व्वाङ्कुरोपमः॥

वर्ण इति व्यत्ययेनान्वयः।

मृदूनि मृदुरोमाणि नात्यन्तस्वेदजानि च।
सुरभीणि च गात्राणि यासां ताः पूजिताः स्त्रियः॥

आश्वलायनः—

दुर्विज्ञेयानि यदि लक्षणानि अष्टौ पिण्डान् कृत्वा ऋतमग्रे प्रथमं यज्ञमृते सत्यं प्रतिष्ठितं यदियं कुमार्य्यभिजाता तदिदमिह प्रतिपद्यतां, यत् सत्यं तत् दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयात् एषामेकं गृहाणेति।

क्षेत्राच्चेदुभयतः शस्याद् गृह्णीयादन्नवती अस्याः प्रजा भविष्यतीति विद्यात्, गोष्ठात्, पशुमती, वेदिपुरीषात् ब्रह्मवर्च्चस्विनी,

अविनाशिनो हृदात् सर्व्वसम्पूर्णा देवनात् कितवी चतुष्पथात् विप्रव्राजिनी जारिणादनपत्या श्मशानात् पतिघ्नी।

अष्टौ पिण्डान् वक्ष्यमाणचेत्यादिमृत्तिकाभिः। गोष्ठं गवां स्थितिदेशः। वेदिपुरीषं वेदिमृत्तिका देवनं द्यूतस्थानं विप्रव्राजिनी पतिं त्यक्त्वा प्रच्छन्नजनशीला। जारिणमूषरं, पशुमतीत्यादौ सर्व्वत्र 'विद्यादिति' सम्बन्धः।

मनुः—

'महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः।
स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्ज्जयेत्॥
हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम्।
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च'॥

महान्ति बहुसम्बन्धिनी समृद्धानि सम्पन्नानि वक्ष्यमाणगवादिभिः स्त्रीसम्बन्धे विवाहे कर्त्तव्य इति विशेषः। हीनक्रियं विहितगर्भाधानादिक्रियाशून्यं निष्पुरुषं कन्योत्पत्तिभूयिष्ठं निश्छन्दः स्वाध्यायहीनः, रोमशं अत्यन्तरोमयुक्तं अर्शसं अर्शो रूपव्याधियुक्तं, क्षयि क्षयनामकव्याधियुक्तं, आमयावि भक्तामयातिरिक्तं वंशसञ्चारिरोगयुतम्।

स्फीतादपि न सञ्चारिरोगदोषसमन्वितात्।

इति याज्ञवल्क्यवचनात्।

अपस्मारि अपस्मारात्मकव्याधियुक्तं, श्वित्रि श्वेतकुष्ठयुक्तं, कुष्ठ औदुम्बरादिकुष्ठयुक्तम्।

हारीतः— श्वित्रि कुष्ठ्युदरि यक्ष्मामयाव्यनार्षेयमब्रह्मसमा-

नार्षेयमित्येतान्यपतितानि न ज्ञायन्ते तां पुत्रिकाशङ्कया न विवाहयेत् ।

पुत्रिकाधर्मश्चायं यत्पुत्रेण कन्यापिता पुत्रवान् जनकः ।

तथाचोक्तं मनुना—

अपुत्रोऽनेन विधिना सुतां कुर्व्वीत पुत्रिकाम् ।
यदपत्यं भवेत्तस्यां तन्मम स्यात् स्वधाकरम् ॥ इति ।

गौतमः—अभिसन्धिमात्रात् पुत्रिकेत्येकेषां तत् संशयात् नोपयच्छेताभ्रातृकाम् ।

अभिसन्धिमात्रात् अस्मादनुमतमेतदपत्यमित्यभिप्रायात् । मात्रपदेन अग्निं प्रजापतिं च इत्यादिगौतमोक्तः पुत्रिकाविधिव्यवच्छेदः ।

कात्यायनः—

लोकापवादयुक्ता या सा तु दुष्टा प्रकीर्त्तिता ।
अन्यत्रासक्तचित्ता या या स्यात् संसृष्टमैथुना ॥

संसृष्टमैथुना क्षतयोनिः ।

नारदः—

दीर्घकुत्सितरोगार्त्ता व्यङ्गा संसृष्टमैथुना ।
दुष्टाऽन्यगतभावा च कन्यादोषाः प्रकीर्त्तिताः ॥

दीर्घश्चिरकालव्यापी कुत्सितरोगोऽपस्मारादिः ।

विष्णुपुराणे—

तानि कुलानि वर्जनीयानि भवन्ति कुलानुरूपाः प्रजाः सम्भवन्ति पित्रादितोऽष्टौ अयज्ञियत्वादनार्षेयं अदेवत्वाद-

ब्रह्मचर्य्यमद्वैयमिति। तस्मात् सप्त पितृतः संवीक्ष्य पञ्च मातृतो नग्निकां श्रेष्ठां भ्रातृमतीं भार्यां विन्देत।

कुलानुरूपाः प्रजा भवन्तीति हेतुना पित्रादितोऽष्टकुलानि वर्ज्जनीयानि पर्य्यायमात्रादन्यर्वियं वर्ज्जनीयं मनावल मनुष्यमाण-गोत्रप्रवरत्वं तादृशस्य दत्तानधिकारात् यदैः मादव्यवर्ज्जनीयं अतश्च अविद्यमानवेदाध्ययनं अत्र हेतुरदैवत्वात् दैववर्णा प्रायशो वेदाधीनत्वात्।

नग्निका दशवार्षिकी "दशवर्षा तु नग्निका" इति भविष्य-पुराणात्।

पुनर्हारीतः—

तस्मात् कुलमत्वविद्याशीलोपपन्नां वरयेत्।
पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः॥

ऊर्द्धं सप्त पितृबन्धुभ्यः पञ्च मातृबन्धुभ्य इति पूर्व्वलिखितगौत-मादि-वाक्यदर्शनादत्रापि क्रियाकाङ्क्षया त्यजेदित्यन्वयः।

यमः—

चतुर्द्दशकुलानीमान्यविवाह्यानि निर्द्दिशेत्।
अनार्षयौ ब्राह्मणानामृत्विजाश्च विवर्ज्जयेत्॥
अत्युच्चमतिह्रस्वञ्चातिवर्णञ्च वर्ज्जयेत्।
हीनाङ्गमतिरिक्ताङ्गमामयाविकुलानि च॥
श्वित्रिकुष्ठिकुलादीनां कुर्य्याच्च परिवर्ज्जनम्।
सदा कामकुलं वर्ज्ज्यं लोमशानाञ्च यत्कुलम्॥
अपस्मारिकुलञ्चैव पापचारां कुलं भवेत्।

ऋत्विजोऽत्र निम्नयाजकाः। कामकुलं काममधानकुलं धर्म्ममनपेक्ष्य कामप्रयुक्तप्रवृत्तिप्रधानमिति यावत्। अतिवर्णमतिकृष्णामतिगौरम्।

मनुः—

नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न [1]रोगिणीम्।
नालोमिकां नातिलोम्नीं न वाचालां न पिङ्गलाम्॥
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्व्वतनामिकाम्।
नाहिपक्षिप्रेष्यनाम्नीं नातिभीषणनामिकाम्॥
यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्म्मशङ्कया॥

न ऋक्षनाम्नीं रेवत्यादिनाम्नीं न वृक्षनामिकां जयन्ती पाटलामालतीत्यादिनाम्नीं न नदीनाम्नीं यमुनादिनाम्नीं नान्त्यनामिकां शबरीत्यादिनामिकां पर्व्वतनामिकां विन्ध्यादिनामिकां पक्षिनाम्नीं कोकिलादिनाम्नीं अहिनाम्नीं शङ्खिनीत्यादिनाम्नीं प्रेष्यनाम्नीं गोपालिकेत्यादिनाम्नीं भीषणनाम्नीं भीमा कराला इत्यादिनाम्नीमिति यावत्।

यस्यास्त्विति— यस्याः पिता न ज्ञायते विशेषेण पुत्रिकाधिकारित्वेन।

विष्णुपुराणे—

नातिकेशामकेशां वा नातिकृष्णां न पिङ्गलाम्।
[1]विकलाङ्गीमधिकाङ्गीं च नोद्वहेत्॥

१ (ख) पुस्तके निसर्गतो।

नातिशुक्लां सरोगां[1] वा कुलटां चातिरोगिणीम् ।
न दुष्टां च दुष्टभावां व्यङ्गिनीं पितृमातृतः ॥
न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम् ।
न घर्घरस्वरां क्षामां तथा काकस्वरां न च ॥
नातिश्वेतेक्षणाक्षद्रक्षाक्षीं नोद्वहेत् स्त्रियम् ।
यस्याश्च रोमशे जङ्घे गुल्फौ यस्यास्तथोन्नतौ ॥
गण्डयोः कूपकं यस्या हसन्त्याश्चैव जायते ।
नोद्वहेत्तादृशीं कन्यां प्राज्ञः कार्य्यविचक्षणः ॥
नातिरूक्षकविं पाण्डुकरजामरुणेक्षणाम् ।
आपीनहस्तपादाञ्च न कन्यामुद्वहेद्बुधः ॥
न वामनां नातिदीर्घां नोद्वहेत् संहतभ्रुवाम् ।
न चातिक्छिद्रदशनां न करालमुखीं तथा ॥

अतिकेशां दीर्घकेशीं निमग्नतां विकलाङ्गीं स्वभावतो विकलाङ्गीं, व्यङ्गिनीं पितृमातृतः यस्याः पितरौ स्वभावतो व्यङ्गौ तां व्यङ्गिनीं । श्मश्रुव्यञ्जनवतीं श्मश्रुस्थाने दीर्घरोमव्यञ्जनवतीं कुलटां कुचादियुक्ताम् । क्षामामतिकृशाम् ।

नोद्वहेदित्यनुवृत्तौ ब्रह्मपुराणम्—

अलोमामतिलोमाञ्च वाचालां केकरेक्षणाम् ।

हलायुधेन—

हीनाङ्गीमतिरिक्ताङ्गीं कपिलां रोगिणीं तथा ।

---

[1] (क) पुस्तके सरोगाम् ।

अलोमामतिलोमाञ्च वर्ज्जयेत् केकरेक्षणाम् ॥

इति लिखितं केकरेक्षणां वक्रेक्षणाम्।

काश्यपः—

सप्त पौनर्भवाः कन्या वर्ज्जनीयाः कुलाधमाः।
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ॥
उदकस्पर्शिता या च या च पाणिगृहीतिका।
अग्निं परिगता या च पुनर्भूप्रभवा च या।
इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत् ॥

कृतकौतुकमङ्गला बद्धकङ्कणा उदकस्पर्शिता उदकपूर्व्वं दत्ता।

स्मृतिः— वाग्दत्ता [1]मनोदत्ता अग्निपरिगता सप्तमपदमानीता भुक्ता गृहीतगर्भा प्रसूता च सप्तधा पुनर्भूस्तां गृहीत्वा वृथाकारी न प्रजां धर्म्मम्।

आप्नोतीति शेषः प्रजां धर्म्मं धर्म्मजन्नीमाघ्न्याग्निहोत्रादि।

अत्र च प्रकरणे ये विधयो दृष्टास्ते गुणानुषङ्गिणो न भवन्ति यथा असपिण्डा तु या मातुरित्यादयः। तेषामतिक्रमे भार्य्यात्वमेव न भवति। एवं ये च निषेधास्तेन तथा तेषामप्यतिक्रमे तथात्वमेव।

यथा—नोद्वहेत् मंहत्भ्रुवामित्यादि भार्य्यादिशब्दस्य स्रुपादिशब्दवत् संस्कारमादायेव प्रवृत्तेः। येषान्तु विधीनां दृष्टगुणानुषङ्गेण प्रवृत्तिस्तदतिक्रमे न भार्य्यात्वाभावः किन्तु सगुणो न भवति।

[1] (ख) (ग) अपोदत्ता।

राजपत्न्यो भवन्तीह नयनैर्मधुपिङ्गलैः। इति।

एवं निषेधोऽपि यत्र दृष्टदोषानुषङ्गः, तदतिक्रमेऽपि न भार्य्यात्वाभावः किन्तु दृष्टमनिष्टान्तरमेव। यथा मत्यर्कापिङ्गला नारीत्यादौ।

केवलं नियमातिक्रमे यथाश्रुतप्रायश्चित्तं, कच्चवृषनदीनाम्न्यादिषु दृष्टगुणदोषानुविधायि विधिनिषेधप्रकरणकथ्यपानात्। मनुना सपिण्डादिनिषेधस्य पृथक्करणाददृष्ट एव दोषः कल्प्यः परित्यागस्तु यथा सगोत्रायाः स्मर्य्यते।

सगोत्राद्दैदमत्या उपयच्छेत् मातृवदेनां बिभृयात्। इति बौधायनवचनात् न तथा कच्चनाम्न्यादेः परित्यागाश्रवणात्। एवं वरेऽपि परिवेत्तृनपुंसकारादावथमेव प्रकारो ज्ञेयः॥

इति गृहस्थरत्नाकरे विवाह्याविवाह्यकन्यानिरूपण-तरङ्गः॥

---

## अथ वरनिरूपणम्।

तत्र मनुः—

> उत्कृष्टायाभिरूपाय वराय सदृशाय च।
> अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि॥

उत्कृष्टाय कुलशीलादिभिः। अप्राप्तामपि शास्त्रोक्तविवाहयोग्यवयोन्यूनामपि।

नारदः—

> उन्मत्तः पतितः क्रूरो दुर्भगस्त्यक्तबान्धवः।
> कन्यादोषौ तु यौ पूर्व्वाविमौ दोषगुणौ वरे॥

दुर्भगः स्त्रीणामत्यन्तं द्वेष्यः। त्यक्तबान्धवः त्यागानर्हबान्धव-त्यागी। कन्यादोषौ—

दीर्घकुत्सितरोगार्त्ता व्यङ्गा संस्पृष्टमैथुना। दुष्टान्यभावा चेत्यादि वाक्येन उक्तौ दोषौ तिवक्षितौ। पूर्व्वौ प्रथमौ।

तेन दीर्घकुत्सितरोगार्त्तत्वं व्यङ्गत्वं चेत्यादौ दोषौ विवक्षितौ दोषगुणो दोषरूपो धर्म्म इत्यर्थः।'

कात्यायनः—

निष्क्रान्तः स्वेन विद्विष्टस्तथा त्यक्तः स्वबन्धुभिः।
अन्यजातिः च्युतो दासो लिङ्गस्थश्चोदरी यदि॥
उन्मत्तः पतितः क्रूरस्तथा तुल्यः सगोत्रजः।
चक्षुःश्रोत्रविहीनश्च तथाऽपस्मारदूषितः॥
वरदोषाः स्मृता ह्येते कन्यादोषाः प्रकीर्त्तिताः।
प्राक् पश्चाद्वा समुत्पन्ना दानन्तत्र विवर्जयेत्॥

निष्क्रान्तः स्वभावाद्ग्रामान्तरपर्य्यटनकारी। दासस्तु नित्यं परतन्त्रः, लिङ्गस्थश्चोदरी यदि उदरभरणार्थं यदि आश्रम-लिङ्गधारीति कल्पतरुः।

अन्ये तु—लिङ्गस्थो यत्याश्रमलिङ्गधारी। तथा—उदरी यदि उदरभरणार्थं यावत्तावद्व्यापारकारीति द्वयमपि विवक्षितमित्याहुः।

एते च दोषाः प्राग्विवाहोपक्रमात् पश्चाद्वाग्दानादनन्तरं यदि ज्ञातास्तदा कन्यादानं दोषावहं निवर्त्तेत इति प्राग्नित्यादेरन्वयः।

मनुः—

काममामरणात्तिष्ठेद्गृहे कन्यर्त्तुमत्यपि।

न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥

लभ्यमाने गुणवति गुणहीनाय न देयेति तात्पर्य्यं न तु रजस्वला धारणीयेति।

यमः—

दद्याद्गुणवते कन्यां नग्निकामेव शक्तितः।

नत्वेव गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

शक्तितः सामर्थ्ये सति नग्निकां दशवर्षाम्।

आश्वलायनः—

कुलमग्रे परीक्षेत मातृतः पितृतश्चेति यथोक्त परस्तात् बुद्धिमते कन्यां प्रयच्छेत।

शातातपः—

वरो वरयितव्योऽर्थी कुलशीलसमन्वितः।

रूपवान् पण्डितः प्राज्ञः सुरादोषविवर्ज्जितः ॥

कन्यागुणानुक्त्वा याज्ञवल्क्यः—

एतैर्वरगुणैर्युक्तः सवर्णः श्रोत्रियो वरः।

यत्नात् परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः ॥

एतैररोगित्वादिभिः। युवा न वृद्धः।

नारदः—

परीक्ष्यः पुरुषः पुंस्त्वे निजैरेवाङ्गलक्षणैः।

पुमांश्चेदविकल्पेन स कन्यां लब्धुमर्हति ॥

सुबद्धजत्रुजान्वस्थिः सुबन्धांसशिरोऽधरः।

स्थूलघाटस्तनूरुत्वगविलम्बगतिस्वरः ॥

रेतोऽस्य प्लवते चाप्सु मूत्रञ्च फेनिलं भवेत् ।
पुमान् स्यात्लक्षणैरेभिर्विपरीतैस्तु षण्ढकः ॥

तथा—

चतुर्द्दशविधः शास्त्रे प(ष)ण्ढो दृष्टो मनीषिभिः ।
चिकित्स्यश्चाचिकित्स्यश्च तथा तेषां विधिः क्रमात् ॥
निसर्गषण्ढो वध्रश्च पक्षषण्ढस्तथैव च ।
अभिशापाद्गुरो रोगाद्देवक्रोधात्तथैव च ॥
ईर्ष्याषण्ढश्च सेव्यश्च वातरेता मुखेभगः ।
आक्षिप्तमोघबीजौ च शालीनोऽन्यापतिस्तथा ॥
तत्राद्यावप्रतीकारौ पक्षाख्यं मासमाचरेत् ।
अनुक्रमात्त्रयस्यास्य कालः सम्वत्सरः स्मृतः ॥
ईर्ष्याषण्ढादयो येऽन्ये चत्वारः समुदाहृताः ।
त्यक्तव्यास्ते पतितवत् क्षतयोन्याऽपि च स्त्रिया ॥
आक्षिप्तमोघबीजाभ्यां क्षतेऽपि पतिकर्म्मणि ।
पतिरन्यः स्मृतो नार्य्या वत्सरार्द्धं प्रतीक्षते ॥
शालीनस्यापि धृष्टस्त्रीसंयोगात् पतति ध्वजः ।
तं हीनवेगं भर्त्तारं स्त्री सर्व्वार्थैरुपाचरेत् ॥
अन्यस्यां यो मनुष्यः स्यादमनुष्यः स्वयोषिति ।
लभेत साऽन्यं भर्त्तारमेतत्कार्य्यं प्रजापतेः ॥
अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः ।
क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति ॥

सुवहं सुश्लिष्टं जत्रुः ग्रीवा स्कन्धयोः सन्धिः, घाटा ग्रीवाया

पश्चाद्भागः। निसर्गात् षण्डो लिङ्गादिशून्य एवोत्पन्नः। वध्रुः गलिताण्डादिकः, पक्षपण्डः-यस्य पक्षान्तरिता रतिशक्तिः, गुरोरभिशापात् देवक्रोधात् देवस्यापराधजनितात् क्रोधात्। भार्य्यापण्डः स्वस्त्रीविषयेर्ष्यादिना चिरं स्तम्भितरेताः। सेव्यः कामिन्या सेव्यमानो रतिशून्यः, वातरेता यस्य रतान्ते लिङ्गे वातनिःसरणमात्रम्। मुखेभगः-यो मुख एवं भगकार्य्यं करोति। आक्षिप्तरेता विसर्गसमये प्रत्यक्प्रवृत्तशीलरेताः। मोघवीर्य्यः गर्भाधानासमर्थरेताः। शालीनः-धृष्टस्त्रीसन्निधानप्रयुक्ताप्रागल्भ्येन सदा लिङ्गपातवान्, अन्यापतिः-यस्य स्वभार्य्यातो अन्यस्यामेव योषिति पुंस्त्वं, पश्चाद्यं पक्षपण्डत्वेन शङ्कितं मासमाचरेत् मासं यावत् प्रतीक्षेत। एभ्यः पूर्व्वज्ञातदोषेभ्यः कन्या न देया। यदि लज्जाभाद्देया तदा चिकित्स्ये चिकित्सां यावज्ज्ञातां प्रतीक्षेत। अचिकित्स्ये तु दत्तामपि अन्यस्मै दद्यादिति तात्पर्य्यम्।

इति सप्रक्रिय-सान्धिविग्रहिक-श्रीचण्डेश्वरविरचिते गृहस्थरत्नाकरे वरनिरूपण-तरङ्गः॥

---

## अथ दारानुक्रमणम् ।

तत्र मनुः—

सवर्णाग्रे[1] द्विजातीनां प्रशस्ता दारकर्म्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः ॥
शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृताः ।
ते च स्वा चैव राज्ञः स्युस्ताश्च स्वा चाग्रजन्मनः ॥

अस्यार्थः—.

सवर्णकन्यालाभे सैव प्रशस्ता, तदलाभे विवाहेऽमुना क्रमेण क्षत्रविट्शूद्रकन्या विवाह्याः । तत्रापि पूर्व्वपूर्व्वाभावे उत्तरोत्तरा विवाह्याः । निर्विवाहेच्छुस्तु यद्याश्रमेऽसमर्थः स्नातकव्रतैरेव वर्त्तेत ।

तथाच पैठीनसिः—

अलाभे कन्यकायास्तु स्नातकव्रतमाचरेत् ।

अपि क्षत्रियायां पुत्रमुत्पादयेत् वैश्यायां वा शूद्रायां वा । इत्यन्ये इत्यर्थः ।

यमः—

भार्य्याः स्वजात्यां सर्व्वेषां धर्म्मः प्रथमकल्पितः ।
अनुपूर्व्वेण भार्य्याः स्युस्तिस्रो ब्राह्मणस्य तु ॥
क्षत्रियस्यानुपूर्व्वेण गम्यास्तिस्रोऽवराः स्त्रियः ।
वैश्यस्यावरधर्म्मे द्वे भार्य्ये इत्यब्रवीन्मुनिः ॥
शूद्रः स्वजातीर्विन्देत तास्वपत्यं समं भवेत् ।

समत्वमिह पुत्रोत्पत्तिफलभूतपैत्रऋणापकरणमात्रेण ।

[1] मूले सवर्णाग्रे ।

अथ स्वजात्यनन्तरं नारदः—

ब्राह्मणस्यानुलोम्येन तिस्रोऽन्याः स्त्रिय एव तु।

शूद्रायाः प्रातिलोम्येन तथान्ये पतयस्त्रयः॥

द्वे भार्य्ये क्षत्रियस्यान्ये वैश्यस्यैका प्रकीर्त्तिता।

वैश्यायाः द्वौ पती ज्ञेयावेकोऽन्यः क्षत्रियापतिः॥

एकोऽन्यः अन्यजातीयः क्षत्रियापतिर्ब्राह्मण इत्यर्थः।

वशिष्ठः—

तिस्रो ब्राह्मणस्य भार्य्या वर्णानुपूर्व्वेण

द्वे राजन्यस्य एकैका वैश्य-शूद्रयोः।

शूद्रामप्येके मन्त्रवर्ज्जं तद्वत्॥

तथा— न कुर्य्याद्यतो हि ध्रुवः कुलापकर्षः प्रेत्य चास्वर्गः।

याज्ञवल्क्यः—

[1]कुलं नश्येद्द्विजातीनां शूद्रभार्य्योपसङ्गतम्।

न तन्मम मतं यस्मात्तत्र नो जायते सुतः॥

विष्णुः—

द्विजस्य भार्य्या शूद्रा तु धर्म्मार्थे न भवेत् क्वचित्।

रत्यर्थमेव सा तस्य रागार्थस्य प्रकीर्त्तिता॥

रत्यर्थमेवेत्येवकारेण पूर्व्वखण्डेन निषिद्धाऽपि धर्म्मार्थतातिशय-द्योतनाय पुनर्निषिध्यते।

---

१ (ख) पुस्तके पाठः—

यदुच्यते द्विजातीनां शूद्रभार्य्योपसंग्रहः।

न तन्मम मतं यस्मान्न तत्र जायते स्वयं॥

मनुः—

न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः ।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्य्योपदिश्यते ॥

वृत्तान्तशब्द उपाख्यानपरः ' शूद्रा भार्य्योपदिश्यते श्राद्धादि-कार्य्यार्थमित्यभिप्रेतम् ।

मनु-विष्णू—

हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु सन्तानानि च शूद्रताम् ॥

मनुः—

शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च ।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥
शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥

शूद्रावेदी शूद्राविवाहकारी इत्यत्रेर्मतम् । उतथ्यतनयस्य गोतमस्य च । शौनकस्य मते सुतोत्पत्त्या अपत्यजननात् पततीत्यर्थः ।

इयञ्च निन्दा परिणयक्रमलङ्घनेन तद्विवाहात् । शूद्रापरिणयस्य विहितत्वात् रत्यर्थमसौ न तु धर्म्मार्थमिति स्थितिः ।

अत्रैव शङ्खः—

आपद्यपि न कर्त्तव्या शूद्रा भार्य्या द्विजन्मना ।
तस्यां तस्य प्रसूतस्य निष्कृतिर्नोपपद्यते ॥

प्रसूतस्य जनितापत्यस्य ।

तपस्वी धर्म्मशीलस्य धर्म्मकर्म्मभृतां वरः।
ध्रुवं शूद्रत्वमाप्नोति शूद्रश्राद्धे त्रयोदश ॥'
सपिण्डीकरणे नार्हो न च शूद्रस्तथा ध्रुवम्।
तस्मात् सर्व्वप्रयत्नेन शूद्रां भार्य्यां विवर्ज्जयेत् ॥

यमः—

ब्राह्मणो वृषलीं गत्वा सत्यं भवति सूतकी।
अथास्यां गर्भमाधत्ते ब्राह्मण्यादेव हीयते ॥
न ब्रह्महा ब्रह्महा वै ब्रह्महा वृषलीपतिः।
यस्तत्र जायते गर्भः स तेन ब्राह्मणो हतः ॥

उशनाः—

निष्कृतिः स्यात् सुरापस्य हत्वा वा ब्रह्मवादिनम्।
वृषल्यभिप्रयातस्य निष्कृतिर्नोपपद्यते ॥

मनुयमहारीताः—

वृषलीफेनपीतस्य निःश्वासोपहतस्य च।
तस्याञ्चैव प्रसूतस्य निष्कृतिर्नोपपद्यते ॥

फेनपीतः पीतमुखलालः।

उशनाः—

पतति वृषलीपतिरित्याचक्षते न पततीत्येके। ब्राह्मणस्य कल्पविहिताश्चतस्रस्त्वानुपूर्व्वेण भार्य्या भवन्तीत्याह वसिष्ठः।

पतति न पततीति संशयः। वृषल्या पततीति हारीतः। जननात् पततीति शौनकः। तदपत्यैः पततीति गोतमः।

हारीतः—

अथावर्णेषु प्रजाय न पतति पततीति संशयः, न क्षत्रिय-विशोर्यसंयोगाद्दूषयां यः प्रजायते स पतति निमित्ते सति शयनादधस्तरां सवर्णे क्षये वा सर्व्वाण्येव जनयन् दूष्यति ।

अयमिह प्रकरणार्थः ।

द्विजातीनां सजातिकन्याया अलाभे विजातीया उत्तरोत्तरा यथाक्रमं विवाह्या एतल्लङ्घनेन पातित्यादिनिन्दानुवादो बोद्धव्यः ।

तदुक्तं ब्रह्मपुराणे—

क्षत्रविट्शूद्रकन्यास्ता न विवाह्या द्विजातिभिः ।
विवाह्य ब्राह्मणीं पश्चाद्विवाह्या क्वचिदेव तु ॥

क्वचिदेव तु कस्मिंश्चित् परिणये निमित्ते दारमरणादौ शूद्रास्वयं विशेषो यदीतरासु प्रजाया असम्भवः तदा अपत्यार्थं विवाह्येति । सहधर्म्मचारिणीति तत्तदापि सा न भवति धर्म्मार्थं न भवेदिति विष्णूक्तः ॥

यत्तु शूद्राविवाहनिषेधः स इतरा-लाभे परिणये पुत्र-पौत्रोत्पत्तौ निन्दाश्रुतिः सापीतरविषया निन्दाविशेषश्रुतिर्दोष-भयसम्बोधनार्था ।

इति गृहस्थरत्नाकरे दारानुक्रमतरङ्गः ॥

## अथ कन्यावरवयःक्रमः ।

तत्र विष्णुपुराणे—

वर्षैरेकगुणां भार्य्यामुद्वहेत् त्रिगुणः स्वयम् ।

मनुः—

त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्म्मे सीदति सत्वरः ॥

महाभारते—

त्रिंशद्वर्षः षोड़शवर्षां भार्य्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥

अत्र द्वादशवर्षकन्या त्रिंशद्वर्षेण विवाहिता प्रशस्ता भवति तथा त्रिंशद्वर्षेण षोड़शवर्षा विवाहिता प्रशस्ता भवतीति मनु विष्णुभ्यां बोधनात् एतदल्पवर्षवयस्का कन्या तत्त्रिगुणवयस्केन विष्णुपुराणानुसारेण विवाहिता प्रशस्ततरा यवीयसी तु पुंमात्रेण विवाहिता पत्नी भवति धर्म्ममूलन्तु न भवति । तदाह धर्म्मे सीदति सत्वरः, विवाहं कुर्य्यादिति वाक्यार्थः ।

इति गृहस्थरत्नाकरे कन्यावरवयःक्रमो नाम तरङ्गः ॥

---

## अथ दातृनिरूपणम् ।

तत्र याज्ञवल्क्यः—

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्व्वनाशे प्रकृतिस्थः परः परः ॥

परः पर इति दर्शनात् पूर्व्वनाशे इति द्रष्टव्यम् । प्रकृतिस्थ उन्मादादिदोषशून्यः ।

विष्णुः—

पिता पितामहो भ्राता सकुल्यो मातामहो माता चेति कन्याप्रदाः पूर्व्वाभावे प्रकृतिस्थः परः परः ।

अत्र याज्ञवल्क्यानुसारात् व्यवहारानुसाराच्च मातुरभावे मातामहाधिकार इति ज्ञेयम् ।

हलायुधे नारदवाक्यम्—

पिता दद्यात् स्वयं कन्यां भ्राता वाऽनुमते पितुः ।
मातामहो मातुलश्च सकुल्यो बान्धवस्तथा ॥
माता त्वभावे सर्व्वेषां प्रकृतौ यदि वर्त्तते ।

अत्रापि पूर्व्वोक्तयुक्तेः सर्व्वेषामितिपदेन पितृभ्रातृसकुल्या एव विवक्षिता इति मन्तव्यम् ।

अत्रैव कात्यायनः—

स्वयमेवौरसीं दद्यात् पिताऽभावे स्वबान्धवाः ।
मातामहस्ततोऽन्यां तु माता या धर्म्मजां सुता ॥

अथ पितुरभावे विशिष्य यथायथमधिकारितया याज्ञवल्क्या-

दिभिः कथिताः पितामहादयः । ततोऽन्यामौरसीं धर्म्मजा-
नियोगोत्पादिताम् ।

तथा— दीर्घप्रवासयुक्तेषु पोगण्डेषु च बन्धुषु ।
माता तु समये दद्यादौरसीमपि कन्यकाम् ॥

पोगण्डः कन्यादानानुकूलव्यापारासमर्थः । समये कन्या-
दानोचिते ।

इति गृहस्थरत्नाकरे दातृनिरूपणतरङ्गः ॥

---

## अथ कन्यास्वयम्बरः ।

तत्र नारदः—

यदा तु कश्चिन्नैव स्यात् कन्या राजानमाश्रयेत् ।
अनुज्ञया वरं तस्य परीक्ष्य वरयेत् स्वयम् ॥
सवर्णमनुरूपञ्च कुलशीलवयःश्रुतैः ।
सह धर्म्मं चरेत्तेन पुत्रांश्चोत्पादयेत्ततः ॥

तेन वरेण सहेत्यर्थः । ततो वरात् ।

याज्ञवल्क्यः—

गम्यन्त्वविद्य पुरुषं कन्या कुर्य्यात् स्वयम्बरम् ।

गम्यं गमनार्हं नारदोक्तसवर्णत्वादिधर्म्मवन्तम् ।

मनुः—

त्रीणि वर्षाण्युपासीत कुमार्य्यृतुमती सती ।
ऊर्द्ध्वन्तु कालादेतस्मात् विन्देत सदृशं पतिम् ॥

अदीयमाना भर्त्तारमधिगच्छेत् स्वयन्तु या।
नैनः किञ्चिदवाप्नोति न च यं साऽधिगच्छति॥
अलङ्कारं नाददीत पितृदत्तं[1] स्वयंवरा।
मातृकं भ्रातृदत्तं वा स्तेना स्याद्यदि तं हरेत्॥
पित्रे न दद्यात् शुल्कन्तु कन्यामृतुमतीं हरन्।
स हि स्वाम्यादतिक्रामेत् ऋतूनां प्रतिरोधनात्॥

एनः पापमसतीत्वनिबन्धनं न साऽवाप्नोतीत्यर्थः। अलङ्कार-निषेधात् वाससां निषेधः।

बौधायनः—

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम्।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम्॥
अविद्यमाने सदृशे गुणहीनमपि श्रयेत्।

विष्णुः—

ऋतुत्रयमपास्यैव कन्या कुर्य्यात् स्वयं वरम्।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनः सदा॥
पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता।
सा कन्या वृषली ज्ञेया हरेत्तां तु बृहस्पतिः॥

त्रीन् कुमार्य्यृतुमती स्वयं युज्येतानिन्दितेन उत्सृज्य पित्र्यान-लङ्कारान्। प्रदानं प्रागृतोरयच्छन् दोषी, प्राक्वाससः प्रतिपत्ते-रित्येके। मनुना वर्षत्रयप्रतीक्षणमुक्तं विष्णुना च तावदर्षप्रतीक्षण-मुक्तमत्र विरोधे मनुवचनं पित्रादीनां यत्नवतामपि केनचिद्धेतुना

[1] (ख) पित्र्यं कन्या।

दानं विष्णुवचनं यथोक्तवरसम्पत्तौ पित्रादीनामुपेक्षादिनेति परिहर्त्तव्या।

अत्रैव वसिष्ठः—

पितुः प्रमादात्तु यदीह कन्या
वयः प्रमाणं समतीत्य दीयते[१]।
सा हन्ति दातारमुदीक्षमाणा
कालातिरिक्ता गुरुदक्षिणेव॥

कालातिरिक्ता दानोचितसमयमतिक्रान्ता यथा गुरोर्दक्षिणा दीयमाना विद्याग्राहकं दातारं हन्ति पापवन्तं करोति तथेत्यर्थः।

यमः—

कन्या द्वादशवर्षाणि याऽप्रदत्ता गृहे वसेत्।
ब्रह्महत्या पितुस्तस्याः सा कन्या वरयेत् स्वयम्॥
एवं चोपनता पत्नी नावमान्या कदाचन।
न च तां बन्धकीं विद्यान्मनुः स्वायम्भुवोऽब्रवीत्॥

नारदः—

कन्यानर्त्तुमपेक्षेत बान्धवेभ्यो निवेदयेत्।
न चेद्दद्युस्तु तां भर्त्ते ते स्युर्भ्रूणहभिः समाः॥

भ्रूणो गर्भः।

पुनर्वसिष्ठः—

प्रयच्छेन्नग्निकां कन्यां ऋतुकालभिया[२] पिता।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति॥

---

१ (ख) तिष्ठत्। २ (ख) भयात्।

यावत्तु कन्यामृतवः स्पृशन्ति
तुल्यैः सकामामभियाच्यमानाम् ।
भ्रूणानि तावन्ति हतानि ताभ्यां
मातापितृभ्यामिति धर्म्मवादः ॥

तिष्ठन्त्यामविवाह्यमानायां स्पृच्छति गच्छति प्राप्नोति तुल्यैः कुलादिना ।

बौधायनः—

दद्याद्गुणवते कन्यां नग्निकां धर्म्मचारिणीम् ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

गुणोऽत्र कुलीनत्वरूपवत्त्वादिः ।

तथा—

त्रीणि वर्षाण्यृतुमतीं कन्यां यो न प्रयच्छति ।
स तुल्यं ब्रह्महत्याया दोषमृच्छत्यसंशयम् ॥
न याचते तावदेव याचते चेत् पृथक् पृथक् ।
एकैकस्मिन्नृतौ दोषं पातकं मनुरब्रवीत् ॥

यदि न याचते तदैव वर्षत्रयेण भ्रूणहत्याजन्यपापतुल्य-पापवत्ता । अथ योग्याय याचमानाय न ददाति तदा प्रतिऋतु भ्रूणहत्याजन्यपापसदृशपापवत्ता । पातकशब्दश्चात्र प्रस्तुतपापपरः ।

अत्रि-काश्यपौ—

पितृगेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥
यस्तु तां वरयेत् कन्यां ब्राह्मणो ज्ञानदुर्बलः ।

अश्रद्धेयमपाङ्क्तेयं तं विद्यात् वृषलीपतिम् ॥

पूर्व्वं न च यं माऽधिगच्छति इत्यनेन कन्ययाऽधिगम्यमाने वरे दोषाभाव उक्तः, अधुना वरदोष उच्यते इत्यविरोधः। यद्वा तत्र लघुनिबन्धनपापाभाव उक्तः इह चाश्रद्धेयत्वादिप्रयोजक-दूषणमित्यविरोधः।

पैठीनसिः—

यावन्नोद्भिद्यतः स्तनौ तावदेव देया अथ ऋतुमती भवति तदा दाता प्रतिग्रहीता च नरकमाप्नोति।

पिता पितामहश्चेति विष्ठायां जायते कृमिः।

तस्मात् नग्निका दातव्या।

अङ्गिराः—

अनवाप्तरजा गौरी प्राप्ते रजसि रोहिणी।
अव्यञ्जनकुचा श्यामा कुचहीना तु नग्निका ॥

व्यञ्जनं कुचादन्यद्रोमादिः। अविद्यमानौ व्यञ्जनकुचौ यस्याः सा तथा।

व्यञ्जनेषूपजातेषु सोमो भुङ्क्ते तु कन्यकाम्।
पयोधरे तु गन्धर्व्वा [१]अग्निर्भुङ्क्ते रजस्वलाम् ॥

पयोधरे उपजाते इत्यन्वयः।

तस्मादव्यञ्जनोपेतामरजस्कपयोधराम्।
सोपभुक्तां तु सोमाद्यैर्दद्याद्दुहितरं पिता ॥

---

१ (क) जाते भुङ्क्ते।

सम्वर्त्तः—

रोमकाले तु सम्प्राप्ते सोमो भुञ्जीत कन्यकाम्।
[1]ऋतुकाले तु गन्धर्व्वा वह्निस्तु ऋतुदर्शने॥
तस्माद्‌द्वाहयेत् कन्यां यावन्नर्त्तुमती भवेत्।
विवाहस्त्वष्टवर्षायाः कन्यायाश्शस्यते बुधैः॥

कश्यपः—

सप्तवर्षा भवेद्गौरी दशवर्षा तु कन्यका।
सम्प्राप्ते द्वादशे वर्षे कुमारीत्यभिधीयते॥
भुञ्जीत व्यञ्जनं सोमो गन्धर्व्वस्तु पयोधरौ।
कुन्तलस्यागमे वायू रजस्यग्निः प्रकीर्त्तितः॥
तस्माद्व्यञ्जनोपेतामरजस्कपयोधराम्।
सोपभुक्तान्तु सोमाद्यैर्दद्याद्दुहितरं पिता॥

अत्रिः—

व्यञ्जने तु कुलं हन्यात् पितॄन् हन्यात् पयोधरे।
हन्यादिष्टञ्च पूर्त्तञ्च प्राप्ते रजसि कन्यका॥

भविष्यपुराणे—

अप्राप्तरजसा गौरी प्राप्ते रजसि रोहिणी।
अव्यञ्जनकुचा कन्या कुचहीना तु नग्निका॥
सप्तवर्षा भवेद्गौरी दशवर्षा तु नग्निका।
द्वादशे तु भवेत् कन्या अत ऊर्द्ध्वं रजस्वला॥

---

१ मूलपुस्तके रजो दृष्ट्वा तु गन्धर्व्वाः कुचौ दृष्ट्वा तु पावकाः।

अत्र सप्तवर्षैव गौरी स्यादित्यस्य अनवाप्तरजा गौरीत्यङ्गिरो-वाक्यस्यापि सामान्यवाक्यतया एतद्विशेषपरत्वम् । एवञ्च विवाहे अष्टवर्षाया:—शस्यते बुधैरिति सम्वर्त्तवाक्यस्याप्येकमूलत्वात् गर्भाष्टममादायत्वैव तात्पर्य्यम् ।

यत्तु कन्यावरवय:क्रमनिरूपणे त्रिंशद्वर्षेण षोड़शवर्षा विवाहिता प्रशस्ता भवतीत्युक्तं तदुद्वाहकगुणप्रयुक्तप्रकर्षाभिप्रायम् ।

तदुद्वाह्यागतो व्यञ्जनाद्युद्भवप्रयुक्तस्तत्रापि दोष एव, नग्निका तु परिधानानभिज्ञा दशवर्षा विवाहिता प्रशस्ता कुलहीना च विवाहे दोषाभावप्रतिपादनार्थं परिभाषिता ।

यत्तु—कन्यावरवय:क्रमनिरूपणे महाभारते—

त्रिंशद्वर्ष: षोड़शवर्षां भार्य्यां विन्देत नग्निकाम् ।

इत्युक्तं—

तत्र दशवर्षा तु नग्निका इति भविष्यपुराणविरोधात् षोड़शवर्षां त्रिंशद्वर्ष: परिणयेत् नग्निकां वा इति बोद्धव्यं व्यञ्जनादिषु दोषदर्शनात् ।

अतोऽप्रवृत्ते रजसि कन्यां दद्यात् स्वयं पिता ।
महदेन: स्पृशेदेनमन्यथैकविधि: सताम् ॥

अप्रवृत्ते रजसि कन्या दातव्या अन्यथा रजसि प्रवृत्ते दाना-देनं दातारं महदेन: पापं स्पृशेत् इत्येष: सतां विधि: ।

मनु-नारद-कात्यायन-बृहस्पतय:—

सकृदंशो निपतति सकृत् कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत् ॥

इदं वाक्यं दाय-कन्यादान-ददानीतिवचनानां सर्व्वेषा-मपि सकृत्कर्त्तव्यताबोधकमिह तु खण्डमादायास्य प्राकरणीय-त्वमिति परमार्थः ।

लक्ष्मीधरस्तु— दृष्टान्ते दाय-ददानीतिवचने कन्यादानन्तु दार्ष्टान्तिकमित्याह ।

नारदः—

ब्राह्मादिषु विवाहेषु पञ्चस्वेष विधिः स्मृतः ।
गुणापेक्षन्तु वै दानमासुरादिषु च त्रिषु ॥

ब्राह्मादिविवाहपञ्चकेऽयं सकृत् कन्यादानविधिः । आसुर-राक्षस-पैशाचेषु-त्रिषु विवाहितायां नायं विधिः किन्तु वरस्या-धिकगुणवत्त्वे पुनरपि विवाहः । तथा—

कन्यायां प्राप्तशुल्कायां श्रेयांश्चेदर आव्रजेत्[१] ।
धर्म्मार्थकामसंयुक्तं वाक्यं तत्रानृतं भवेत् ॥

धर्म्मार्थकामसंयुक्तं वाक्यं इयं कन्या मया तुभ्यं दातव्येति प्रतिश्रवः ।

तथा—

दत्तां कन्यां हरन् दण्ड्यो व्ययं दत्त्वा तु सोदयम् ।

श्रेयान् वक्ष्यमाणवरदोषरहितः ।

याज्ञवल्क्यः—

सकृत् प्रदीयते कन्या हरंस्तां चौरदण्डभाक् ।
दत्तामपि हरेत् पूर्व्वं श्रेयांश्चेदर आव्रजेत् ॥

---

१ (क) पुस्तके आश्रवेत् ।

मनुः— न दत्त्वा कस्यचित् कन्यां पुनर्दद्याद्विचक्षणः।
दत्त्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषाऽनृतम्॥
एवञ्च न परे चक्रुर्नापरे जातु साधवः।
यदन्यस्याभ्यनुज्ञाय पुनरन्यस्य दीयते॥

पुरुषानृतं पुरुषविषये अनृतवचने यत् पापम्।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते। इत्युक्तम्।
अभ्यनुज्ञाय दातुं प्रतिज्ञाय एवं पूर्व्ववचने दत्तामिति दातुं प्रतिज्ञातामित्यर्थः। मनुवचनेऽपि दत्त्वेति तथैव।

कश्यपः—

पिता वा यदि वा माता भ्राता वा यदि वेतरः।
कन्यानृतकरा मूढा यां गतिं यान्ति तां शृणु॥
अनिवर्त्ती यथा श्येनो गच्छत्येव यथानिलः।
एवं नरकमायान्ति कन्यानृतकरा नराः॥

इतर उक्तेभ्योऽन्यः कन्यादाता। कन्यानृतकराः कन्यादान-प्रतिज्ञायामसत्यत्वप्रयोजकाः।

कात्यायनः—

अनेकेभ्योऽपि दत्तायामनूढायां च यत्र वै।
वरागमश्च सर्व्वेषां लभेतादिवरस्तु ताम्॥
पश्चाद्वरेण यद्दत्तं तस्याः प्रतिलभे(त)त्तु सः।
तथा गच्छेदनूढाया धनं दत्त्वा वरो हरेत्॥

एवञ्च धनग्रहणपूर्व्वकं दातुं प्रतिज्ञातायामनूढायां यत्र द्वयोर्बहूनाञ्च विवाहायागमस्तत्र प्रथमवरस्तां कन्यां लभेत्।

अन्यतरस्तु स्वयं दत्तं धनं लभत इत्यर्थः ।

नारदः—

प्रतिगृह्य च यः कन्यां वरो देशान्तरं व्रजेत् ।
त्रीनृतून् समतिक्रम्य कन्याऽन्यं वरयेद्वरम् ॥

प्रतिगृह्य विवाहयितुं स्वीकृत्य ।

कात्यायनः—

प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनन्तथा ।
धार्य्यमावर्षमेकन्तु देयाऽन्यस्मै विधानतः ॥
अथ प्रवृत्तिरागच्छेत् प्रतीक्षेत समात्रयम् ।
अत ऊर्द्धं प्रदातव्या कन्याऽन्यस्मै यथेच्छतः ॥

स्त्रीधनं मुद्रिकादि, प्रवृत्तिरागमप्रयोजिका वार्त्ता, एतच्च ऋतुत्रयाभ्यन्तरे समात्रयाभ्यन्तरे वा व्यञ्जनादिशङ्काविरहे सतीति ज्ञेयम् ।

तथा—

पूर्व्वं दत्ता तु या कन्या अन्येन्योढ़ा यदा भवेत् ।
संस्कृतापि प्रदेया स्यात् यस्मै पूर्व्वं प्रतिश्रुता ॥
अन्यदत्ता तु या कन्या वरेणोढ़ा यदा भवेत् ।
कालेन विधिना तान्तु संस्कृतां लभते भृगुः ॥

लभते भृगुरिति पदयोर्मध्ये इत्याहेति शेषः ।

अयमर्थः—

यदा कन्या एकस्मै विधिना दत्ता अन्येनातिक्रम्य विवाहिता स्यात् तदा पूर्व्वं यस्मै दत्ता तल्लाभे तस्यैव पुनः परिणेतव्येति ।

यमः—

वाचा दत्ता तु या कन्या यदि तस्या वरो मृतः।
न च मन्त्रोपपन्ना या कन्यका पितुरेव सा॥

मन्त्रोपपन्ना पाणिग्रहणमन्त्रजन्यसंस्कारवती।

वसिष्ठः—

अद्भिर्वाचा च दत्तायां म्रियेतोर्द्ध्वं वरो यदि।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा॥

कन्यायाः सकृद्दानं यन्मन्त्रादिभिरुक्तं तत् पाणिग्रहणसंस्कार-वत्कन्याविषयम्।

मनुः—

कन्यायां दत्तशुल्कायां म्रियते यदि शुल्कदः।
देवराय प्रदातव्या यदि कन्याऽनुमन्यते॥

नियोगविधानन्तरं मनुः

कन्याया म्रियते यस्या वाचा सत्ये कृते पतिः।
तामनेन विधानेन निजो विन्देत देवरः॥
यथाविध्यभिगम्यैनां शुक्लवस्त्रां शुचिव्रताम्।
मिथो भजेताप्रसवात् सकृत् सकृदृतावृतौ॥

यथाविधि यथागृह्यशास्त्रं शुचिव्रतां रागादिनियमवतीम्।

अथ नारदः—

प्रतिगृह्य च यः कन्यामदुष्टामुत्सृजेन्नरः।
[1]विनेयः सोऽप्यकामोऽपि कन्यां तामेव चोद्वहेत्॥

---

१ (ग) स विनेयस्त्वकामोऽपि।

प्रतिगृह्य हस्तोदकीकृत्य अदुष्टां विवाहविरोधिदोषशून्याम् । विवाहयितुमकामोऽपि इच्छाशून्योऽपि प्रबोध्य तामेव कन्यां विवाहयितव्य इत्यर्थः ।

कन्यादोषेऽफलं दानं दातुष्षण्णवतिर्दमः ।
शुल्कप्रदानस्य तु तथा कन्यायास्तु निवर्त्तनम् ॥

निवर्त्तनं परावृत्तिः ।

गूहयित्वात्मनो दोषान् ददतो द्विगुणोऽत्ययः ।
वरस्य दत्तनाशस्तु भवेत् स्त्री च निवर्त्तते ॥

आत्मदोषान् गूहयित्वा गोपायित्वा दत्त्वा अदत्ताद्द्विगुणोऽत्ययो दण्डः ।

तथा— स्वदोषं गूहयित्वा वरस्यापि द्विगुणो दण्डः, दत्तशुल्कस्य नाशः । वरस्य स्त्री च निवर्त्तते तदीया न भवतीत्यर्थः ।

हलायुधेन तु ददत इति स्थाने विन्देत पठित्वा वरमात्रस्यैव दण्ड इत्युत्पादितम् ।

कात्यायनः—

वरदोषमनाख्याय पाणिं गृह्णाति यो नरः ।
याचनां वा प्रकुर्वीत तद्दण्डं प्राप्नुयान्नरः ॥
कन्यादोषेऽप्ययं धर्मो दाता दण्ड्यो वरस्तथा ।
दद्याद्गृहीतं दाता च न त्वेवाभिप्रजातयोः ॥

'कन्यादोषानाख्याने कन्यादाता दण्ड्यः, वरदोषानाख्याने

१ (ख) अत्रैकं वचनं न दृष्टमपि व्याख्या दृश्यते मूलग्रन्थेऽपि अधिकप्राप्तम् ।'

वरो दण्ड्यः, न त्वेवाभिप्रजातयोरिति प्रसवे जाते नैवं दण्डस्तु षण्णवतिर्द्विगुण एव अयमर्थः।

कुत्सिता विधवात्वादिप्रयोजकदोषवतौ अन्यजातिर्वरापेक्षया कर्म्मोपहता वलितत्पापदुष्टा गौत्वोपहता अप्रियवादित्वादि-दौःशील्यवती व्याध्युपहता कुष्ठाद्युपहता।

नारद-कात्यायनौ—

नादुष्टां दूषयेत् कन्यां नादुष्टं दूषयेद्वरम्।
दोषे सति न दोषः स्यादन्योन्यं त्यजतस्तयोः॥

दोषे कुष्ठाद्यात्मकदोषे दोषः पापम्।

मनुः—

विधिवत् प्रतिगृह्यापि त्यजेत् कन्यां विगर्हिताम्।
विप्रदुष्टां व्याधियुक्तां छद्मना प्रतिपादिताम्[1]॥

विधिवदुत्सर्गादिपूर्व्वकं विगर्हितां दुर्लक्षणवतीं विप्रदुष्टां अन्यगतभावामिति, डाकिन्यादिप्रवादवतीमिति कश्चित्। छद्मना अन्यकन्योपदर्शनपूर्व्वककन्यादानादिप्रकारेण।

तथा मनुः—

पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः।
नाकन्यासु क्वचिन्नृणां लुप्तमन्त्रक्रिया हि ताः॥
योन्मत्ता या प्रतिष्ठाख्याऽन्या च या स्पृष्टमैथुना।
पूर्व्वदोषाननाख्याय प्रदाता दण्डमर्हति॥

---

१ मूले चोपपादितां।

प्रतिष्ठिता विनियुक्ताः संस्कारार्थं, अत्र कन्यासु दोषवतीषु दोषोपदर्शने कृते यदि वरः प्रतिगृह्णाति तदा दाता न दण्ड्यः।

॥ इति गृहस्थरत्नाकरे कन्यास्वयम्वरतरङ्गः ॥

---

## अथ सम्बन्धः।

तत्र नारदः—

स्त्रीपुंसयोस्तु सम्बन्धात् वरणं प्राग्विधीयते।
वरणाद्ग्रहणं पाणेः सम्बन्धो हि द्विलक्षणः॥

सम्बन्धात् पाणिग्रहणात्मकात् प्राक् वरणं विधीयते। अतो वरणात् वरणोत्तरं पाणिग्रहणं कार्य्यं भवत्यतएव सम्बन्धो द्विलक्षणो वरणरूपः पाणिग्रहणरूपश्च।

वरणञ्च—सुहृदः समवेतान् मन्त्रवतो वरान् प्रहिणुयात् इत्यापस्तम्बगृह्योक्तम्।

तथा तत्रैव—

तयोरनियतं प्रोक्तं वरणं दोषदर्शनात्।
पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्॥

तयोस्सम्बन्धयोः वरणमनियतं भार्य्यात्वजनने दोषदर्शनात्। क्लीवादिषु वरणे कन्याप्रत्यावृत्तिहेतोः शास्त्रे दर्शनात्। पाणिग्रहणिका मन्त्रा विवाहप्रयोगाङ्गभूताः। गृह्णामि ते सौभगत्वाय हस्तमित्यादयः।

मनुः—

मङ्गलार्थं स्वस्त्ययनं यज्ञस्तासां प्रजापतेः ।
प्रयुज्यते विवाहे तु प्रदानं स्वाम्यकारणम् ॥

स्वस्त्ययनमवैधव्यार्थं स्वस्ति भवन्तो ब्रूयादित्यादि ।

दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि इत्यादि च प्रजापतेर्यज्ञः प्रजापतिदेवताकं कर्म्म । मङ्गलं यदशुभलक्षणदोषनिवारणार्थं क्रियते । प्रदानं स्वाम्यकारणमिति प्रदानेनैव कन्यायां वरस्य स्वाम्यं जायते कन्यादातुः स्वाम्यं निवर्त्तते ।

अत्र मनु-कात्यायनौ—

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥

निष्ठा समाप्तिः । भार्य्यात्वनिष्पत्तिरूपा सप्तमे पदे प्राप्तवत्यां कन्यायामिति बोद्धव्यं इदमपि क्वचित् मन्यते । तथा चानन्तरमेव पूर्व्वोक्तमुक्तम् ।

अत्र यमः—

नोदकेन न वाचा वा कन्यायाः पतिरिष्यते ।
पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे ॥

उदकेन उदकपूर्व्वदानेन वाचा वाग्दानेन ।

हारीतः—

आसनाभिवादनोत्थानार्घ्यातिथ्यानि धर्म्मसाधनानि साधूनामेतेषां प्रदाने कन्याया अतिक्रमो न विद्यते ।

अन्यथायातथ्यात् अन्यच्च क्लीव पतित प्रोषित कुत्सित प्रमीतेषु

आमीमांसन्ते, नोदकेन न वाचा चेति प्रजापतिः । खात्वा चेति प्रतिगृह्णीयात् तस्य दद्यादित्येके मन्यन्ते । तन्न— अकृत्स्नविधानात् संख्यायोगात् । पाणिग्रहणमन्त्रैरपरे । तदप्याद्यानामधोवर्णेषु क्षत्रियादिषु ग्रयथश्छिद्ग्रान्तग्रहणसिद्धं तत्रापि न पाणिग्रहणे जायात्वं । कृत्स्नं हि जायापतित्वं सप्तमे पदे ।

आसनेत्यादि—अयमर्थः ।

कन्यावरणार्थमागतानां साधूनामभिवादनोत्थानार्घ्यातिथ्याचरणैः कन्याया अतिक्रमोऽन्यस्मिन् दानार्हता न भवति अन्यथायाथातथ्यात् ।

याथातथ्यादन्यत्र वरगोत्रकन्यादानमत्यवचनादन्यत्र, अन्यत्रक्लीवादिति यदि मत्यविषयाः क्लीवादयो भवन्ति तदामीमांसन्ते कृतेऽपि तत्त्याग एव कर्त्तव्यः । नोदकेन नोदकपूर्व्वत्यागेन । न वाचा न वाग्दानेन कन्याया अतिक्रम इति प्रजापतेर्मतम् ।

मतान्तरमाह खात्वा चेति—

खात्वा चेत् प्रतिग्रहीतुमुपस्थितो भवति तस्यैव दद्यात् । तत् स्वयं दूषयति अकृत्स्नविधानात् अत्र हेतुः संख्यायोगात् विलक्षणमारदवचमोक्तद्वित्वसंख्यायोगात् । सम्पूर्णता तत्रेहोभयथापि द्वयं नास्ति पाणिग्रहणेन विवाहसम्पूर्त्तिर्भवतीति ।

अपरः आह— पाणिग्रहणमन्त्रैरिति-पाणिग्रहणिका मन्त्रा नियतं दारलक्षणमिति मनुवाक्ये नियतसमर्थदर्शनात् पाणिग्रहणमन्त्रानन्तरं विवाहसम्पूर्त्तिरित्यर्थः । अस्य विशेषविषयत्वमाह तदप्याद्यानामिति आद्यानां ब्राह्मणानाम् ।

अधोवर्णेषु क्षत्रियादिषु त्रिषु यथासंख्यं शरयष्टिदशाग्रग्रहणानां पाणिग्रहणस्थले विहितत्वात् शरादिग्रहणेनैव तेषां सिद्धं पाणिग्रहणं। कथं तर्हि जायापतित्वमिति स्वमतमाह हत्त्वेति।

अस्येदं तात्पर्य्यं— द्विजातीनां ब्राह्मणादित्रयाणां सप्तमपदपर्य्यन्तमयनं मन्त्रवत् पाण्यादिग्रहणं सम्पूर्णं विवाहकर्म। शूद्रस्य तु तत्दशाग्रहणममन्त्रकम्।

मनुः— पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि॥
शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया।
वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने॥

यमः— पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते।
विवर्णासु यथा दृष्ट तथा वक्ष्याम्यनुग्रहम्॥
वैश्या प्रतोदं गृह्णाति गृह्णाति क्षत्रिया शरम्।
दशां गृह्णाति शूद्रा च करादे वरवर्णिनी॥

पैठीनसिः—

साङ्गुष्ठं ब्राह्मण्याः पाणिं गृह्णीयात क्षत्रियायाः शरं वैश्यायाः प्रतोदं शूद्राया वस्त्रदशामिति।

अग्निपरिक्रमो ब्राह्मणस्योक्तो राजन्यवैश्ययोराचार्य्यपरिक्रम इति।

परिक्रमः प्रदक्षिणीकरणम्।

मनुः— अद्भिरेव द्विजाग्र्याणां कन्यादानं प्रशस्यते।
इतरेतरवर्णानामितरेतरकाम्यया॥

इतरेतरकाम्यया कन्यावरयोः परस्परानुरागेण । एवञ्च अद्भिरेवेत्येवकारेण ब्राह्मणानां कन्याया वरस्य परस्परानुरागो नावश्यं दृश्यते[१] । अद्भिरेवेति वचनं ब्राह्मणे प्राशस्त्यतात्पर्य्यक-मिति । शूद्रेणापि कन्यादाने कर्त्तव्ये जलस्य[२] विनियोग एवेति ज्ञेयम् । तथैव सम्प्रदायः ।

गृह्यपरिशिष्टम्—

कन्यां वरयमाणानामेष धर्म्मो विधीयते ।
प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखाः ॥

उभयस्यापि पक्षस्य तृतीयपुरुषादारभ्य पैतापुत्रीमनुक्रमात् कीर्त्तयेत् । अस्यैव विवरणं कन्यां ददातीति बोद्धव्यम् । तेन कन्यादात्रैव कुलद्वयोच्चारणं पुरुषत्रयपर्य्यन्तं कर्त्तव्यमिति लक्ष्यते । लक्ष्मीधरस्तु—

मातृपक्षस्य पितृपक्षस्य च अनुक्रमात् तृतीयपुरुषादारभ्य पैता-पुत्रीमनुक्रमेण कीर्त्तयेत् । अस्यैव विवरणं कन्यां ददातीति—न केवलम् यः कन्याप्रार्थयिता स तूभयपक्षस्य पुत्रीमनुक्रमात् किन्तु योऽपि कन्यां ददाति कन्यादाता सोऽपि उभयपक्षस्य पैतापुत्री-मनुक्रमात्, इत्याह ॥

तच्चिन्त्यम् ।

॥ इति गृहस्थरत्नाकरे (१म पल्लव) सम्बन्धतरङ्गः ॥

---

१ (ख) न दृश्यते ।
२ (ख) पुस्तके ( ) चिह्नितांशोऽधिकः ।

## अथ विवाहभेदाः।

तत्र मनुः—

चतुर्णामपि वर्णानां प्रेत्यचेह हिताहितान्।
अष्टाविमान् समासेन स्त्रीविवाहान् निबोधत॥

स्त्रीपदं स्त्रीत्वेन प्रसक्तासंस्कार्य्यत्वनिवारणार्थं, संस्कार्य्यत्वार्थमिति कल्पतरुकारः।

नारदः—

अष्टौ विवाहा वर्णानां संस्कारार्थं प्रकीर्त्तिताः।
ब्राह्मस्तु प्रथमस्तेषां प्राजापत्यस्तथैव च॥
आर्षस्तथैव दैवश्च गान्धर्व्वश्चासुरस्तथा।
राक्षसोऽनन्तरस्तस्मात् पैशाचश्चाष्टमोऽधमः॥
एषान्तु धर्म्म्याश्चत्वारो ब्राह्माद्याः समुदाहृताः।
साधारणः स्याद्गान्धर्व्वस्त्रयोऽधर्म्म्यास्तथापरे॥

साधारणो न धर्म्मो नाधर्म्म इत्यर्थः।

नारदक्रमेण विवाहानन्तरं गोतमः—

चत्वारो धर्म्म्याः प्रथमाः षड़ित्येके।

हारीतः—

अथाष्टौ विवाहास्सम्भवन्ति ब्राह्मो दैवो गान्धर्व्व आसुरो राक्षसः पैशाचो मानुषः चाचश्चेति। तेषां पूर्व्वं सम्प्रोभयतस्तेषां विक्रेतालाभे मानुषम्।

तेषां पूर्व्वं इति तेषां विवाहानां मध्ये पूर्व्वं आद्यास्त्रयो

विवाहा उभयतो मातृपितृवंश्यजान् सप्त सप्त तारयन्ति इति शेषः। तेषां विवाहानामलाभे मानुषं विन्देत लभेत।

अत्र नारदोक्तार्षप्राजापत्यपदयोर्मानुष-चात्रशब्देनोपादान-मित्यविरोधः॥

अत्र मन्वनुसारात् यथासम्भवं प्रशस्तलमलाभे, क्षत्रियादीनां मानुषो विवाहः।

पुनर्हारीतः—

एतेषामेकतमेनोढा धर्म्मपत्नी प्रोक्ताः।

अत्र यद्यप्येकतमेनेति सर्व्वं प्रत्यविशिष्टं तथापि यो यस्य विवाह उक्तस्तेन तस्य धर्म्मपत्नी भवतीति वाक्यार्थो नेयः।

वसिष्ठः—

षड्विवाहा ब्राह्मो दैवस्तथार्षो गान्धर्व्वः क्षात्रो मानुषश्चेति। इयं गणना नेतरव्यवच्छेदाय। यद्वा पैशाचासुरविवाहादन्-अष्टविभागोऽयं षट्प्रतिपादकपदेन एव केनचिल्लक्षणया साक्षादनुक्तयोरपि प्रतिपादनमिति वा एवमन्येऽपि विभागा मन्वाद्युक्ताष्टधानुरोधेन नेयाः।

ब्राह्मदैवार्षगन्धर्व्वासुरराक्षसमानुष्का—

आपस्तम्बः—

तेषां त्रय आद्याः प्रशस्ताः पूर्व्वः पूर्व्वः श्रेयान्।

मनुर्यमश्च—

ब्राह्मो दैवस्तथा [१]चार्षः प्राजापत्यस्तथासुरः।

---

१ (ख) तथैवार्षः।

गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥
यो यस्य धर्म्मो वर्णस्य गुणदोषौ तु यस्य यौ ।
तद्वः सर्व्वं प्रवक्ष्यामि प्रसवे च गुणागुणान् ॥
षडानुपूर्व्व्या विप्रस्य क्षत्रस्य चतुरो ऽवरान् ।
विट्शूद्रयोस्तु तानेव विद्याद्धर्म्मान् राक्षसान् ॥
चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः ।
राक्षसं क्षत्रियस्यैकं मानुषं वैश्यशूद्रयोः ॥
पञ्चानान्तु त्रयो धर्म्म्या द्वावधर्म्म्यौ स्मृताविह ।
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन ॥
पृथक् पृथक् वा मिश्रौ वा विवाहौ पूर्व्वदेशितौ[१] ।
गान्धर्व्वो राक्षसश्चैव धर्म्म्यौ क्षत्रस्य तौ स्मृतौ ॥

प्रसवे अपत्योत्पत्तौ, अगुणान् दोषान्, आनुपूर्व्या यथोक्त-क्रमेण, अवरान् अधस्तनान्, आसुर-राक्षस-गान्धर्व्व-पैशाचान् अदृष्टजनकान्। "पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन" इति ब्राह्मणे निषेधो बोद्धव्यः, अन्यत्र तद्विधानात्। पृथक् पृथक् एकै-कशः, मिश्र उभयलक्षणसङ्कीर्णो यथा कन्यावरयोः परस्परानुरागे सत्येव कन्याया अदीयमानाया झटिति हरणेन विवाहे गान्धर्व्वराक्षसौ।

पैठीनसिः—

ब्राह्मप्राजापत्यार्षदैवाः ब्राह्मणस्य, गान्धर्व्व आसुरो राक्ष-

---

१ (ग) पूर्व्वचोदितौ।

न्यस्य, राक्षसो वैश्यस्य, पैशाचः शूद्रस्य, सर्व्वेषामार्षं, प्रमाणं आर्षं वेदवाक्यम्।

अतएव—राक्षसं क्षत्रियस्यैकमित्यादिना मनुवाक्ये विशेष-विधेर्न विशेषनिषेधे तात्पर्य्यमित्यनेन पैठीनसिना न विरोधः। आपत्कालमादाय वा पैठीनसिवाक्यं नेयम्।

नारदक्रमेण विवाहाभिधानानन्तरं देवलः—

'एते विवाहास्त्वत्वारो धर्म्यास्तोयप्रदानिकाः।
अशुल्का ब्राह्मणार्हाश्च तारयन्ति द्वयोः कुलम्॥

ब्राह्मादिचतुष्टयानन्तरं पुनर्देवलः—

एतान् सशुल्कान् सामान्यान् विवाहांश्चतुरो विदुः।
केवल क्षत्रियस्यैव वीर्य्यवत्त्वाद्धि राक्षसः॥

तथैव बौधायनः—

एवं चत्वारः पूर्व्वे ब्राह्मणस्य तेष्वपि पूर्व्वः पूर्व्वः श्रेयान् इतरेषामुत्तरोत्तरः पापीयान्। तत्रापि षष्ठसप्तमौ क्षत्रधर्म्मा-नुगतौ तत्पूर्व्वकत्वात्[1] क्षत्रस्य पञ्चमाष्टमौ वैश्यशूद्रयोः। अयन्त्रित कलत्रा हि वैश्यशूद्रा भवन्ति कर्षणशुश्रूषाधिकृतत्वात् गान्धर्व्व-मप्येके प्रशंसन्ति सर्व्वेषां स्नेहानुगतत्वात्। यथायुक्तो विवाहः तथायुक्ताः प्रजा भवन्तीति विज्ञायते॥

चत्वारः पूर्व्वे आद्याः ब्राह्मणस्य प्रशस्ता इति शेषः। तेष्वपि आद्येष्वपि पूर्व्वः पूर्व्वः श्रेयान् प्रशस्त इतरेषां गान्धर्व्वादीना-मुत्तरोत्तरः, यथोत्तरः पापीयान् मन्दतरः। षष्ठसप्तमौ आसुर-

[1] (क) मूले तत्प्रत्ययत्वात्।

राक्षसौ क्षत्रधर्म्मत्वानुगतौ क्षत्रियधर्म्मानुसारिणौ अत्र हेतुः तत्पूर्व्वकत्वात् क्षत्रियस्य धनदान-बलसम्पत्तिपुरःसरत्वात् क्षत्रत्वस्य। पञ्चमाष्टमौ गान्धर्व्वपैशाचौ वैश्यशूद्रयोः अत्र हेतुः— अयन्त्रित-कलत्रा हि वैश्यशूद्रा भवन्ति। गान्धर्व्वपैशाचविवाहयोरनियमितस्त्रीका पि ते कर्षणशुश्रूषाधिकृतत्वात् यथासंख्यं वैश्यशूद्रयोः कर्षणशुश्रूषापरत्वात् स्नेहानुगतत्वात् स्नेहपरतन्त्रत्वात् सर्व्वेषां वर्णानां यथायुक्तो येन गुणेन दोषेण वा युक्तो विवाहः तथा प्रयुक्तास्तेन गुणेन दोषेण वा युक्ताः प्रजा भवन्तीत्यर्थः।

अत्र मनुः—

अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विवर्ज्जयेत्॥

अत्रेयं व्यवस्था—

नारदोक्त प्राजापत्यार्षदैवब्राह्मादिविवाहा ब्राह्मणस्य प्रशस्ताः, गान्धर्व्वस्तु तत्र धर्म्माविरोधी आसुरस्तु यद्यपि तस्य मनुनोक्तः तथापि गान्धर्व्वादपकृष्टत्वात्यन्तापदि करणीयः।

पैशाचश्चासुरश्चैव न कदाचन इति ब्राह्मणमधिकृत्य मनुनाभिधानात् राक्षसपैशाचौ तु विप्रस्यातीव निषिद्धौ षडानुपूर्व्व्या विप्रस्येति मनुयमयोरभिधानात्।

यत्तु—बौधायनेनार्षस्य दैवात् श्रेष्ठत्वमुक्तं तद्धर्म्मसञ्चरित-त्वेन न तु प्रशस्यायास्तच मनुनारदाभ्यां श्रेष्ठत्वोक्तेः हारीतोक्तन्तु सर्व्वान् प्रति गान्धर्व्वे श्रेयस्त्वं गान्धर्व्वमभिप्रेत्य स्वयं कन्यां वरयेत् गान्धर्व्व इति गन्धर्व्वाभिधानात्।

यत्तु पैठीनसि-यम-हारीत-महाभारतेषु—

राक्षसासुरगान्धर्वपैशाचशब्दैर्बलादाहृतकन्याहरणात् विवाहः प्रशस्त इत्युक्तं तत् क्षत्रियाभिप्रायम् ।

ब्राह्म-दैवौ तु ब्राह्मणस्य नेतरेषाम् ।

महाभारते—

ब्राह्मणानां सतामेष सदा धर्म्मो युधिष्ठिर! ।

इत्यभिधानात् ।

दैवस्य ऋत्विक्सम्प्रदानकत्वाभिधानात् क्षत्रियादीनां ऋत्विग्भागाभावात् ।

पैशाचस्तु वैश्यशूद्रयोः ।

यत्तु वैश्यस्य राक्षसः श्रेष्ठ इति पैठीनसिवचनं तत् शुल्कक्रीतकन्याविवाहाभिप्रायं शुल्केन पदं ददतो राक्षस इति पैठीनसिनैवोक्तः ।

आर्षप्राजापत्यगान्धर्व्वाणान्तु सर्व्ववर्णसाधारणसम्भवात् निन्दाविरहाच्च । सङ्करजानान्तु ब्राह्मदैवव्यतिरिक्ता जनकवर्णसम्बन्धिन इतरे विवाहा इति ।

---

## अथ ब्राह्मलक्षणम्।

तत्र मनुः—

आच्छाद्य चार्चयित्वा च श्रुतशीलवते स्वयम्।
आहूय दानं कन्याया ब्राह्मो धर्म्मः प्रकीर्त्तितः॥

आच्छाद्य वस्त्रयुग्मं परिधाप्य अर्च्चयित्वा अर्घ्यं दत्वा।

देवलः—

ततो विनीतां कल्याणीं कुलरूपवयोऽन्विताम्।
अलङ्कृत्यार्हते दद्यादिवाहो ब्राह्म उच्यते॥

कल्याणीं पूर्व्वोक्तदोषशून्याम्। अर्हते पूर्व्वोक्तगुणयुक्ताय।

व्यासः—

आच्छाद्यालङ्कृतां दत्वा त्रिः परिक्रम्य पावकम्।
नामगोत्रे समुद्दिश्य दद्याद्ब्राह्मो विधिस्त्वयम्॥

अत्र त्रिः पावकपरिक्रमणं, नामगोत्रोच्चारणयोः पाठक्रमो नाद्रियते।

संवर्त्तः—

अलङ्कृत्य त्वलङ्कारैर्वराय सदृशाय वै।
ब्राह्मेण तु विवाहेन दद्यात् कन्यां सुपूजिताम्॥

सुपूजितां वस्त्रपुष्पचन्दनादिना।

यमः—

अद्भिर्या दीयते कन्या ब्रह्मदेयेति तां विदुः।

ब्रह्मदेयेति संज्ञा तत्र विवाहे जातस्य आद्युपङ्क्तिपावनत्वव्यवहारात्।

हारीतः—

अनिन्दन्नन्यैरवितर्कयन् विधिवद्वस्त्रयुगं दत्त्वा सह धर्मश्चर्य्यतामिति ब्राह्मः।

अनिन्दन् अदूषयन्नन्यैरवितर्कयन् इतरैः सह दूषणमग्राह्यमानः। विधिवत् मधुपर्कादिपुरःसरं सह धर्मश्चर्य्यतामित्युक्त्वा यत्र विवाहे कन्यां दद्यात् स ब्राह्म इत्यर्थः।

आपस्तम्बः—

ब्राह्मे विवाहे बन्धुशीलश्रुतारोग्याणि बुध्वा प्रजां सहत्वकर्मभ्यः प्रतिपादयेच्छक्तिविषयेणालङ्कृत्य।

प्रजां कन्यां। सहत्वकर्मभ्य इति येषु कर्मस्वाधानादिषु पत्नीसहभावः श्रुतः तदर्थतया प्रतिपादयेत् दद्यात्।

बौधायनः—

श्रुतशीले विज्ञाय ब्रह्मचारिणे अर्थिने दीयत इति स ब्राह्मः।

ब्रह्मचारिणे असंजातस्त्रीसङ्गमाय इति लक्ष्मीधरः।

समावर्त्तनानन्तरमेव दातव्येति हलायुधः। ब्रह्मचारिणे वेदव्रते इति भावः।

जातपरिणीतस्त्रीसङ्गमस्य द्वितीयविवाहे विवाहाष्टकबहिर्भावापत्तेः। अर्थिने विवाहमीहते।

शङ्खलिखितौ—

तत्र सवर्णः सवर्णाय विदितो विदिताय यो नग्निकां दद्यात्। स ब्राह्मः।

विदितः कुलादिभिः।

पैठीनसिः—

तस्मात्नग्निकां सहिरण्यां दद्यादयं स ब्राह्मो विवाह इति ।

श्रेष्ठवरमधिकृत्य ब्रह्मपुराणे—

तादृशाय तदा कन्यां दद्युः श्रद्धयान्विताः ।

अलङ्कृत्य यथाशक्त्या पूजयित्वा धनेन वा ॥

[1]अलङ्कृत्य पूजयित्वा धनेन गोभूहिरण्यदानादिना । यथाशक्त्या उभयत्रापि योज्यम् ।

ब्राह्मविवाहमधिकृत्य संवर्त्तः—

स कन्यायाः प्रदानेन श्रेयो विन्दति पुष्कलम् ।

सद्भिरित्युच्यते साधुः कीर्त्तिमाप्नोति पुष्कलाम् ॥

पुष्कलां प्रशस्तां साधुरित्युच्यते इत्यन्वयः ।

तथा—

ज्योतिष्टोमातिरात्राणां शतं शतगुणीकृतम् ।

प्राप्नोति पुरुषो दत्त्वा होममन्त्रैस्तु संस्कृताम् ॥

पुरुषो कन्या । अत्र दत्त्वा होममन्त्रैः संस्कृतामिति शाब्दक्रमो न ग्राह्यो दानानन्तरं गृहे एव होमविधानात् ।

कश्यपः—

अनडुहां सहस्राणि दशानां धूर्य्यवाहिनाम् ।

सुपात्रे विधिवत् दानं कन्यादानस्य तत्समम् ॥

धूर्य्यो वृषभः; वृषभदशसहस्रदानजन्यपुण्यसमपुण्यं सुपात्रे विधिवत् कन्यादानेन जन्यत इत्यर्थः ।

---

१ (ख) पुस्तके वरमपि इत्यधिकः पाठः ।

यस्तु सत्येन धर्म्मेण पिता स्पर्शयते सुताम्।
स प्रेत्य लभते स्थानं यथा दक्षः प्रजापतिः॥

धर्म्मस्य सत्यता शुल्कादिराहित्यं, स्पर्शयते ददाति।

आदित्यपुराणे—

श्रुत्वा कन्याप्रदानन्तु पितरः सपितामहाः।
विमुक्ताः सर्व्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते॥

देवलः—

तिस्रः कन्या यथान्यायं पालयित्वा निवेश्य च।
न पिता नरकं याति नारी वा स्त्रीप्रसूतिनी॥

स्त्रीप्रसूतिनी कन्याप्रसूतिनी।

स्मृतिः—

नाग्निहोत्रादिभिस्तस्मात् ब्रह्मतो ब्राह्मणस्य वा।
यत् कन्यां विधिवत् दत्त्वा फलं प्राप्नोति मानवः॥

ब्राह्मानुवृत्तौ सम्वर्त्तः—

तां दत्त्वा च पिता कन्यां भूषणाच्छादनासनैः।
पूजयन् स्वर्गमाप्नोति नित्यमुत्सववृद्धिषु[1]॥

इति ब्राह्मलक्षणम्।

---

१ क्वचित्— वृत्तिषु।

# अथ दैवलक्षणम्।

तत्र मनुः—

यज्ञे तु वितते सम्यक् ऋत्विजे कर्म्म कुर्व्वते।
अलङ्कृत्य सुतादानं दैवं धर्म्मं प्रचक्षते॥

सम्यक् यथावत् प्रमादादिशून्यमिति यावत्। कर्म्म कुर्व्वते ऋत्विजे।

देवलः— अन्तर्वेदौ समानीय कन्यां कनकमण्डिताम्।
ऋत्विजे च दद्यात्येष विवाहो दैवसंज्ञकः॥

यमः— स ऋत्विजमलङ्कृत्य विवाहो दैव उच्यते।

हारीतः—

वेद्यन्ते गोमिथुनं दत्त्वा स दैवः।

कन्यादानार्थं दक्षिणास्वानीयमानासु वेद्यन्ते वेद्या एकदेशे गोमिथुनमर्थं स्वीयमेव दात्रा वराय दातव्यं न तु वरादेवो-पादेयं तथात्वे सत्यार्षतापत्तेः।

बौधायनः—

कन्यादानार्थं दक्षिणास्वानीयमानासु अन्तर्वेदि यदृत्विजे स दैवः। ऋत्विक्कर्म्मकौशलजनितपरितोषरूपोपाधियुक्तत्वाद्ब्राह्माद-भेदोऽप्यत एव सुव्यक्तः।

आदित्यपुराणे—

दैवेन तु विवाहेन यस्तु कन्यां प्रयच्छति।
हत्वा दारन्तु विपुलं भानुसोपाममुत्तमम्॥
आदित्यलोकादूर्द्धन्तु गमनं प्रतिपद्यते॥

## अथार्षलक्षणम्।

तत्र मनुः—

एकं गोमिथुनं द्वे वा वरादादाय धर्म्मतः।
कन्याप्रदानं विधिवदार्षोऽयं धर्म्म उच्यते॥

धर्म्मत इत्यनेन दक्षिणालिङ्गादाय इत्युच्यते॥

कल्पतरुकारस्तु—

धर्म्मत[1]इत्यानृशंस्यार्थं न तु शुल्कबुद्ध्या, गोमिथुनग्रहणञ्च कन्यादातुः स्वयमधिकदानासमर्थस्य कन्योपकाराधिकमिच्छतो वेदितव्यमित्याह। एकं द्वे वेति शक्त्याऽशक्त्या वरापेक्षया विकल्पः।

देवलः—

प्रदानं यत्तु कन्यायाः सह गोमिथुनेन च
शस्ताय वाऽसगोत्राय तमार्षमृषयो विदुः॥

सह गोमिथुनेन वरादुपात्तेन, शस्ताय यथोक्तवरत्वोपयुक्तगुणवते।

शङ्खलिखितौ—

गोमिथुनेन वस्त्रयुगलेनार्षः सर्व्वेऽलङ्काराः स्त्रीधनञ्च देयमिति। सालङ्कारः स्त्रीधनञ्च इति समभिव्याहारादलङ्कारादधिकमपि किञ्चिद्देयं द्वयमपि चेदं यथाशक्त्या।

बौधायनः—

[2]पूर्व्वं लाजाहुती हुत्वा गोभ्यां च आर्षः। पूर्व्वं चतसृणां लाजाहुतीनां मध्ये आद्ये द्वे गोभ्यां मिथुनेन सह देयेत्यनुषङ्गः।

---

१ (क) इत्यनृशंस्यार्थं।　　२ (ख) पूर्व्वंलाज्याहुतीः।

हलायुधेन तु पूर्व्वं लाजाहुतिमिति लिखित्वा हुत्वेति प्रथमाहुतिं हुत्वेति व्याख्यातम् ।

---

## अथ प्राजापत्यलक्षणम् ।

तत्र मनुः—

[1]सहोभौ चरतां धर्म्ममिति वाचाऽनुभाष्य च ।
कन्याप्रदानमभ्यर्च्च्य प्राजापत्यो विधिः स्मृतः ॥

कन्याप्रदानसमये सहान्योन्याव्यभिचारेण धर्म्मेण[2] धर्म्मं चरतामिति वाक्यमुच्चार्य्य कन्यावरावभ्यर्च्च्य कन्याप्रदानं क्रियते तेन विवाहः प्राजापत्य इत्यर्थः ।

देवलः—

सर्व्वधर्म्मक्रियाहेतोर्दानं समय[3]बन्धनात् ।
संस्कृत्यैव कन्याया विवाहः स प्रजापतेः ॥

समयबन्धनमिह सहोभौ चरतां धर्म्ममिति मनूक्तं संकेतकरम् ।

गोतमः—

संयोगमन्त्रः प्राजापत्ये सह धर्म्मश्चर्य्यताम् । इति ।

विष्णुः—

प्रार्थितप्रदानं प्राजापत्यः ।

प्रार्थिताय प्रदानं, प्रार्थितश्च सहोभौ चरतां धर्म्ममिति ।

---

१ (क) सहितौ ।
२ (क) (ख) पुस्तके धर्म्मेण पदं नास्ति । ३ (क) पुस्तके सम्बन्ध— ।

## अथासुरलक्षणम्।

तत्र मनुः—

> ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायाश्चैव शक्तितः।
> कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते॥

ज्ञातिभ्यः कन्यायाश्च धनं दत्त्वा धनग्रहणलुब्धाद्दातुः स्वाच्छन्द्याद्राय। यत् कन्याया आप्रदानं ग्रहणं क्रियते। तेन विवाह आसुरो भवतीत्यर्थः।

देवलः— शुल्कं प्रदाय कन्यायाः प्रत्यादानं विधानतः।

> वित्तहेतुर्विवाहोऽयमासुरः षष्ठ उच्यते॥

प्रत्यादानमिह ग्रहणमेव वित्तं हेतुर्यस्य स वित्तहेतुः।

पैठीनसिः—

> शुल्केन परिणीता दद्तो राक्षसः।
> परिणीता विक्रीय राक्षसशब्दः॥

हारीतः—

दम्भकश्चाभ्यां परैस्तर्किताय दीयते प्रतिपद्य वा स आसुरः।

परैरन्यैर्दम्भकश्चाभ्यां दाम्भिकतया काम्भिकतया च तर्किताय प्रतिपद्य ज्ञाताय यद्दानं अयमासुरो विवाहः।

पुनर्हारीतः—

शुल्के ... र्येण मानुषः। मानुषशब्द आसुरपरः।

वसिष्ठः—

पठित्वा धनक्रीतौ स मानुषस्तस्माद्दुहितृमते शतमधिरथमितिह कये विज्ञायते।

पठित्वा, पठनानुकूलव्यापारं कृत्वा स्थितस्य यत्र विवाह्या कन्या धनक्रीता भवति स विवाहो मानुषः । आसुर इत्यर्थः ।

अधिरथं रथाधिकं शतमिति गोशतं इतिशब्देन क्रयबोधिका श्रुतिर्नीयते सा च.या पत्युः क्रीता सत्यन्यथा अन्यैश्चरतीत्याह वाचस्पतिः । विक्रयाधिकारक्रयदर्शनार्थं स्मृतयः पठ्यन्ते ।

कश्यपः—

क्रीता द्रव्येण या नारी न सा पत्नी विधीयते ।
न सा दैवे न वा पैत्रे दासीं तां कश्यपोऽब्रवीत् ॥

आपस्तम्बः—

दानविक्रयधर्मश्च अपत्यस्य न विद्यते ।

मनुः—

न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि ।
गृह्णन् शुल्कञ्च लोभेन स्यान्नरोऽपत्यविक्रयी ॥
आददीत न शूद्रोऽपि शुल्कं दुहितरं ददत् ।
शुल्कं गृह्णन् च कुरुते छन्नं दुहितृविक्रयम् ॥
नानुशुश्रुम जात्वेतत् पूर्व्वेष्वपि च जन्मसु ।
शुल्कसंज्ञेन मूल्येन पापं दुहितृविक्रयम् ॥
आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत् ।
स्वल्पोऽप्ययं महान् वापि तावानेव स विक्रयः ॥
स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः ।
नारीयानानि वस्त्रं वा ते पापा यान्त्यधोगतिम् ॥

आर्षासुरयोर्विवाहयोर्धनग्रहणमुक्तं न च तद्विना तदसम्भवः ।

कश्यपादिभिश्च तत्र निन्दा कृतेति विरोधः। इयं व्यवस्था यत् कन्यार्थं मूल्यग्रहणेन विक्रये दोष इति। स्त्रीधनानीति प्रसङ्गादुक्तं उपजीवन्ति उपभुञ्जते एतेन कन्याया अर्हणार्थदत्तधनोपयोगात् कुर्व्वाणानाञ्च निषेध इत्युक्तम्। तस्माद्गृहीतमपि स्वयं नोपयोज्यम्।

कश्यपः—

शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः।
आत्मविक्रयिणः पापा महाकिल्विषकारकाः॥
पतन्ति निरये घोरे घ्नन्ति चासप्तमं कुलम्।
गमनागमने चैव सर्व्वं शुल्को विधीयते॥

गमनागमने वस्त्रालङ्कारादिकमादाय कन्याप्रार्थनार्थं कन्यापितृवेश्मनि यातायाते।

मनुः—

यासां नाददते शुल्कं ज्ञातयो न स विक्रयः।
अर्हणन्तु कुमारीणामानृशंस्यञ्च केवलम्॥

आनृशंस्यमनुकम्पादानं विक्रयधर्म्मोऽस्याप‌त्यस्य न विद्यते इत्यभिहितं तत् कथमार्षे विवाहे कन्यापित्रे गोमिथुनदानादिकमाशङ्क्याह।

आपस्तम्बः—

विवाहे दुहितृमते दानं काम्यं धर्म्मार्थं श्रूयते तस्माद्दुहितृमते अधिरथं शतं देयं तस्मिन् मिथुनाया कुर्य्यादिति। तस्यां क्रयशब्दः संस्तुतिमात्रं धर्म्माद्धि सम्बन्धः।

विवाहे यत् कन्यापित्रे दानं तत् काम्यं न मूल्यार्पणं कर्त्तव्या

चात्र ऋषिसम्बन्धस्तत्पतिविषयो यथायुक्तो विवाहस्तथायुक्ताः प्रजा भवन्तीत्यभिधानात् तन्मिथुनायालङ्कुर्य्यादिति बहुत्तं रथादिकं मतं ।

मिथुनं कुर्य्यात् पतिपत्नीभावं जनयेत् मिथुनशब्दात् मिथुनात्-परस्य विभक्तेश्छान्दसत्वादायादेशः ।

यस्त्वार्षविवाहोढानां स्मृत्यन्तरे क्रयशब्दः स न मुख्यार्थः अत्र हेतुर्धर्म्माद्धि सम्बन्धः धर्म्मार्थोऽयं विवाहो न शुल्कप्रदाने इति ।

---

## अथ गान्धर्व्वलक्षणम् ।

तत्र मनुः—

इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्व्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः ॥

इच्छयाऽन्योन्यसंयोगः कन्यावरयोः समयपूर्व्वक उपगमो गान्धर्व्वविवाहः । मैथुन्यः मिथुनस्य कर्म्म मैथुनं तस्मै हितम् ।

अथैवाश्वलायनः—

मिथः समयं कृत्वोपगच्छेत् स गान्धर्व्वः ।

देवलः—

विविक्ते स्वयमन्योन्यं स्त्रीपुंसयोर्यः समागमः ।
प्रीतिहेतुः स गान्धर्व्वो विवाहः पञ्चमो मतः ॥

गौतमः—

अलङ्कृत्येच्छया स्वयं संयोगो गान्धर्व्वः ।

अलङ्कृत्य अलङ्कारं कृत्वा या इच्छन्ती तया सह संयोगो वरस्य गान्धर्व्वो विवाह इत्यर्थः ।

विष्णुः—

द्वयोः सकामयोर्मातृपितृदानरहितो योगो गान्धर्व्वः ।

अत्र 'कन्यावरयोर्मातृपितृदानरहित इति स्वयवरगान्धर्व्वा-भिप्रायः ।

अत्रैव हारीतः—

स्वयं कन्या वरयते स गान्धर्व्वः ।

वसिष्ठः—

सकामां कामयमानः सदृशीं यो निरुन्ध्यात् स गान्धर्व्वः ।

अत्र कन्यावरयोः परस्पररागप्रयुक्त समयबन्धकृत उपगमो गान्धर्व्वविवाह इति तात्पर्य्यम् ॥

---

# अथ राक्षसः।

तत्र मनुः—

हत्वा छित्वा च भित्वा च क्रोशन्तीं रुदतीं गृहात्।

प्रमह्य कन्यां हरतो राक्षसो विधिरुच्यते।

हत्वा छित्वा भित्वा कन्यासम्बन्धिनमिति शेषः।

छेदादन्यहिंसापरो हत्वेति शब्दः, ता उषित्वेति लक्ष्मीधरः॥

क्रोशन्तीं भयात् स्वजनमाह्वयन्तीं प्रमह्यहरणे तात्पर्य्यम्।

देवलः—

विक्रमेण प्रमह्य स्यात् कुमारीहरणं पुनः।

वीर्य्यहेतुर्विवाहः सः राक्षसः सप्तमो मतः॥

प्रमह्य अभिभूय।

आश्वलायनः—

हत्वा छित्वा च शीर्षाणि रुदन्तीं रुदद्भ्यो हरेत्।

स राक्षसः। रुदद्भ्यः कन्याबन्धुभ्यः।

हारीतः—

राजाश्रयेण वधदण्डाभिघातभयविशेषाद्राक्षसः।

राजानमालम्ब्य वधादिभयमुत्पाद्य कन्याहरणं राक्षसः।

वसिष्ठः—

यस्मिन् बलेन प्रमथ्य हरेत् स क्षात्रः। प्रमथ्य कन्यासम्बन्धिनम्।

क्षात्रशब्दोऽत्र राक्षसपरः प्रकरणात्।

## अथ पैशाचः ।

तत्र मनुः—

सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति ।
स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः ॥

रह एकान्ते उपगच्छति आलिङ्गनादिकं करोति न तु संभुक्ते एव । क्षतयोनित्वेनापि पाणिग्रहणसंस्काराभावापत्तेः ।

मत्तां मद्यादिना प्रमत्तां धातुक्षोभादिना अवधानशून्याम् ।

देवलः—

सुप्तात् मत्ताच्च कन्यायां रोहणं व्यसनादपि ।
प्रमादहेतुः पैशाचो विवाहोऽष्टम उच्यते ॥

सुप्तात् स्वापात् (?) मत्तान्मद्यपानादिजनितमदात् व्यसना-द्राजाद्युपद्रवात् कन्याबन्धूनाम् ।

याज्ञवल्क्यः—

पैशाचः कन्यकाछलात् ।

छलात् प्रतारणात् ।

हारीतः—

स्त्रीपानमद्यभोगसंप्रयोगात् पैशाचः ।

कन्यापित्रादीनां स्त्रिया अपि मद्यभोगगीतनृत्यादौ संप्रयो-गादासङ्गात् ।

वसिष्ठ-बौधायनौ—

बलाच्चेत् प्रहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥

यथा कन्या तथा बलात् प्रहृता न भवति सा तथा।
एतच्च मन्त्रसंस्कारात् प्राक् कन्याहरणम्।

आहरकवरादधिकगुणवतोऽन्यस्य वरस्य लाभे।

यमः—

वरयेत् कुलशीलाभ्यां न प्रसह्येत् कथञ्चन।
न मन्त्राः कारणन्तत्र न च कन्यानृतं भवेत्॥
समाक्षिप्यानृतां[१] कन्यां बलादक्षतयोनिकाम्।
पुनर्गुणवते दद्यादिति शातातपोऽब्रवीत्॥

कन्यानृतं कन्यादानान्यथाकरणं पापं प्रसक्तं समाक्षिप्य आच्छिद्य।

शातातपः—

हीनस्य कुलशीलाभ्यां हरन् कन्यां न दोषभाक्।
न मन्त्राः कारणन्तस्य न च कन्यानृतं भवेत्॥
समाक्षिप्य बलात् कन्यां पापादक्षतयोनिकाम्।
कुलशीलवते दद्यादिति शातातपोऽब्रवीत्॥
विवाहिता तु या कन्या संप्राप्ता न च मैथुनम्।
भर्त्तारं पुनरभ्येति यथा कन्या तथैव सा॥

पापात् पापवतः पुंसः।

कात्यायनः—

स वा यद्यन्यजातीयः पतितः क्रूर एव वा।
विकर्मस्थः सदोषो वा दासो दीर्घामयोऽपि वा॥

---

१ (ख) पुस्तके संक्षिप्यतु तां।

क्लीबो वा यदि वा भर्त्ता विसृष्टः पुंस्त्वकारणैः।
ऊढाऽपि देया अन्यस्मै सप्रावरणभूषणा॥

गान्धर्व्वादिविवाह—चतुष्टयानन्तरं देवलः।

देवलः—

प्राक्पूर्व्वं विवाहेषु विधिर्वैवाहिकः स्मृतः।
कर्त्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः॥

वैवाहिको विवाहाङ्गभूतो लाजहोमादिः।

परिशिष्टः—

ब्राह्मेष्वार्षेषु दैवेषु प्राजापत्येषु याज्ञिकैः।
पूर्व्वं होमविधिः प्रोक्तः पश्चात् परिणयः स्मृतः॥
गान्धर्व्वासुरपैशाचविवाहो राक्षसश्च यः।
पूर्व्वं परिणयस्तेषां पश्चाद्धोमो विधीयते॥

याज्ञवल्क्यः—

विवाहे वितते तन्त्रे होमकाल उपस्थिते।
कन्याया ऋतुरागच्छेत् कथं कुर्व्वन्ति याज्ञिकाः॥
स्नापयित्वा तु तां कन्यामर्च्चयित्वा यथाविधि।
हुत्वा हव्यश्च लाजश्च ततस्तन्त्रं प्रकीर्त्तयेत्॥

॥ इति गृहस्थरत्नाकरे परिणयभेदतरङ्गः॥

---

## अथ विवाहगुणागुणौ॥

तत्र मनुः—

ये यस्यैषां विवाहानां मनुना कीर्त्तिता गुणाः।

सर्व्वं शृणुत तद्विप्राः सम्यक् कीर्त्तयतो मम॥

दश पूर्व्वापरान् वंश्यानात्मानञ्चैकविंशकम्।

ब्राह्मीपुत्रः सुकृतकृन्मोचयेदेनसः पितॄन्॥

दैवोढ़ाजसुतश्चैव सप्त सप्त परावरान्।

आर्षोढ़ाजसुतस्त्रीं स्त्रीन् षट् षट् कायोढ़जासुतः॥

दशपूर्व्वान् दशापरान् आत्मानञ्चैकविंशकमित्युक्तेः, ब्राह्मी ब्राह्मविवाहोढ़ा। एनः पापं पितॄनित्यजहत्स्वार्थलक्षणया पुत्रादयोऽपि लक्ष्यन्ते तेन दशपूर्व्वापरानिति पितॄनित्यन्वयः।

दैवोढ़ा दैवेन विधिना ऊढ़ा तस्यां जाता दैवोढ़जा तस्याः सुतो दैवोढ़जासुतः, ङ्यापोःसंज्ञाछन्दसोर्बहुलमिति ह्रस्वत्वं दैवोढ़ासुतइति क्वचित् पाठः।

प्राजापत्यविवाहमुक्त्वा याज्ञवल्क्यः—

स कायः पावयेत्तज्जः षट् षड्वंश्यान् सहात्मना।

कायः प्राजापत्यः कशब्दस्य प्रजापतिवचनस्य कस्येदित्याथादेशः, गणप्रत्ययाभ्यामिदं रूपम्।

गोतमः—

पुनन्ति साधवः पुत्रास्त्रिपुरुषानार्षाद्दश दैवाद्दश दशैव प्राजापत्यात्।

आश्वलायनः—

द्वादशावरान् द्वादशपरान् पुनात्युभयतः।

दशावरान् दशपरान् पुनात्युभयतः ॥
अष्टावरानष्टपरान् पुनात्युभयतः ।
सप्ताऽवरान् सप्तपरान् पुनात्युभयतः ।
अवरान् अधस्थान् स्ववंश्यान् ॥

एतद्वाक्यचतुष्टयं ब्राह्मदैवार्षप्राजापत्येषु यथासङ्ख्यं सम्बध्यते । तथैवाभिधानात् ।

शङ्खलिखितौ—

सप्ताद्यन्तयोरात्मानश्च प्राजापत्यः । पञ्चार्षो नव दैवो नोत्तरेषु क्रियाप्राधान्यम् ।

पुनातीत्यनुवृत्तौ विष्णुः—

प्राजापत्यपुत्रश्चतुरः ।

ब्राह्मादिविवाहचतुष्टयानन्तरम्—

देवलः—

चतुर्ष्वेतेषु दत्तायामुत्पन्नस्तनयः स्त्रियाम् ।
दातुः प्रतिग्रहीतुश्च पुनात्यासप्तमं कुलम् ॥

अत्र प्राजापत्याञ्चतुर इत्येके अत्रैव षडित्येके । तत्रैव सप्ताद्यन्ययोरित्यपरे । तत्रैव दश दशेत्यन्ये । इत्येकत्र प्राजापत्ये विरोधापत्तौ दोषशून्य-गुणि-गुणवत्तर-गुणवत्तमपुत्रभेदेनाविरोध इति नेतव्यम् । एतमन्यत्राप्येवं विरोधे तादृशमेव समाधानमिति ज्ञेयम् ।

प्रवृत्त्यर्थं स्तुतिमात्रमिदं कृतमिति हलायुधः ।

अथ यमः—

ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्व्वशः ॥

ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः।
रूपवन्तो गुणोपेता धनवन्तो यशस्विनः॥
पर्य्याप्तभोगा धर्म्मिष्ठा जीवन्ति च शतं समाः।
इतरेष्ववशिष्टेषु नृशंसाऽनृतवादिनः॥
जायन्ते दुर्व्विवाहेषु ब्रह्मधर्म्मद्विषः सुताः॥

विवाहानुवृत्तौ चाश्वलायनः—

अत ऊर्द्धमचारलवणाशिनौ ब्रह्मचारिणावलङ्कुर्व्वाणावधः-शायिनौ स्यातां त्रिरात्रं द्वादशरात्रं संवत्सरं वा।

ब्रह्मपुराणे—

कृते विवाहे वर्षन्तु वस्तव्यं ब्रह्मचारिणा।
यद्यष्टवर्षा कन्या स्यात्तथा तत्त्रिगुणः पुमान्॥

तत्त्रिगुणः अष्टवर्षत्रिगुणश्चतुर्विंशतिवार्षिक इति यावत्।

अथवा द्वादशाहानि त्रिंशद्वर्षेण सर्व्वदा।
यदि द्वादशवर्षा स्यात् कन्या रूपगुणान्विता॥
द्वात्रिंशद्वर्षपूर्णे तु यदि षोड़शवार्षिकी।
सभ्या तदा च षड्रात्रं वस्तव्यं संयतेन तु॥
विंशत्यब्दा यदा कन्या वस्तव्यं तत्र वै त्र्यहम्।
अत ऊर्द्धमहोरात्रं वस्तव्यमिति सम्मतम्॥

इति गृहस्थरत्नाकरे गुणागुणतरङ्गः॥

---

## अथाधिवेदनम् ।

तत्र मनुः—

मद्यपाऽसत्यवृत्ता च प्रतिकूला च या भवेत् ।
व्याधिता वाधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्व्वदा ॥

मद्यपाऽत्र त्रैवर्णिकस्त्री, असत्यवृत्ता असाधुचरिता, प्रतिकूला भर्त्तुरनिष्टकारिणी, व्याधिता पत्नीकर्त्तव्यव्यापारप्रतिवन्धकव्याधिमती, हिंस्रा पुत्रदासादिताड़नकर्त्री । अर्थघ्नी अर्थनाशानुकूलव्यापारवती । सर्व्वदेति पदस्यासत्यवृत्तेत्यादिभिरन्वयः ।

अधिवेदनं भार्य्यायाः सपत्नीसत्वप्रतिपादनम्[1] ।

याज्ञवल्क्यः—

सुरापी व्याधिता धूर्त्ता बन्ध्या चैवाप्रियंवदा[2] ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥
अधिवेद्या[3] तु भर्त्तव्या महदेनोऽन्यथा भवेत् ।

धूर्त्ता पतिपुत्रप्रतारिणी । अप्रियंवदा निष्ठुरभाषिणी । स्त्रीप्रसूः स्त्रीमात्रजननी । पुरुषद्वेषिणी पतिद्वेषिणी ।

[4]शङ्खलिखितौ—

बन्ध्याऽष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥

१ (ख) — सम्पादनम् ।
२ (ख) वन्ध्यार्थघ्नाप्रियम्बदा ।
३ मूले अधिविन्ना तु ।
४ (ख) पुस्तके मनुः— ।

हारीतः—

अप्रजा नवमे वर्षे दशमे च मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥

अधिवेद्येत्यध्याहार्य्यम् ।

देवलः—

आकाङ्क्षेताष्टवर्षाणि भर्त्ताऽतिप्रसवस्त्रियाः ।
दश विन्ध्याश्च वन्ध्याश्च द्वादश स्त्रीप्रसूतिनीम् ॥
ततो विन्देत विधिना पुत्रार्थी धर्म्मतः स्त्रियम् ।
पुत्रलाभात्परं लोके नास्त्यतिप्रसवा हि ताः ॥
एकामुद्वाह्य कामार्थमन्यां लब्धुं य इच्छति ।
समर्थः तोषयित्वा तु पूर्व्वोढ़ामपरां वहेत्[2] ॥
एका शूद्रस्य वैश्यस्य द्वे तिस्रः क्षत्रियस्य च ।
चतस्रो ब्राह्मणस्य स्युर्भार्य्या राज्ञो यथेच्छतः ॥

अतिप्रसवा प्रसवोऽत्र पुष्पं रजोरूपं तत् स्वयोग्यकाले अतिक्रान्तं यस्याः अतिप्रसवा विन्ध्यां छिद्रादिमतीम्। अतिप्रसवा हि ता इत्यत्र प्रसवः पुत्रः, ताः पूर्व्वोक्तस्त्रियः, समर्थः सम्यगर्थः अर्थस्य सम्यक्त्वं भार्य्यातोषप्रयोजकत्वमेव, मन्वाद्युक्ताष्टवर्षादि-विकल्पो वयःसापेक्षया द्रष्टव्यः ।

येष्वधिवेदनहेतुषु न समयः श्रूयते तेषु यावता समयेन तद्दोषनिर्णयो जायते तावदेव समयः प्रतीक्ष्यः। यथा दीर्घरोगे-ष्वधिविन्देत । पूर्व्वविवाहादपरिसमनन्तरविवाहं कुर्य्यादित्यर्थः ।

१ (क) सत्यमप्रिय— । २ (क) चरेत् ।

मनुः—

या रोगिणी स्यात्तु हिता सम्पन्ना चैव सन्ततम्[1]।
साऽनुज्ञाप्याधिवेत्तव्या नावमन्येत्त कर्हिचित ॥

याज्ञवल्क्यः—

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम्।
न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकीर्त्तितम् ॥

आधिवेदनिकं अधिवेदनप्रयोजनमलङ्कारादि समं यावत्परिणीयमानस्त्रियै दीयते तावत् यदि त्वधिविन्नायै दत्तं तदा यावत् परिणीयमानायै दत्तं तावतोऽर्द्धं दद्यादिति दत्ते त्वर्द्धमित्यस्यार्थः।

मनुः—

अधिविन्ना च या नारी निर्गच्छेद्रुषिता गृहात्।
सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ ॥

नारदः—

अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम्।
त्यजन् भार्य्यामवस्थाप्यो राज्ञा दण्डेन भूयसा ॥

इति गृहस्थरत्नाकरे अधिवेदनतरङ्गः ॥

---

१ (ख) प्रीलतः।

# अथ परिवेदन निषेधः।

तत्र मनुः—

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिः स पूर्व्वजः॥
परिवित्तिः परिवेत्ता यया च परिविद्यते।
सर्व्वे ते नरकं यान्ति दातृयाजकपञ्चमाः॥

याजकोऽत्र विवाहाङ्गभूतेषु होमेष्वाधानेष्टिषु चर्त्विक्[1]।

हारीतः—

ज्येष्ठे तु अनिर्विष्टे कनीयान् निर्विशन् परिवेत्ता भवति परिवित्तो ज्येष्ठः, परिवेदनीया कन्या, परिदायी दाता, परिवेत्ता याजकः सर्व्वे ते पतिताः।

अनिर्विष्टे अकृतविवाहे अकृताग्निहोत्रे च। निष्ठानिर्देशात् एकदापि ज्येष्ठ-कनिष्ठाभ्यां विवाहो न कर्त्तव्यो अग्निहोत्रञ्च। भ्रातृपदेन सोदर्य्य उच्यते सापत्न्यादौ एककारणयोगादपि भ्रातृ-शब्दप्रयोगोपपत्तौ भ्रातृपदाभिधायां प्रमाणाभावात्। अन्याय-स्यानेकार्थत्वमिति न्यायात्।

एतन्न्यायानुवादिनोरर्य्यमशातातपयोः स्मृतिः—

पितृव्यपुत्रान् सापत्न्यान् परनारीसुतांस्तथा।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने॥ इति।

प्रतीत्याध्याहार्य्यम्। परनारीसुतास्त्वत्र दत्तकक्षेत्रजादयो विवक्षिताः।

१ (ख) मनु—

छन्दोगपरिशिष्टे कात्यायनः—

दाराधिगमनाधाने यः कुर्य्यादग्रिमस्थितौ[1] ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः ॥
परिवित्ति परिवेत्तारौ नरकं गच्छतो ध्रुवम् ।
आचीर्णप्रायश्चित्तौ तौ पादोनफलभागिनौ ॥

पातकफलस्य निरयस्य पादोनभागिनावित्यर्थः ।

तथा— धनवार्द्धुषिकं राजसेवकं कर्षकन्तथा ।
प्रोषितञ्च प्रतीक्षेत वर्षत्रयमपि त्वरन् ॥
प्रोषितं यद्यशृण्वानमब्दादूर्द्ध्वं समाचरेत् ।
आगते तु पुनस्तस्मिन् पादं तच्छुद्धये[2] चरेत् ॥

धनवार्द्धुषिकादिकं प्रोषितं देशान्तरस्थितं ज्येष्ठं त्वरन्नपि वर्षत्रयं प्रतीक्षेतेति प्रथमश्लोकार्थः । यदि तस्य प्रोषितस्य कल्याणवार्त्ता न श्रूयते तदा वर्षं प्रतीक्ष्य परिणयं करोति तदा समागते ज्येष्ठे कनिष्ठः परिवेदनपापशुद्धये कृच्छ्रपादं समाचरेदिति द्वितीयश्लोकार्थः ।

गोतमः—

नष्टे भ्रातरि ज्यायसि षड्वार्षिकं क्षपणं, श्रूयमाणेऽभिमुखगमनम्, प्रव्रजिते गमननिवृत्तिः प्रसङ्गात् द्वादशवर्षाणि ब्राह्मणस्य विद्यासम्बन्धे भ्रातरि चैवं ज्यायसि यवीयान् कन्याम्युपयमेषु षड़ित्येके ।

१ मूले अग्रजादिमः । २ (ख) पुस्तके वा शुद्धये ।

नष्टे प्रोषिते भ्रातरि ज्यायसि ज्येष्ठे अकृतविवाहे अनाहिताग्नौ च यवीयान् कन्याभ्युपयमे स्वविवाहाग्न्याधाने षड्वर्षप्रतीक्षणं कुर्य्यादश्रूयमाणे। श्रूयमाणे तु ज्येष्ठे प्रोषिते भ्रातरि विवाहाग्न्याधाने तं कारयितुं यवीयसा कार्य्यम्। प्रव्रजिते कृतसन्न्यासे तु तस्मिन् ज्येष्ठे तु प्रसङ्गाभिवृत्तिः कार्य्या। ब्राह्मणस्य विद्यासम्बन्धान्न्यायैतो युक्तः।

अत्रैव यदष्टवर्षप्रतीक्षणं वर्षं वा केषाञ्चिन्मतम् अन्यन्नाश्रूयमाणत्वश्रूयमाणत्वाभ्यामन्वयः शक्त्यपेक्षया विकल्पः।

तथाच वसिष्ठः—

अष्टौ द्वादशवर्षाणि ज्येष्ठभ्रातरमप्रतीक्षमाणः प्रायश्चित्ती भवति।

तत्र श्लोकौ—

> द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः।
> न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः॥
> उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीव एव वा।
> राजयक्ष्मामयावी च न न्याय्यः स्यात् प्रतीक्षितुम्॥

आमयावी अतिसाररोगी।

शातातपः—

> क्लीवे देशान्तरगते पतिते भिक्षुकेऽपि वा।
> [1]योगशास्त्राभियुक्ते च न दोषः परिवेदने॥

१ मूले दाराग्निहोत्रसंयोगे।

खञ्ज-वामन-कुब्जेषु गद्गदेषु जडेषु [१]च ।
जात्यन्धबधिरे मूके न दोषः परिवेदने ॥

योगशास्त्राभियुक्ते विषयान्तरविमुक्ते । गद्गदोऽत्यन्ताव्यक्त-स्वरवान् । जड़ः पुनः पुनः शाध्यमानोऽपि स्वरग्रहणासमर्थः ।

छन्दोगपरिशिष्टे कात्यायनः—

देशान्तरस्थक्लीवैकवृषणानसहोदरान् ।
वेश्याभिषक्तपतित शूद्रतुल्यातिरोगिणः ॥
जड़-मूकान्ध-बधिर-कुब्ज वामन-कुण्ठकान् ।
अतिवृद्धानभार्य्यांश्च कृषिसक्तान् नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा ।
कुलटोन्मत्तचौरांश्च परिविन्दन्न दूष्यति ॥

एकवृषण एकाण्डः पण्डविशेषः, वेश्याभिषक्तः सदावेश्या-परायणः। शूद्रतुल्याः "प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदा-चरेत्" इति मनुनोक्ताः गोरक्षादिकर्म्मपरायणाः । कुण्ठकः पाणिरहितः ।

---

१. (ख) गद्गदेष्वग्रजेषु च ।

## अत्र चेयं व्यवस्था।

द्वादशवर्ष-प्रतीक्षणवचनं कनिष्ठस्य धनविद्यार्थं देशान्तरस्थे ज्येष्ठे पुनःपुनः श्रूयमाणकल्याणवार्त्तायाम्। दशाष्टवर्षप्रतीक्षणं तु वयोऽपेक्षया शास्त्रापेक्षया वा देशान्तरकल्याणवार्त्ताश्रवणाल्पत्वोत्कर्षाभ्यां। गौतमस्य षड्वर्षप्रतीक्षणवचनन्तु धनविद्यार्थ-देशान्तरस्थे सर्व्वथा अश्रूयमाणकल्याणवार्त्तायाम्। वर्षत्रयप्रतीक्षणन्तु धर्म्मधनार्थं देशान्तरगते अल्पसमयोक्तेः पारिशेष्यात् कामासक्तप्रोषिते राजसेवके कृषिपरे च ज्यायसि अतित्वरमाणस्य यवीयसः।

तत्र चाग्निहोत्रवदावसथ्याधानेऽपि ज्यायसा अनिष्पादिते कनीयसा निष्पाद्यमाने [1]परिवेत्तृताहेतुर्दोषो भवत्येव कात्यायनेनाधानशब्देनावसथ्याधानाग्निहोत्राधानहोमयोरुभयोरप्युपादानात् कन्याम्युपयमेष्विति गौतमवचनस्याप्युभयसाधारणत्वात् समाचाराद्वा।

हारीतः—

सोदर्य्याणान्तु सर्व्वेषां परिवेत्ता कथं भवेत्।
दारैस्तु परिविद्यन्ते नाग्निहोत्रेण चेज्यया॥

अत्र यद्यपि दारैः परिविद्यन्ते नाग्निहोत्रेण इत्युक्तं तथापि दारपरिवेदनादल्पदोष-प्रतिपादनपरतया तदिति मन्तव्यम्। दाराग्निहोत्रसंयोगमित्यादेः प्रथमत एव मनुना कीर्त्तनात्।

---

१ (क) परिवेत्तुः।

पर्य्याधाने प्रायश्चित्तोपदेशाच्च। एतेनैव नाग्नयः परिविन्दन्तीति व्याख्यातम्।

तथाचापस्तम्बोऽभिनिर्मुक्ताभ्युदितशावदन्ताग्रेदिधीषु दिधीषुपति पर्य्याहित परीष्ट परिविन्न परिवित्त परिविविदानेषु च उत्तरोत्तरस्मिन्नशुचिकरनिर्वेशो गरीयानिति वदन् पर्य्याधानापेक्षया दारपरिग्रहस्याधिकदोषत्वमुक्तवान्।

शातातपः—

नाग्नयः परिविन्दन्ति न यज्ञा न तपांसि च।
न श्राद्धस्य कनिष्ठस्य विकला या च कन्यका॥

हलायुधस्तु—

अनुमतावपि परिवेत्ता विवाहे भवति, अनुमतावग्निहोत्रे तु ज्यायाश्च न परिवेत्तेत्याह।

इति गृहस्थरत्नाकरे परिवेदनतरङ्गः॥

---

## अथावसथ्याधानम्।

तत्र छन्दोगपरिशिष्टे कात्यायनः—

यस्य दत्ता भवेत् कन्या वाचा सपदि केनचित्।
सोऽन्त्यां समिधमाधास्यनादधीतैव चान्यथा॥

सपदि तस्मिन्नेव समये चान्त्यां ब्रह्मचर्य्यसमाप्तिसमयकाम्।

अयमर्थः—

यस्य कृते ब्रह्मचर्य्यावस्थायां केनचित् कन्या दातुं प्रतिज्ञाता

भवति स तस्मिन्नेव काले अग्निमाधाय तस्मिन्नेव अग्नौ समावर्त्तना-द्युत्तरकार्य्यमग्निसाध्यं कर्म्म कुर्य्यात् । आधास्यमान्यां समिध-मादधीतैवेत्यव्यवधानेनैव वाक्यं योज्यम् ।

तथाच गोभिलः—

स तदैवान्यां समिधमभ्यादधीत[1] जायाया वा पाणिं जिघृक्षन् जुहोति तमभिसंयच्छेत स एवास्य गृह्योऽग्निर्भवति ।

तथा—

अनूढ़ैव तु सा कन्या पञ्चत्वं यदि गच्छति ।
न तया तन्त्रलोपोऽस्य तेनैवान्यां समुद्वहेत् ॥

तन्त्रपदेनाच प्रक्रमादावसथ्याधानमभिमतम् । तेनैवाना-हिताग्निना ।

तथा चेन्न लभेतान्यां याचमानोऽपि कन्यकाम् ।
तमग्निमात्मसात् कृत्वा प्रव्रज्याद्‌त्तराश्रमम्[2] ॥

आत्मसात् आत्ममयं कृत्वा मन्त्रेणात्मनि समारोप्येति ।

यदुक्तं—

आत्मन्यग्निं समारोप्य ब्राह्मणः प्रव्रजेद्‌गृहात् । इति ।

पारस्करः—

अथावसथ्याधानं दारकाले दायाद्यकाल एकेषाम् ।

दारकाले पाणिग्रहणोत्तरकाले दायाद्यकाले दायविभा-गोत्तरकाले ।

१ (ख) दधाति ।   २ (ख) क्षिप्रं स्यादुत्तराश्रमी ।

पैठीनसिः—

वैवाहिकमग्निं समिन्धीत सायं प्रातर्यथाकालं समिध अभ्यादध्यात् अग्नये प्रजापतये अनुमतये इति. सायं सूर्य्याय प्रजापतये अनुमतये। अग्नये स्विष्टिकृते च सूर्य्याय प्रजापतये अनुमतये।

इत्यत्र पूर्व्वविधिवाक्यस्थं प्रातरित्यन्वीयते। 'अग्नये स्विष्टिकृत इति सायं प्रातश्चान्वीयते।

हारीतः—

औद्वाहिकग्रहणाद्गृह्यविधानाच्च गृहस्थः। तस्माद्गृहोषित इति गृहपतियाजमाना गार्हस्थ्यधर्म्माः प्रतिपद्यन्ते। दारानागृह्य अग्नीनाधायेत्यभिधाय पञ्चयज्ञा अन्ये च धर्म्माः श्रौताधानोत्तर-कालं कार्य्यत्वेनोक्ताः।

तत् श्रौताधानादपि पूर्व्वं स्मार्त्ताग्न्याधान पुरस्कृत्य भवन्तीत्यनेन वाक्येनाभिधीयते यज्ञस्तत् गृहस्थकार्य्यम्। औद्वाहिको विवाहाग्निः, गृह्याभिधानं गृहस्थोक्तकर्म्माभिधानं तस्मादनन्तरोक्तं गृहोषित इति गृहस्थः। स च गृहस्थः सन् ततः प्रभृति पाक-यज्ञैर्यजेत ततस्तस्य गार्हस्थ्यधर्म्मश्च वर्त्तते नतु श्रौताग्निमपेक्षते। इति।

विश्वामित्रः—

वैवाहिकेऽग्नौ कुर्व्वीत गृह्यं कर्म्म यथाविधि।
पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीं गृहे॥

वैवाहिके विवाहसमयगृहीते गृह्यं कर्म पाकयज्ञादि।

बौधायनः—

भार्य्यादिदायाद्यग्निस्तस्मिन् कर्मकरणं प्रागग्न्याधेयात् ।

प्रागग्न्याधेयादिति । प्राक् श्रौताग्न्याधानात् ।

याज्ञवल्क्यः—

कर्म्म स्मार्त्तं विवाहाग्नौ कुर्व्वीत प्रत्यहं गृही ।

दायकालाहृते वापि श्रौतं वैतानिकाग्निषु ॥

वैतानिको वितानं यज्ञविस्तरः तत्प्रयोजकः ॥

॥ इति गृहस्थरत्नाकरे आवसथ्यतरङ्गः ॥

---

## अथाग्निहोत्राधानादि ।

तत्र वसिष्ठः—

अवश्यं ब्राह्मणोऽग्नीनादधीत । दर्शपौर्णमास्याग्रयणेष्टि-चातुर्मास्य-पशुहोमैश्च यजेत । नैयमिकं ह्येतत् ऋणसंस्तुतञ्च ।

नैयमिकं नियमभवं नित्यमित्यर्थः । ऋणसंस्तुतं ऋणापकरणत्वेन कीर्त्तितम् । जायमानो वै ब्राह्मण इत्यादि वाक्येन ।

शङ्खलिखितौ—

दारानाहृत्याग्न्याधेय-पुनराधेयाग्निहोत्र-दर्श--पौर्णमास-दाक्षा--यण-चातुर्मास्य-पशुसौत्रामण्यन्तैर्हविर्यज्ञैः सप्तभिर्यजेत ।

पुनराधेयं आधानप्रकारविशेषः । दाक्षायणः—

पञ्चदशवर्षावधितया दर्शपौर्णमासयोरेव पर्व्वावृत्त्यनुष्ठानेन प्रकारविशेषो याज्ञिकप्रसिद्धः ।

पैठीनसिः—

मुखमग्निर्देवानां मनुष्याणां तस्मादग्निमादधीत अग्निमुखा देवा, हव्यं वहति देवानां कव्यं पितृणां सायंप्रातर्बलिहरणं दर्श-पौर्णमासौ वेष्टिरष्टका पशुबन्धः पिण्डपितृयज्ञ इति पाकयज्ञः।

हव्यं वहति देवानामित्यत्र अग्निरिति शेषः। कव्यमित्यत्रापि वहतीत्यनुषज्यते।

आपस्तम्बः—

पञ्चादिकरणममावस्यादिश्राद्धं श्रावणीकर्म आग्रयणीक्रिया आश्वयुजीकर्म चैत्रीविधानमग्न्याधानमग्निहोत्रं दर्शपौर्णमासकर्म चातुर्मास्यकर्म पशुबन्धनम् सौत्रामणीकरणमग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेय अतिरात्रं आप्तोर्य(र्या)म इति सोम-यागाननुतिष्ठेत्।

अमावस्यादीत्यादिपदेनाष्टकादिपरिग्रहः।

देवलः—

हुतः प्रहुतोऽहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति पाकयज्ञसंस्थाः सप्त। अग्निहोत्रमग्न्याधेयं दर्शपूर्णमास वापन-सवनयज्ञाः चातुर्मास्याः सौत्रामणीतीमा हविर्यज्ञसंस्थाः सप्त। अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो त्रिरात्रमाप्तोर्य्याम इतीमाः सोमसंस्थाः सप्त। एकविंशतिविधो यज्ञोऽध्वरो वेद उक्तः।

अयनयज्ञ-वाजपेयाश्वमेधराजसूयपौण्डरीकगोसवादयो महा-यज्ञाः क्रतवः। एतावदिति कालमुद्दिश्य यज्ञोऽयं व्रत-दानाद्यनुष्ठानं सर्वे पक्वापक्वान्नेन पञ्चपदा यज्ञप्रवृत्तिरिति।

यज्ञः कृतः। देवोद्देशेन होमः प्रहुतः। ब्राह्मणाय पाकाग्नि-
दानमहुतः। [1]वास्तुपतिभूतेभ्यो बलिहरणं। रुद्रदैवतपुरुषयागः
स्थालीपाकाङ्गकः. शूलगवः। बलिहरणं, सर्पाय मणिदानं।
प्रत्यवरोहणं मार्गशीर्ष्यां प्रत्यवरोहणमित्याद्युक्त्वा अस्तमिते
स्थालीपाकस्य जुहुयात् इत्याश्वलायनोक्तम्।

अयनयज्ञो निरूढपशुयागः, एतावदिति-कालमुद्दिश्येति
द्वादशरात्रादिसहस्रदिनपर्य्यन्तं यज्ञाङ्गकालमुद्दिश्येत्यर्थः।

पञ्चपदा पञ्च स्थालीपाकयज्ञसंस्था हविःसंस्थाः सोमसंस्था
महायज्ञाः सत्ररूपाः पञ्चप्रकारा इति यावत्।

बौधायनः—

अग्न्याधेयप्रभृत्यथेमानि अजस्राणि भवन्ति यथैतदग्न्याधेय-
मग्निहोत्रं दर्शपौर्णमासावाग्रयणमुदगयन-दक्षिणायनयोः। पशु-
चातुर्मास्यानि ऋतुमुखे षट् होता वसन्ते ज्योतिष्टोम इत्येवं
क्षेमप्रापणं[2]।

अजस्राणि स्वकाले आवश्यकानि। षड्ढोता वाग्घोतेत्यादि-
मन्त्रेण षट् ऋतुमुखेष्वाहुतिः। क्षेमप्रापणमकरणनिमित्त-
प्रत्यवायपरीहारः।

मनुः—

अग्निहोत्रञ्च जुहुयादाद्यन्ते द्युनिशोः सदा।
दर्शेन चार्द्धमासान्ते पौर्णमासेन चैव हि॥
शस्यान्ते नवशस्येष्ट्या तथर्त्त्वन्ते द्विजोऽध्वरैः।

१ (ख) —पाल—। २ (क) प्रयोगम्।

पशुना त्वयनस्यान्ते समान्ते सौमिकैर्मखैः ॥
नानिष्ट्वा नवशस्येष्ट्या पशुना चाग्निमान् द्विजः।
नवान्नमद्यान्मांसं वा दीर्घमायुर्जिजीविषुः ॥
नवेनान्नेन चानिष्ट्वा पशुहव्येन चाग्नयः।
प्राणानेवात्तुमिच्छन्ति नवान्नामिषगर्द्धिनः ॥

आद्यन्ते द्यु-निशोरिति शायं— प्रातःसन्ध्ययोरित्यर्थः। त्वयनेति त्वयनपचे चतुर्षु चतुर्षु मासेषु अध्वरैश्चातुर्मास्ययागैः पशुहव्येन पशुहविषा।

हारीतः—

अग्निहोत्रवशयज्ञाभिजितमश्नीयादन्यमभिजितात्मनस्त्वग्दा-रुभिरिन्धानो वानस्पत्यमभिजयत्यद्भिः पय आज्यादि। व्रीहियवाद्या ओषधयः, पशुना पशुयज्ञाभिजितं यज्ञेन कृत्वा पुरुषेण भक्ष्यता-मापादितम् तदन्यमभिजितं अभिजितां मध्ये यज्ञाभिजितम्, अन्यमभिजितम् नाश्नीयात् ॥

कुतस्तदन्याभिजिता सशस्यैकत्वात् पापवत्त्वादित्यर्थः। नत्वेवं त्वक्फलादीनामपां मानुषादीनां महिष्यादिपयसः सविकारस्य मृगादीनां वा यज्ञियत्वात् तद्भक्षणे कथं न दोष इत्यत आह दारुभिरित्यादि।

वानस्पत्यं वनस्पतिभवफलादि, अद्भिः पाकादिकाले अभिषेको-पयुक्ताभिः पयसादिभिर्यज्ञोपयोगिभिर्द्रव्यैः। आदिशब्देन दध्यादिग्रहणं पशुना छागादिना यज्ञोपयुक्तेन पशून् ग्राम्यारण्यान् अभियजतीत्यन्वयः।

याज्ञवल्क्यः—

प्रतिसंवत्सरं सोमः पशुप्रत्ययनं तथा।
कर्त्तव्याग्रयणेष्टिश्च चातुर्मास्येन चैव हि॥
एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं द्विजाः।
हीनकल्पं न कुर्वीत सति द्रव्येऽफलप्रदम्॥

हीनकल्पमनुकल्पं न कुर्य्यादित्यर्थः। सति द्रव्ये प्रथमकल्प-निर्वाहके द्रव्ये विद्यमाने। अत्र हेतुर्यतोऽफलप्रदं तदनु-कल्पाचरणम्।

यजेतेत्यनुवृत्तौ विष्णुः—

शरद्ग्रीष्मयोश्चाग्रयणेन व्रीहियवयोः पाके वा।

जावालः—

सायं प्रातः सदाभ्यस्तं वैतानं जुहुयाद्द्विजः।
दर्शेन चार्द्धमासेन पूर्णमासेन चैव हि॥
शस्यपक्वौ नवेष्ट्या च चातुर्मास्यैर्ऋतोर्मुखे॥
[1]अयनादौ निरूढेन पशुना वत्सरेण वा।
समाप्ते सोमयागेन दिष्ट्या युक्तो न संशयः॥

हारीतः—

नाग्निहोत्रात् परो धर्म्मो नाग्निहोत्रात् परं तपः।
नाग्निहोत्रात् परं दानं नाग्निहोत्रात् परो दमः॥
नाग्निहोत्रात् परा पूजा[2] नाग्निहोत्रात् परं यशः।

१ (ख) पुस्तके अयनादौ इति पङ्क्तिः पतिता। २ (ख) श्रेयः।

नाग्निहोत्रात् परा सिद्धि र्नाग्निहोत्रात् परा गतिः।
नाग्निहोत्रात् परं स्थानं नाग्निहोत्रात् परं व्रतम्॥

तथा—

अग्निहोत्रादिभिः पूतो नियतात्मा जितेन्द्रियः।
सूक्ष्मात् सूक्ष्ममवाप्नोति गगने सुषिरं यथा॥

यथा गगने महाकाशे सुषीरात्मकमाकाशं दृश्यते इत्यर्थः।

जावालः—

सन्तोषामृतमासाद्य तन्मना धर्म्मवित्तरः।
अकामेनाग्निहोत्रस्य होता स्वर्ज्योतिराप्नुयात्॥

अथ पैठीनसिः—

अग्निमेधेनोपासीत नान्यं दैवतम्। अग्निर्भूम्यामिति विज्ञायते। न प्रवसेत्। यदि प्रवसेदुक्तमुपस्थानं चलितस्य प्राशितमन्वाधेयं जुहुयात्। नवेष्ट्यामेवमौपासनस्य उक्तम्।

कल्पसूत्रोक्तमुपस्थानं कर्त्तव्यमिति शेषः।

चलितस्याप्रोषितस्य प्राशितं यजमानप्राशनीयभागं एवमावश्यसम्बन्धिन्यां नवेष्ट्यामौपासनस्य यजमानस्य प्राशितं यजमानप्राशनीयमग्नौ क्षिपेदित्यर्थः।

अङ्गिराः—

लौकिकं वैदिकं वापि यज्जुहोति यथाविधि।
वैदिकात् स्वर्गमाप्नोति लौकिकं स्वर्गसाधनम्॥

वैदिकात् श्रौतात् स्वर्गं मोक्षम्।

देवलः—

नाग्निहोत्रं समादा(धा)य जीवितार्थमपि त्यजेत्।
सर्व्वं वेदास्तदस्य हि लोके ब्राह्मणजन्म च[1] ॥

मनुः—

न वै कन्या न युवति र्नाल्पविद्यो न बालिशः।
होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्तथा ॥
नरके हि पतन्त्येते जुह्वतः स च यस्य तत्।
तस्माद्वैतानकुशलो होता स्याद्वेदपारगः ॥

अल्पविद्योऽत्र प्रतिनिधि-प्रायश्चित्ताद्यनभिज्ञः। बालिश षोडशवर्षादवरवयस्कः। आर्त्तो रोगादिप्रसक्तहोमासमर्थः। असंस्कृतो गर्भाधानादि-संस्कारशून्यः। एते कन्यादयो जुह्वतो होमं कुर्व्वाणा नरके पतन्ति यस्य वाऽग्निहोत्रिणस्तमग्निहोत्रिणं नरके पातयन्तीत्यनुषज्यते ॥ वैतानशब्दो अग्निचयमाध्यकर्म्मपरः। कन्यादीनाञ्चाग्निहोत्र-ऋत्विक्प्रतिनिधित्वेन प्रसक्तानां निषेधः।

छन्दोगपरिशिष्टे कात्यायनः—

असमक्ष्यन्तु दम्पत्योर्होतव्यं नर्त्विगादिना।
द्वयोरप्यसमक्षं हि भवेद्धुतमनर्थकम् ॥
विवाहाग्नौ सभार्य्यस्येत् सीमामुल्लङ्घ्य जुह्वति।
होमकालात्यये तस्य पुनराधानमिष्यते ॥
अरण्योः क्षयनाशेऽग्निदाहे त्वग्निसमाहितः।
पालयेदुपशान्तेऽस्मिन् पुनराधानमिष्यते ॥

१ (क) जन्मनः।

सीमा अग्न्याधानादिसीमा दम्पत्योः पत्नीयजमानयोः सीमान्तभूतयोर्होमकालातिक्रमे पुनराधानमित्यर्थः। अरण्योः निर्मन्थदारुद्वययोः। नाशोऽदर्शनं, समाहितः सम्यगग्निरक्षणानुकूलयत्नः।

हारीतः—

अहुतपाकयज्ञः सर्व्वशूनाकृतेभ्यः पूतो भवति। यथा प्रजानामशनमेवमग्नेरग्निहोत्रमिति श्रुतिः। यथा अनश्नन्त्यः प्रजा अनीयस्त्वमुपयान्ति प्रमीयन्तौ चैवं विच्छिन्नाग्निहोत्रा अग्नयः। क्रतुनोपपन्नेनाप्यत्रमीयस्त्वमुपयान्ति प्रमीयन्तीति वा। तस्माद्धुत्यै गुप्त्यै वा अग्नेरग्निहोत्रमिति श्रुतिः।

आयुष्कृतं यजमान आयुरेव प्राणाग्निहोत्रं यथाहृप्तिसमर्थो भवत्येवमविच्छिन्नाग्निहोत्राग्नयः हृप्ताः प्रीताः क्रतुषु सम्भवन्तीति। जरामर्त्यायैवं सत्राय दीक्षते।

यो दर्शपौर्णमासमारम्भणीयं करोति स पौर्णमासेन हविषौषधिषु सान्नाय्यपशुषु सम्भवित्वात्। यः सोममसावास्येन दर्शेन यजमाप्याययति स सोमयाजी तस्माद्दर्शसंस्थो दर्शपौर्णमासावुपेत्य प्रथममेव पूतोऽमृतत्वमुपगच्छति अतिरेकाद्न्यैः।

स द्विविधो द्रव्येज्यान आत्मेज्यानश्च योऽस्त्येव द्रव्यमिति फलमभिसन्धाय सोपधं वा यजते स द्रव्येज्या।

अथ श्रुतिस्मृत्यात्मज्ञानवान् अमृतं हविर्भूताधिदैवतमध्यात्मभूतं वैश्वानरं यजति स आत्मेज्या। तदप्येतदृचोक्तं वैश्वानरमतिथिभूतमाददानमन्तर्विधौ परमे ब्रह्मणि आत्मनि आत्मानमभिसंविदानः प्रतिसायमरतिर्य्याति विद्वान्।

सम्यक् वीरमतिथिं रोचयन्त[1] इमान् लोकानमृतान् सञ्चरेमः। इति।

अचुल्लपाकयज्ञः अस्खलितपाकयज्ञः। अयञ्च पूर्व्वोक्तानुवादः। फलोपदर्शनाय यथा ,प्रजानामन्नमित्यादिना श्रुतिरित्यन्तेनाग्निहोत्रस्य नित्यता दर्श्यते।

लौकिकाशनदृष्टान्तेन अनश्नन्त्यः भोजनमकुर्व्वाणाः अनीयस्त्वं कृशत्वं क्रतुना दर्शपौर्णमासादिना उपपन्नेन सिद्धेन अवसीयस्त्वमश्रेष्ठत्वं धृत्यै स्वरूपावस्थितये गुप्त्यै रक्षणाय।

आयुष्कृत्तं यजमान इत्यादिना सम्भवन्तीत्यन्तेन प्राणाग्निहोत्रदृष्टान्तेनाग्निहोत्राख्यतृप्तानामग्नीनामुत्तरक्रतुषु समर्थत्वं दर्श्यते।

आयुःकृतं प्राणाग्निहोत्रकृतम्। तदेव विवृणोति आयुरेव प्राणाग्निहोत्रमिति। आयुरत्रायुर्वर्द्धनहेतुः तृप्ताः शक्ताः जरामर्त्याय जरामरणपर्य्यन्तं अतिरेकादनुष्ठानं कार्य्यम्।

जरामर्त्यायेत्यादि अतिरेकादन्यैरित्यन्तेन।

आरम्भणीयेषु प्रथममेव दर्शपौर्णमासौ प्राप्य पूतो भवति अन्यैस्तु द्वितीयादिप्रयोगैर्जरामरणपर्य्यन्तैरतिरेकादनुष्ठानबाहुल्यादमृतत्वमुपगच्छतीत्युच्यते। औषध्यादिषु सोमस्य सम्भवित्वात् सोमेन यजमानस्य सोममाप्याययति स द्विविध इत्यादिना सञ्चरेम इत्यन्तेन याग एवाधिकारिविशेषेण फलविशेष उक्तः।

सोपधं नैमित्तिकाद्युपाधिसहितं श्रुत्यादीत्यत्र शास्नपदं

[1] (क) प्रेरयन्तु।

प्रत्येकाग्न्ययि नेयं, अमृतं ब्रह्म हविर्भूतं हविरात्मकं अधिदैवत-मधिदैवतात्मकत्वमध्यात्मभूतं वैश्वानरं विश्वनरनयनहेतुं एव भावापन्नौ यज्जननं स आत्मज्योतिर्नयम्?।

वैश्वानरमित्यादि वैश्वानरमतिथिभूतं आददानमादरेणोप-चरन्तं अन्तर्विधौ अन्तर्यजने आत्मनि आत्मानं जीवाख्यं अभिसन्धिदानो अध्यासेन[1] एकत्वेनोपलभमानः अरतिरपगत-बाह्यविषयानुरागः अभिसन्धिदानो परमाकाशे परमात्मनि यदि तदैक्यं याति तदात्मभाव[2]मनुभवतीत्यर्थः। प्रतिमायं प्रतिसन्ध्यं होमकाल इत्यर्थः। इदञ्च नित्यकालोपदर्शनार्थम्।

पुनर्हारीतः—

अक्षराद्ब्रह्म भवति ततः कर्म्म ततः क्रतुः।
ततः पर्ज्जन्यस्ततो नित्यं ततो भूतानि यज्ञिरे॥
यज्ञात् प्रजा विश्वतः सम्भवति यज्ञो धारयति प्रजाः।
यज्ञो भूतं सर्व्वं यज्ञो वेद इमास्तनूः॥
यजमानस्य ये निन्दां प्रवदन्त्यबुधा जनाः।
यज्ञापोढस्य ते तस्य पापं गच्छन्त्यचेतसः॥
नास्त्ययज्ञस्य लोको वै नायज्ञो विन्दते शुभम्।
अनिष्टयज्ञोऽपूतात्मा भ्रश्यते भिन्नपात्रवत्॥
यज्ञेन लोका विमला विभान्ति
यज्ञेनादरादमृतत्वमाप्नुवन्।

१ (ख) ध्यानाभ्यासेन। २ (ख) आत्मीमखं।

यज्ञेन पापैर्बहुभिर्विमुक्तः
प्राप्नोति लोकान् परमस्य विष्णोः ॥

निश्वसितमिदं यदृग्वेद इत्यादि श्रुतेः।

ततो वेदात् कर्म्म क्रिया, क्रतुर्योगः विस्मृतः सर्व्वतः, तनु शरीरं यज्ञापोढ़ं यज्ञेनापोढ़ं निराकृतमिति यावत्, तस्य यजमानस्य।

वायुपुराणे—

दर्शञ्च पौर्णमासञ्च ये यच्छन्ति द्विजातयः।
न तेषां पुनरावृत्तिर्ब्रह्मलोकात् कदाचन ॥

पुनर्हारीतः—

दिव्याकृतिमवाप्नोति अहरहरग्निहोत्रदर्शपौर्णमासाग्रयण चातुर्मास्येष्टिपशुबन्धप्रभृतिभिर्विधिवदृत्यतिरेकादग्निष्टोमाद्यैः प्रवृत्तिः। प्रवृत्तिरनुष्ठानमिह मतं तस्यातिरेकादुत्कर्षः।

वशिष्ठः—

अश्रद्धाशीलोऽस्पृहयालुरलमग्न्याधेयाय नानाहिताग्निः स्यादलञ्च सोमपानाय नासोमयाजी स्यात्।

अस्पृहयालुः परद्रव्यादानेच्छाशून्यः, अलं समर्थः सामर्थ्यन्तु धनात्मकम् ॥

मनुः—

यस्य त्रैवार्षिकं भक्तं पर्य्याप्तं भृत्य-वृत्तये।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥
अतस्वल्पीयसि द्रव्ये यः सोमं पिवति द्विजः।

स पीतसोमपूर्व्वोऽपि न तस्याप्नोति तत्फलम् ॥

त्रैवार्षिकं त्र्यंचयवर्त्तनं भावि येन वित्तेन भृत्या अवश्यपोषणीयाः।

याज्ञवल्क्यः—

त्रैवार्षिकाधिकान्नो यः स सोमं पिबति द्विजः ।

प्राक्सोमकीः क्रियाः कुर्य्याद्यस्यान्नं वार्षिकं भवेत् ॥

प्राक्सोमकीः सोमात् प्राक् प्राक्सोमं तत्र भवाः चातुर्मास्या-द्यात्मिकाः क्रियाः । एतच्च काम्यसोमपानवन्नित्यसोमपानेऽपि द्रष्टव्यम् ।

सोमं पिबतीति सामान्यत एव श्रवणात् त्रैवार्षिकान्नः प्रत्यहं सोमेनेति प्रत्यहं शब्देन विष्णुना नित्यस्यापि प्रतिपादनात् । विष्णुनैव च सोमाभावे इष्ट्या वैश्वानर्य्या वेति प्रतिनिधितया वैश्वानरीविधानात् ।

न च—

काम्यासम्भवे वैश्वानरीविधानमिति युक्तं, काम्ये प्रतिनिधेर-भावात् । याज्ञवल्क्येन प्रतिसंवत्सरं सोममित्युक्त्वा तदभावे वैश्वानरीविधानात् ।

मनुः—

इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्य्यये ।

कॢप्तानां पशुसोमानां निष्कृतिः स्यादसम्भवे ॥

कॢप्तानामावश्यकतया प्राप्तानां निष्कृतिस्तत्[1]करणे नित्यप्रत्यवाय-परीहारः । असम्भवे पूर्व्वोक्तधनपर्य्याप्तेः ।

---

१ (ख) तदकरणजनित प्रत्यवाय ।

तथा— पुण्यान्यन्यानि कुर्व्वीत श्रद्दधानो जितेन्द्रियः।
न त्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथञ्चन॥
इन्द्रियाणि धियः काममर्थं[1] कीर्त्तिं प्रजाः पशून्।
हन्त्यल्पदक्षिणो यज्ञस्तस्मान्नाल्पधनो यजेत्॥
प्राजापत्यमदत्त्वाश्वमग्न्याधेयाय दक्षिणाम्।
अनाहिताग्निर्भवति ब्राह्मणो विभवे सति॥

अन्यानि पुण्यानि यज्ञोपयोगिकरणादत्यन्तधनसाध्यानि दानादीनि। अल्पदक्षिणैरिति अल्पत्वञ्च विहितद्वादशशतादिसंख्यापेक्षया, अश्वः प्राजापत्यः स्वभावत एव तस्य प्रजापतिदेवताकत्वात्। अनाहिताग्निर्भवति अग्न्याधेयफलशून्यो भवतीत्यर्थः।

राजधर्म्मेषु शङ्खलिखितौ—

—नाल्पसम्भारो यजेत नापि संवत्सरवृत्तिरनिष्टं हि राष्ट्रे निपतत्यनिष्टं यज्ञवसनं यजमानं छादयति।

अनिष्टं पशुजनविरहः। यज्ञवसनं अवैधयज्ञः स हि तं छादयति पापे संयोजयति।

पुनश्च शङ्खलिखितौ—

ऋत्विग्भिस्तु समायुक्तः पत्नीपशुसमन्वितः।
यज्ञे न देवानाप्नोति यावन्नाप्नोति दक्षिणाम्॥
प्रत्याश्रमं स्थिता वर्णाः कर्म्मभिर्व्यक्ततां गताः।
नियमाचारधर्म्माणां ब्राह्मणस्तत्र देशकः॥
सम्पूज्यः सोऽर्चनीयश्च गुरुः संस्कारकर्म्मकृत्।

१ (ख) आयुः।

पूज्यो मधुपर्कादिना, अर्च्चनीयो दक्षिणादिना।

अग्नयस्तन्मुखाः सर्व्वे वेदाश्चाग्निमुखाः स्मृताः॥

ऋचो यजूंषि सामानि अथर्व्वाङ्गिरसानि च।

तानि विप्रेष्वधीतानि ते च्यग्ना आप्तदक्षिणाः॥

आप्तदक्षिणाः सम्यक् विहितप्राप्तदक्षिणाः एतेन ब्राह्मणप्रशंसा-द्वारेण सम्पूर्णदक्षिणादानं कार्य्यत्वेन प्रतिपाद्यते।

छन्दोगपरिशिष्टे कात्यायनः—

नैकयापि विना कार्य्यसाधनं[1] भार्य्यया द्विजैः।

अकृतं तद्विजानीयात् [2]सर्व्वानन्वारभन्ति यत्॥

वर्णज्येष्ठेन बह्वीभिः सवर्णाभिश्च यत्नतः[3]।

कार्य्यमग्निच्युतेराभिः साध्वीभिः मन्थनं पृथक्॥

नात्र शूद्रां नियुञ्जीत न द्वेषद्रोहकारिणीम्।

नाग्रामनस्थामन्येन पुंसा सह न सङ्गताम्॥

ततः शक्ततरा पश्चादासामन्यतमैव या।

उपेतानांश्चान्यतमा मन्थेताग्निं निकामतः॥

भवन्ति सदाधिकुर्व्वन्ति एतेनानेकपत्नीत्वे एकापि पत्न्यन्य-सन्निधौ अग्न्याधानं कार्य्यं बह्वीष्वनेकवर्णानेकासु वर्णज्येष्ठैवाग्निमन्थनं कुर्य्यात्। कार्य्यमित्यादि आभिः सवर्णाभिः सर्व्वाभिश्चरेदधिम-वाक्यस्थदोषशून्याभिः पृथक् मन्थनं कार्य्यं आ अग्निच्युतेः यावदर-णीभ्यामग्निधमनम्। नाग्रामानस्थां भर्त्तुराज्ञोल्लङ्घिनीं ततः शक्त-

१ (ख) आधानं। २ मूले सर्व्वामन्या भवन्ति यत्। ३ मूले जन्मतः।

तरेति ततोऽग्निमन्थनस्य पश्चात् अनन्तरम् ग्रन्थतरा अग्नि-
शुश्रूषादिक्षमा अनेकासु सवर्णासु मध्ये अग्निं परिचरेदित्यर्थः।
उपेतानामिति—

उपेतानां ग्रन्थतराणामेव समीपस्थानां मध्ये यथेच्छमग्निमेका
परिचरेत्।

याज्ञवल्क्यः—

दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः।
आहरेद्विधिवद्दारानग्निं वैवाहिकं स्वयम्॥

वृत्तमिह यथोक्तस्त्रीधर्माचारः, विधिवद्यथोक्तविवाहप्रकारेण।

स्त्रीधर्मानन्तरं मनुः—

एवञ्चतुर्णां वर्णानां द्विजातिः पूर्व्वमारिणीम्।
दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्म्मवित्॥
भार्य्यायै पूर्व्वमारिण्यै दत्त्वाग्नीनन्त्यकर्म्मणि।
पुनर्दारक्रियां कुर्य्यात् पुनराधानमेव च॥

अन्त्यकर्म्म दाहात्मकम्।

छन्दोगपरिशिष्टे कात्यायनः—

ज्येष्ठा चेत्तु सभार्य्यस्य[1] चाभिचारेण गच्छति।
पुनराधानमत्रैके इच्छन्ति न तु गौतमः॥
दाहयित्वाऽग्निना भार्य्यां सद्वृत्तां पूर्व्वसंस्थिताम्।
गो(पा)त्रैश्चाथाग्निमादध्यात् कृतदारो विपश्चितः॥

अभिचारो व्यभिचारः। पूर्व्वसंस्थितां पूर्व्वमृतां। अथाग्नि-

१ क्वचित् चेद्बहुभार्य्यस्य।

नेतिपदं मनूक्तस्याग्निहोत्रेणेति पदस्य स्मार्त्ताग्नेरप्युपलक्षणम्। भार्य्यापदमप्याकारवत्सर्व्वज्येष्ठ-कनिष्ठ-पत्नीपरं भार्य्यादिपदैरविशेषतस्तत्र[1] भार्य्यामात्रप्रतिपादनात्।

न चाग्नयो वापि ते ये पत्न्यां मृतायामाध्रियन्त[2] इति कठश्रुतावविशेषेण ज्येष्ठ-कनिष्ठ-पत्नीमरणेऽग्नित्रयत्याज्यत्वबोधनात्।

यानि तु वाक्यानि—

'मृतायामपि भार्य्यायां वैदिकाग्निं न हि त्यजेत्।
उपाधिना तु तत्कर्म्म यावज्जीवं समापयेत्॥
यो दहेदग्निहोत्रेण स्वेन भार्य्यां कथञ्चन।
स स्त्री सम्पद्यते तेन स्त्रीदाहो न पुमान् भवेत्॥
द्वितीयाञ्चैव भार्य्याञ्च दहेद्वैतानिकाग्निभिः।
जीवन्त्यां प्रथमायाञ्च सुरापानसमं हि तत्॥
मृतायाञ्च द्वितीयायां योऽग्निहोत्रं समुत्सृजेत्।
ब्रह्मोज्झं तं विजानीयात् यश्च कामात् समुत्सृजेत्॥
वर्हिषस्तरणं मन्त्रैर्न पश्चात् चेदपत्नीकः।

इत्येतानि सन्दिग्धमूलकानि असवर्णद्वितीयपत्नीमरणविषयाणि वा॥

इति गृहस्थरत्नाकरे अग्निहोत्राधानतरङ्गः॥

---

१ (ख) एव। २ (ख) धार्य्यन्ते।

## अथ यजन-याजने।

अत्र बौधायनः—

यथाग्न्याधेयो[1] यद्देवा देवहेडनं, [2]यददीव्यन्नृणमहं बभूव। आयुष्टेविश्वतो दधदिति पूर्णाहुतिं हुत्वाग्निहोत्रमारप्स्यमानो दशहोतारं[3] हुत्वा, दर्शपौर्णमास्यावारप्स्यमानश्चतुर्होतारं चातुर्मास्य-मारप्स्यमानो पञ्चहोतारं हुत्वा पशुबन्धे षड्ढोतारं हुत्वा, सोमे सप्तहोतारमिति। विज्ञायते कर्म्मादिष्वेतैर्जुहुयात् ततो[4] देवलोकं समश्नुत इति हि ब्राह्मणम्।

दशहोतारमित्यनेन दशहोतारं परिविश्ति श्रुतीत्यादि-मन्त्रविशेष उपलक्ष्यते। एवञ्च पञ्चहोतारमित्यादावपि।

उक्ताग्न्याधेयादिकर्म्मारम्भेषु।

आपस्तम्बः—

पाणिग्रहणादधि गृहमेधिनोर्व्रतं कालयोर्भोजनमतृप्तिश्चान्नस्य। पर्व्वसु चोभयोरुपवासः। औपवस्तमेव[5] एककालान्तरे भोजनं तृप्तिश्चान्नस्य। यच्चैतयोः प्रियं स्यात्तस्मिन्नहनि भुञ्जीयातामधश्च शयीयातां मैथुनवर्ज्जनञ्च। श्वोभूते स्थालीपाकः। तस्योपचारः पार्व्वणेन व्याख्यातः। नित्यं लोक उपदिशति। यत्र क्वचनाग्नि-मुप(समा)धास्यन् तत्र प्राचीरुदीचीश्च तिस्रस्तिस्रो लेखा लिखित्वा

१ मूले अथाग्न्याहुतीरुपजुहोति।
२ (ख) पुस्तके यददीवन्नृणमहं।
३ मूले होता हुत्वा।
४ मूले पूतः।
५ (ख) औपवस्तम्।

अग्निरभ्युद्धाग्निमुपसमिन्ध्यात् । उत्सिच्यैतदुदकमुत्तरेण पूर्व्वेण वान्यदुपदध्यात् । नित्यमुपधानान्यग्निरशून्यानि स्युरिति ।

पाणिग्रहणाद्वारपाणिग्रहणादूर्द्धं गृहमेधिनोर्जायापत्योः व्रतं नियतं कर्म्म एककमविवर्जितं । कालयोः सायंप्रातःकालयोः । अष्टमिरस्य अन्नकरणिका तृप्तिर्न कार्य्या इत्यर्थः ॥ आहितार्थयोगे करणे षष्ठी । पर्व्वसु पौर्णमास्यामावस्ययोः । उभयो जायापत्योरुपवासोऽशनविरहः । किञ्चोपवस्तमेव औपवस्तञ्च तदेव च भोजनं ग्राम्यारण्यं द्रव्यं भुक्का गार्हपत्याहवनीयसमीपे वत्सरं[1] तदेव च भोजनं कालान्तरे नत्वम्याधानानन्तरमेव सायं प्रातःकालयोर्वा किन्त्वपराह्ने व्रतोपासनीयमश्नीतेति कात्यायनवाक्यात् । तृप्तिश्चास्येति आपस्तम्बशाखिनाममावस्याविषयं पौर्णमासात् या परस्तान्तौ इति अहितौ इति कल्पसूत्रोक्तेः ।

प्रियं विहितानामाज्यदध्यादीनामन्यतममेकस्मिन्नहनि पौर्णमास्यमावस्यादिनयोः, अधो न पर्य्यङ्कादौ श्वोभूते प्रतिपदीत्यर्थः । उपचारः फलीकरणादिः पार्व्वणेन पर्व्वभवेन स्थालीपाकेन उपसमिन्ध्यात् दीपयेत् उत्सिच्य उदकं यस्यां कस्याञ्चिद्दिशि अन्यदुदकान्तरं उपधानानि च वल्कलादीनि नित्यं यावत्प्रयोगकालम् । हारीतः— देवपित्रर्थं श्वोभूतेऽप्युपवस्तं नैवातिकामश्नीयात् ।

श्वोभूते दर्शपौर्णमासास्यामन्यत्रापि कार्य्यं । श्वोभाविनि सति उपवस्तं भोजननियमविशेषः— अमाषमनामिषं अमांसं अक्षारलवणं व्रतं रचयतीति वचनेन विहितम् ।

[1] (ख) वसनं ।

पैठीनसिः—

औपवसथ्येऽहनि भुक्तं हविष्यमित्युक्तं। न कृष्णेऽनृतं वदेत् न वृथा जनैः सह संभाषेत। शुचिर्दान्तोऽप्रमत्तोजितेन्द्रियो भजेत्। मध्याह्नस्योपरिष्टाद्धविष्यं बहिरेधांसि सन्निधाप्याग्निपरिग्रहणं कृत्वा न प्रसरेदधः शयीत कामं बाधयेत् पौर्णमास्यां कृष्णस्नस्वरलंकृतोऽभ्यक्तो गन्धपुष्पाणि सेवेत। पितरोहवे शुचिकामः। श्राद्धकल्पेन ब्राह्मणतर्पणं व्याख्यातम्।

औपवसथ्येऽहनि यागदिनात् पूर्व्वदिने भुक्तं भक्ष्यं. अग्निपरिग्रहोऽत्र बर्ह्यादीनां यष्टव्यत्वेन संकल्पः। अभ्यक्तो घृतादिना, श्राद्धकल्पेन श्राद्धप्रकारेण ब्राह्मणतर्पणं। पौर्णमास्यामावस्ययोर्बहून् ब्राह्मणान् भोजयेदित्यर्थः।

बौधायनः—

अहतवाससां शुचिरिति तस्माद्यत्किञ्चेज्यासंयुक्तं स्यात्। सर्व्वन्तदहतैर्वासोभिः कुर्य्यात्।

प्रक्षालितोपवातान्यक्लिष्टानि वासांसि पत्नी यजमानावृत्विजश्च परिदधीरन्नेवंक्रमेणोर्द्ध्वं दीर्घसोमेषु सर्व्वत्रैव ऋत्विजो यथा समाम्नातं स्याद्यथैतदभिचरणीयेष्विष्टि-पशुसोमेषु लोहितोष्णीषा लोहितवाससश्च ऋत्विजः प्रचरेयुः चित्रवाससः। चित्रसंख्या(ज्ञा)न्त्रषाकपावितिति च।

तथा क्षौमवासांसि तेषामलाभे कार्पासिकान्यौर्णानि वा भवन्ति।

अहतानां वाससां सम्बन्धी पुरुषः क्रियाधिकारी स्यादिति

यत्किञ्चिदिज्याद्युक्तं तदहतवासोधारणवता पुरुषेण कर्त्तव्य-मित्यर्थः । अहतवाससा शुचिरिति क्वचित् पाठः तदा-व्यक्त एवार्थः ।

लक्ष्मीधरस्तु—

वाससां मध्ये अहतं वासः श्रेष्ठं तद्धर्ता क्रियमाणो यज्ञः शुचिरिति व्याहृतवान् । उपवात्मनि शुक्लानि अक्लिष्टानि अक्लिष्टानि दीर्घसोमो दीर्घकालव्यापी सोमः सर्व्वत्रैव सर्व्वकर्म्मणि ऋत्विजो यथासमाम्नातं यथाविहितं वासः परिदधीरन् । तदेव वस्त्रविधापनं दर्शयति यथैवमित्यादि । अभिचरणीयमभिचार-साधनं श्येनादि वृषाकपौ अत्राप्याभिचारिककर्म्मणि क्षौमाणी त्यादिना पत्नीयजमानयोरेव प्रकृतत्वात् आधाने वासोऽन्तर-विधिरयं । वासोऽन्तरं तन्तुभवम् । क्षौमाणि अतसीतन्तुभवानि । यमः— यज्ञकाले तु वर्णानामाच्छादनविधिं शृणु ।

कृष्णाजिनं ब्राह्मणस्य वैयाघ्रं क्षत्रियस्य तु ।
वस्ताजिनञ्च वैश्यस्य शाणं क्षौमञ्च सर्व्वतः ॥

वस्तश्छागः शाणं शणभवं क्षौमञ्च सर्व्वतः सर्व्वेषां द्विजातीनां सर्व्वविभक्तिकत्वात् तस्। एतच्च त्रयाणां कृष्णाजिनाद्य-भावे वैकल्पिकं बोध्यं उत्तरत्र वस्त्राभिप्रायेण कृष्णाजिनादिविधि-रधोवस्त्राभिप्रायेण शाणादिविधिरित्यन्ये ।

बौधायनः—

उत्तरत[1] उपचारो विहा(का)रः तथाऽपवर्गो विपरीतं पित्र्येषु[2]

१. मूले उत्तरतः । २ (ख) पुस्तके इत्येषु ।

पद्भोपहतं प्रक्षालयेत् अङ्गमुपस्पृश्य शिकल्वा[1] उपस्पर्शयेत्। एवं छेदन-भेदन-खनन-दहन-निरसन-पित्र्य-राक्षस-नैर्ऋत-रौद्राभि-चरणीयेषु उपस्पृशेदिति विज्ञायते।

न मन्त्रवता यज्ञाङ्गेनात्मानमभिपरिहरेत्। अभ्यन्तराणि यज्ञाङ्गानि वाह्या ऋत्विजः। पत्नीयजमानौ ऋत्विग्भ्योऽभ्यन्तर[2]-तमौ। यज्ञाङ्गेभ्य आज्यं आज्याद्धवींषि हविर्भ्यः पशुः पशोः सोमः सोमादग्नयः।

यथा कर्मर्त्तिजो न विहारादभिपर्य्यावर्त्तेरन्। प्राग्गच्छन्[3] दक्षिणमंसमभिपर्य्यावर्त्तेत प्रत्यङ्मुखः सव्यमथान्तरेण चात्वालो-त्करौ पश्यति। यज्ञमहातीर्थमथाचात्वाले आहवनीयोत्करौ।

ततः कर्त्तारो यजमानः पत्नी च प्रतिपद्येरन्। विसंस्थिते च सञ्चरोऽनूत्करदेशात् नाप्रोक्षितमप्रपन्नं क्लिन्नं काष्ठं समिधं चाग्नावादध्यात्। अग्रेणाहवनीयं ब्रह्मयजमानौ प्रतिपद्येते। जघनेनाहवनीयमित्येके दक्षिणेनाहवनीयं ब्रह्मायतनमपरेण यजमानस्य। उत्तरां श्रोणिमुत्तरेण होतुः। स उत्करमग्नीध्रस्य जघनेन गार्हपत्यं पत्न्यास्तेषु कालेषु कास एव दर्भास्तरणं[4] एकैकस्य च उदककमण्डलुरुपात्तः स्यादाचमनार्थः। अत्र व्रतोपेतो दीक्षितः स्यान्न परं पापं वदेत् न क्रुध्येन्नाचामेत् न[5] रोदेत् मूत्रपुरीषे नाभिवीक्षेत्।

---

१ मूले सिचं वा अपः। २ (ख) — अन्तरतमौ।
३ मूले प्राङ्मुखस्तेत्। ४ (क) पुस्तके दर्भान् संस्तृणाति।
५ मूले अधिकः— न रोदेत्।

अमेध्यं दृष्ट्वा जपति-अबद्धं मनो दरिद्रं चक्षुः सूर्य्यो ज्योतिषां श्रेष्ठो दीक्षायां मा मा हिंसीरिति ।

विक्रियत इति विकारो विहृतोऽग्निः स उत्तरत उपचारः उत्तरस्मिन् भागे उपचारः प्रवेशोपक्रमो यस्मात् स तथा । कर्म्म-समाप्तौ निर्गमनं स तथा उत्तरत उपचारः पित्र्येषु पितृपिण्ड-पितृ-यज्ञादिषु एतत्त्रयमपि विपरीतं विहारस्य दक्षिणभागे इत्यर्थः ।

पद्भ्योपहतं चरणेन स्पृष्टं यज्ञाङ्गमिह स्रुगादि-अङ्गमुपस्पृशति कर्म्मेति, अङ्गमत्र नाभेरधःकायः, ऊर्द्ध्वं वै पुरुषस्य नाऽमेध्यमवाचीन-ममेध्यमिति तैत्तिरीय-श्रुतिबलात् । शिक्यो वस्त्रप्रान्तः । मन्त्रवता यज्ञाङ्गेन इति मन्त्रवत् कर्म्म यज्ञे क्रियतेऽनेनेति तत्साधनं स्रुवादि यज्ञाङ्गं तेन नात्मानमभि-परिहरेत् । आत्म-शरीरादन्यत्र तत्काले तन्न धारयेत् ।

अत्र हेतुः—

अभ्यन्तराणि यज्ञाङ्गानि यत इत्यध्याहार्य्यं वाह्या अत्र अनन्तराङ्गाः यज्ञाङ्गेभ्यः स्रुवादिभ्यः । आज्यं घृतं हवींषि पुरो-डाशरूपाणि ।

यथा कर्म्मेति— यत्र यत्र कर्म्मणि ऋत्विजस्ते तत्र समाप्तिकालं यावत् तस्मात् विहारदेशात् स्वातन्त्र्येणावश्यकाद्यर्थमपि नान्यत्र गच्छेयुरित्यर्थः ।

प्रागच्छन्निति प्राङ्मुखो यदागच्छेत्तदा दक्षिणमंसमभि-प्रदक्षिणं । प्रत्यङ्मुखो यदि परावर्त्तेत यजमानः तदा सव्यमंसमभि-प्रदक्षिणमित्यर्थः ।

अन्तरेणेति उत्करान्तरेण उत्करयोर्मध्येन यज्ञतीर्थं यज्ञार्थं ऋत्विगादीनां प्रवेशमाहुः। अत्रादाले वादालो गर्तस्त-द्विशेषस्तद्रहिते दर्शपौर्णमासौ आहवनीयोत्करावित्यचान्तरेण यज्ञतीर्थमित्यनुषज्यते।

कर्त्तार इति ततस्तेन मार्गेण कर्त्तार ऋत्विजः प्रतिपद्येरन्। विसंस्थिते च असमाप्ते यज्ञे सञ्चरः सञ्चरणं गतागतं, नोत्कर-देशात् अनुत्करेण देशेन। समाप्ते तु सोत्करेणापीति लभ्यते। अप्रपन्नं अप्रभूतं जघनेन पश्चात् आयतनमवस्थितिदेशः तमपरेण तस्माद्ब्रह्मणः पश्चिमेन उत्तरं श्रोणिं वेदेरिति शेषः।

उत्करोऽग्नीध्रस्य अत्रायतनमित्यनुषङ्गः। जघनेन गार्हपत्यं पत्न्याः गार्हपत्यात् पश्चिमे प्रदेशे अत्राप्यायतनमित्यनुषङ्गः।

तेषु कालेषु तेष्वायतनेषु काले प्रवेशकाले एकैकस्य ऋत्विगादेः कमण्डलुरुपात्तः कमण्डलुधारणं आचमनार्थं आच-मननिमित्तं दीक्षितो दीक्षावान् स्यात् व्रतोपेतो भवेत्।

तान्येवाह—

पापं विरुद्धं परस्य न ब्रूयादित्यर्थः। मूत्रपुरीषे अमेध्य-मूत्रपुरीषे। अवद्धमित्यादिर्मा मा हिंसीरित्यन्तो मन्त्रः।

अत्रैवापस्तम्बः—

नाप्रोक्षितमिन्धनमग्नावादध्यात्।

हारीतः—

दैवेनोत्तरेणाग्निसंस्कारेण संस्कृतो देवानां समानलोकतां सायुज्यतां गच्छति तेन देवयज्ञितमेव ऋत्विग्ं प्राहुः। स

स्वर्गयगुः-सामलोकेषु ज्योतिःसु विवेश ब्रह्माणि वाहितो भवति स ह्येतां सायं प्रातरहरहः प्रापयति तस्याहरहरग्निर्यथा सायं प्रातर्द्व्यया(?)वतिष्ठन्ते तस्माद्बुविविंदामप्यनाहिताग्निरनाहिताग्नीनामाहिताग्निः पुण्यतमो भवति तस्मान्नोपरिष्टाग्निहोत्री स्यात्।

यथा वै ब्राह्मणानाहूय नियुज्य तस्यान्नं नाश्नीयात् एवं यत्सते ऽश्नाति तस्मादभिहुतमश्नीयात् नानृतं ब्रूयात् नाश्नीलं नानियतो नाशुचिः स्यान्नान्यदारं गच्छेन्न तैस्तिष्ठन्नाविष्टोऽपः पिबेत् नाशुचिक्लिन्नपूतिभिर्दारुभिरग्निमिन्धीत नाग्निवेलयोः प्रसरेत्। पर्व्वसु चापत्सु अप्रोषितो प्रयच्छेदाहोमादभयतः स्वयमग्निहोत्रम्। हुतशेषादन्यत्र उपासीत सायमप्युपस्थायापवीत्य नमस्कृत्य प्रसरेत्। तथा प्रातर्नादर्भोऽग्निं परिचरेत् सायञ्जैर्जुहुयात् हुतशेषं ब्राह्मणाय दद्यात्।

कूटोऽवालिशो वासदोषेऽग्निं जुहुयात्। देवसमितो देवतुल्यः। उपरिष्टाग्निहोत्री उपरिष्टं होमशून्यमग्निहोत्रं उपरिष्टाग्निहोत्रं तद्वान् तथा। तेनाग्निहोत्रिणा होमशून्येन न भवितव्यमित्यर्थः।

तस्मादिति अग्निहोत्रं हुतपूर्व्वं अशानसम्बन्धेन कुर्य्यादित्यनुषङ्गः। अनियतः असंयतेन्द्रियः, नारिष्टा लोकाः स्थिताः अग्निवेला होमकालः, पर्व्वसु पर्व्वप्रभवे इत्यनुषज्यते।

आपत्सु प्रोषित इत्यादि—

आपत्कालेषु विधानं कृत्वा प्रोषितः कार्य्यतारतम्ये[1]ऽवतिष्ठेत तदा च प्रतिदिनमग्नीन् ध्यात्वा मनसा उपस्थानं कृत्वा मन्त्रतो हुतं

१ (क) तारतम्येन तिष्ठेत्।

स्नात्वा व्रतयेत भुञ्जीत । एत्य प्रवासादागत्य उपस्थायाभिभाषेत । अग्न्युपस्थानमकृत्वा न किञ्चिद्ब्रूयादित्यर्थः । निर्मुक्ते अस्तमिते आ उदयात् आ सूर्य्योदयादिति यावत् आ होमात् सायं होम-समाप्तिपर्य्यन्तं । अयञ्च उदयप्रभृति वाङ्नियमो विषमशिष्टत्वात् फलविशेषार्थिनो बोध्यते ।

उभयतः सायं प्रातश्च स्वयमात्मनैव, अन्यच्च अन्यस्मिन् अग्निहोत्रहोमकारिणि स्वयमग्निमुपासीत ध्यायन् समीपे तिष्ठेदित्यर्थः ।

नित्यं कर्त्तव्यान्तरमाह—

अपवीत्य दक्षिणमकृत्वा प्रातरप्युपस्थानादित्रयं कुर्य्यात् । अदर्भो दर्भहस्तसम्बन्धं विना अयज्ञीयैर्माषादिभिः ।

तथा—

माषमसूरमधुमांसपरान्नमैथुनानि व्रतेऽह्नि वर्ज्जयेत् । व्रतोपेतो नाकाले वाचं विसृजेत् । अग्निमुपेत्य वसेन्न पर्य्यावर्त्तेत । विद्वत् व्रतकामवञ्चामुपस्थायान्यच्च पुनर्मनो व्रतपतीभ्यां प्रागस्तमयात् प्रथमं सूर्य्योदयात् लेह्वा सवत्स्यमश्नीयात् । दीर्घसत्रेषु ऋतौ जायामुपेयात् न चाश्नीयात् पयसादिहविःशेषं वा दीक्षितो नियमान् धारयेत् ।

यदि यजमानो यजमाननियमानिष्टौ चेष्टिनियमान् ।

दीक्षितो जटी क्षौमवासा मेखली यज्ञोपवीती उष्णीषी कृष्णाजिन आसीत । वाग्विसर्गाश्रुविदशनावगाहनमेहनविहृतशयनायतदशनविस्मितदन्तधावननिष्क्रमणानि दीक्षितो वर्ज्जयेत् ।

विजृम्भमाणो श्वसन् वा पाणिना पिदध्यात् मूत्रपुरीषं निष्ठी-वनञ्चातपे न कुर्य्यात्। इति दीक्षितनियमाः।

क्रोधाहङ्कारभयविस्मय--विषाद--कार्पण्यलोभान् यजमानो वर्ज्जयेत्। आहुतिभिर्देवान् यजेत्। अन्नाद्येन दक्षिणाभिश्च ब्राह्मणान्। इति यजमाननियमाः।

स एष लीलासङ्करानिष्ठी वर्ज्जयेत्, जलाग्निवाय्वाकाश[1]-सूर्य्यानशुचिभिर्नोपचरेत्। इति इष्टिनियमाः।

न पशुं संज्ञाप्यमानमीक्षेत न स्पृशेद्यूपशूलानिति नियतं सङ्कीर्णप्रणीतो यज्ञः।

यजमान आर्त्तीरुपैति सर्व्वयोनिष्वागच्छन्ति आयुषो वा विमुच्यते तस्मात् कुलशीलश्रुतवृत्तिसम्पन्नानृत्विजो वृणुयात्। तस्य सर्व्वकामधुक् दक्षिणाभिः कुर्व्वन्ति।

अनुयज्ञं यजमानः अनुयजमानमप्रजायमानं प्रजां पशुं प्रतिष्ठामाहरतीत्यध्याहार्य्यम्। तस्मादहरहर्ब्राह्मणेभ्यो दद्यादोषधि-पशुभिर्हुतं यज्ञं दक्षिणाभिः सम्पादयति। दक्षिणाहुत एवाहुत-स्तस्य सर्व्वकामधुक् यज्ञं दक्षिणाभिः सम्पादयतीति दक्षिणां ददाति। चन्द्रमसस्तेन लोकं व्रजेदिति।

यद्धोत्रे अग्निलोकं यदुद्गात्रे पर्ज्जन्यलोकं तेन यद्धोताग्नीध्रेभ्यो दिशस्तेन यदस्तु अनुग्रहकर्त्तृभ्य इमं तेन सलोकं यत् शुश्रुवुषे अनूचानाय स्वर्गं तेन लोकं यावद्ददाति दत्तमार्त्तीश्च तेन यजति यत् पापीयसे ददाति तदलब्ध्वा दक्षिणया निष्क्रीणामीति।

---

[1] (ख) वायु सोम।

चन्द्रमा वै ब्रह्मा तद्यावच्चन्द्रमा न क्षीयते तावदस्येष्टं दत्तमक्षयं भवति। होतुर्वाचं ददामि तामनया दक्षिणया निष्क्रीणामीत्यग्निर्होता तद्यावदग्निर्न क्षीयते तावदस्येष्टं दत्तमक्षयं भवति। तदनया दक्षिणया निष्क्रीणामीत्यसौ वा आदित्यश्चक्षुरादित्योऽध्वर्युः तद्यावदसावादित्यो न क्षीयते तावदस्येष्टं दत्तमक्षयं भवति। होत्राशंसिनोऽङ्गानि यो ददाति तान्यनया दक्षिणया निष्क्रीणामीति दिशो हो वै होत्राशंसिभ्योऽङ्गानि यावद्दिशो न क्षीयन्ते तावदस्येष्टं दत्तमक्षयं[1] भवति।

तथाचोदाहरन्ति।

ब्रह्मयज्ञो ब्राह्मणेष्ववतिष्ठ-
त्तस्मात्तस्य ब्राह्मणा याचितारः।
तस्मात्तेषां यज्ञभागार्हकाणां
यज्ञे विप्राणां दक्षिणा साधु देया॥

चयो यज्ञश्चर्त्विजस्तस्य प्राणाः
प्राणैर्यज्ञस्तायते कर्मयोगात्।
तस्मादृत्विग्भ्यो भूयसीं दक्षिणां वै
दद्यात् प्राज्ञो यज्ञभूयस्त्वमिच्छन्॥

यजुर्यज्ञं व्यमजह्नागणो वै
यजुष्येतं महिमानं विदित्वा।
सेध्यान्नं तन्वते कर्मयोगात्
यजुर्विद्भ्यः कर्त्तृधनं प्रदेयम्॥

---

१ (ख) अक्षय्यम्।

वर्णैर्मात्रादिभिरक्षरैश्च पादैः
अर्द्धर्चैर्विरामैर्होत्रैः कालकर्म्मप्रयोगैः ।
ये वोढारो भागदानन्तु तेषां
धर्म्मो यज्ञो धर्म्मतो धर्म्मविद्भिः ॥
धर्म्मो भूतः क्रियते धर्म्महेतोः ।
धर्म्मो लोकांस्त्रायते तत्र विप्रा-
स्तस्मात्तद्विद्भ्यो धर्म्मधनं प्रदेयम् ॥
सूर्य्यसूत्रान्तममाम यद्वै
ततो लोकानां वित्रामयज्ञः (?।)
तमचिरनुपश्यन्तममामयः
तस्माद्यज्ञे चेत्रिधनं चचुः ।
सुहृन्मित्रं बान्धवाः कारिणश्च
नानायोगैः सम्भवन्ते मखं वै ॥
तस्माद्यज्ञस्त्रायते नामहाय-
स्तस्माद्विद्वान् पूजयेत्तान् यथावत् ।
न्यायात् द्रव्याद्वलिग्भिश्चैव शुद्धैः
रत्नत्यागाद्दक्षिणाभिश्च यज्ञः ॥
इष्टान् लोकान् सर्व्वकामोपपन्नान्
नयेद्विराजं ब्रह्मलोकप्रतिष्ठाम् ।
विष्णुं यज्ञं प्रवदन्तीह तज्ज्ञा
यज्ञस्याग्निमतिथिं वै वदन्ति ॥

तस्माद्दक्षो विधिवद्द्रव्ययोगै-
[1]स्तयो भूत्वा तर्पयेद्वै हुताशम्।
अग्निं रुद्रमुत कालं वदन्ति
यस्य महानुभुताः प्रजा वै॥
तर्पयित्वैवैनममृता भवन्ति।
नैनं ये विदुस्ते ऽन्नमिवास्य कृशाः॥
अग्निः पिता ह्युत-माताऽथ भ्राता
अग्निर्गोप्ता रक्षिता दुष्कृताच्च।
अग्निर्दाता पुत्र-पत्नी श्रियां हि
सर्व्वस्माद्दुःखात्तारणश्चाग्निमाहुः॥
देवा देवत्वमग्निनैवाप्नुवन्तः
सर्व्वान् कामानमृतत्वं तथैव।
तपस्तप्त्वाग्निनैवाधिकान् लोकान्
जित्वा ऋषयो ब्रह्मभूयाय गच्छन्।
तस्माद्धीरः श्रुश्रुवान् पापवृत्तिं
त्यक्त्वानोऽग्नीन् विधिमाम्नाय भक्त्या।
शान्तो दान्तो निर्मलो वीतशोको
गच्छेल्लोकानृषिदेवार्थमाप्तान्॥
प्राप्नुयात् सौम्यान् सर्व्वकामोपपन्नान्
स्वस्थो गच्छेत् खेचरैर्वन्द्यमानः।

१ (क)—स्वयं।

चक्षुः श्रीमान् सत्सुगन्धिभूतात्मा
मृत्योर्मुक्तो ब्रह्मलोकं प्रयाति ॥ इति

व्रते व्रतार्हे पौर्णमास्यादौ । व्रतादपेतोऽनृतवाग्नियमः । अकाले हविःकृतात्कालादर्व्वाक् । अग्निमुपेत्य वह्निसमीपं गत्वा । न पर्य्यावर्त्तेत नाग्निपराङ्मुखः स्यात् ।

विदद्व्रतकामवद्व्रामित्यादि—

यदि तत्राग्निसमीपवासे अनिच्छा स्यात्तदा त्वमग्ने व्रतपासि तुभ्यं ता गिरस्ते स इत्येताभ्यामुपस्थायान्यत्र वसेदिति प्राच्यमनुषज्यते ॥

प्रकारान्तरमाह पुनरित्यादि—

भयेनान्यत्र यदि वसेत् तदा "मनो ज्योतिर्जुषतामिति" "त्वमग्ने व्रतपामीति" द्वाभ्यां मन्त्राभ्यामस्तमयात् प्राक् प्रथमोदिते च सूर्य्ये अग्न्युपस्थानं कृत्वा दर्शादियागं कुर्य्यादित्यर्थः ।

इष्टा नवशस्येनैव शस्यमन्नं दीर्घसत्त्रेषु प्रातराशादिषु च समाश्नीयात् पयआदि हविः शेषमिति पयो दध्यादि शेषं यागशेषभूतं नाश्नीयादित्यनुषङ्गः[१] ।

दीक्षितोऽदीक्षितस्य नियमान् धारयेत् यजमानोऽदीक्षितो यजमाननियमान् दीक्षितस्य स्थान[२]नियमान् धारयेदित्यर्थः ।

वाग्विसर्गः-दीक्षितो वाचं विसृजस्वेति प्रश्नोत्तरकालम् । उदितेषु नक्षत्रेषु विवृतशयनं पर्णशालातो बहिःशयनं, विस्मितं विस्मयः । पाणिना पिदध्यात् मुखमिति शेषः ।

---

१ (ख) इत्यन्वयः ।     २ (ख) इष्टिनियमान् ।

छन्दोगपरिशिष्टे कात्यायनः—

निःक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्त्विजं तथा।
प्रवसेत् कार्य्यवान् विप्रो वृथैव[1] न चिरं क्वचित्॥
मनसा नैत्यकं कर्म्म प्रवसन्नप्यतन्द्रितः।
उपविश्य शुचिः पूर्व्वं यथाकालमुपाचरेत्॥

निक्षिप्य परिचरणार्थं समर्प्य परिकल्प्य व्यवस्थाप्य ऋत्विजमग्निहोमकारिणं कार्य्यवान् अवश्यभर्त्तव्यभरणयोगक्षेमरूपकार्य्यवानित्यर्थः। मृषा एवंविधकार्य्यं विना चिरं तत्तत्कल्पसूत्रोक्तप्रवासकालादधिकं न प्रवसेदित्यर्थः।

वशिष्ठः—

नाग्निं चित्वा वै रामामुपेयात्। कृष्णवर्णा वै सा रमणायैव न धर्म्मायेति।

अग्निं चित्वा अग्निचयनवन्तं यागं विधाय।
कृष्णवर्णां शूद्रां विवाहितामपि ऋतावपि न गच्छेदित्यर्थः॥

हारीतः—

तामसेन तु द्रव्येण ऋत्विग्भिस्तामसैस्तथा।
तामसं भावमास्थाय तामसो यज्ञ उच्यते॥
[2]निरये जन्मवेदार्द्धं वृद्धिं कृत्वा च तामसीम्।
राजसेन तु यज्ञेन दानेन तपसा तथा।
निरय-स्वर्गयो-र्जन्म क्रूरं राज्यं श्रिया युतम्॥

१ (ख) मृषैव। २ (क) पुस्तके अधिका पङ्क्तिः।

सात्त्विकेन तु द्रव्येण ऋत्विग्भिः सात्त्विकैस्तथा।
सात्त्विकं भावमास्थाय सात्त्विको यज्ञ उच्यते॥
सात्त्विकेन तु दानेन यज्ञेन तपसा तथा।
देवलोके चिरं वासो देवसायुज्यमेव च॥

तामसं कृष्णम्।

उत्कोच-द्यूत-दौत्यार्त्त-प्रतिरूपक-साहसैः।
व्याजेनोपार्ज्जितं यच्च तत् कृष्णं समुदाहृतम्॥

इति नारदोक्तं, ऋत्विजान्तु तामसत्वं यज्ञाचरणे भावदोषः, दानतपसोरपि अनन्तरोक्तप्रकारेण तामसत्वं बोध्यं, तामसी वृद्धिः, म्लेच्छाधिपत्यादिरूपोक्ता। राजसं द्रव्यं यथा—

कुसीदकृषिवाणिज्यशुल्कशिल्पानुवृत्तिभिः।
कृतोपकारादाप्तञ्च राजसं[1] समुदाहृतम्॥

इति नारदेनैवोक्तम्।

राज्यस्य क्रूरत्वमहिंस्यहिंसनादिना।
सात्त्विकत्वमिह शुक्लं तच्च—
श्रुतशौर्य्य तपःकन्याशिष्य याज्यान्वयागतम्।
धनं सप्तविधं शुक्लं[2] मुद्योगस्तस्य तद्विधः॥

इत्यादि नारदोक्तम् ज्ञेयम्।

मनुः—

न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत धर्म्मवित्।
यजमानोऽभिभिक्षित्वा चाण्डालः प्रेत्य जायते॥

---

१. मूले शबलम्। २ (ख) शुद्धम्।

यज्ञार्थमर्थं भिक्षित्वा यो न सर्व्वं प्रयच्छति ।
स याति भासतां विप्रः काकतां वा शतं समाः ॥

अत्र यमः—

धर्म्मविद् ब्राह्मणः शूद्राद्यज्ञार्थं नाहरेद्धनम् ।
जायते प्रेत्य चाण्डालः शूद्रार्थेनेज्य देवताः ॥

अत्रैव याज्ञवल्क्यः—

चाण्डालो जायते यज्ञकरणाच्छूद्रभिक्षितात् ।
यज्ञार्थं लब्धमदददामः काकोऽपि जायते ॥

भासो गोष्ठकुक्कुटः ।

हारीतः—

असद्द्रव्यप्रणीतो यज्ञः प्रस्रवति अनृत्विक्प्रणीतः च्यवते । अविद्वत्प्रणीतः- अलावुको भवति । सङ्कीर्णप्रणीतो असिद्धार्थो ऽकृत्स्नार्थोऽज्योतिर्विधिहीनो यातयामः छद्मोऽध्रुवः सोपधोऽत्यल्पफलोऽनभ्नाद्य उपदस्यति अदक्षिणोऽनृतः । इत्येते यज्ञोपसर्गाः, यैरुपसृष्टो यज्ञोऽलावुको भवति ।

असद्द्रव्यमसद्द्रव्यार्ज्जितं धनं प्रस्रवति क्षरति निष्फलतां यातीति यावत् । अनृत्विजः ऋत्विग्लक्षणेन हीनाः । अविद्वान् यज्ञकर्म्मानभिज्ञो यजमानः । अलावुको ऽरक्षकः, सङ्कीर्णः सङ्कराख्यपापकर्त्ता, असिद्धार्थो असिद्धप्रयोजनः, अकृत्स्नः असङ्कीर्णः, अङ्गयागरहित इति यावत् । अज्योतिस्तेजोहीनः प्रभावशून्य इति यावत् । विधिहीनोऽङ्गप्रधानेतिकर्त्तव्यताशून्यः, छद्म दम्भः, अध्रुवः अल्पफलः, अल्पमसमयफलदायी, सोपधो दृष्टकीर्त्त्याद्यर्थमनुष्ठितः । अनभ्नाद्यः

सोमादियागविहितसहभोजनादिरहितः, उपदशति उपचीणो भवति, उपसृष्ट उपसर्गाख्यदोषवान्, अलाबुकः काम्यफलासाधकः ॥

मनुः—

ये शूद्रादभिगम्यार्थमग्निहोत्रमुपासते ।
ऋत्विजस्ते हि शूद्राणां ब्रह्मवादिषु गर्हिताः ॥
तेषां सततमज्ञानं वृषलाग्न्युपसेविनाम् ।
पदं मस्तक आरोप्य[1] दाता स्वर्गाणि सन्तरेत् ॥

ब्रह्मवादिषु वेदवादिषु, वृषलोऽत्र शूद्रः, दाता धनदाता स एव ।

छागलेयः—

यः शूद्रादभिगम्यार्थमग्निहोत्रमुपावसेत् ।
दाता तत् फलमाप्नोति कर्त्ता च नरकं व्रजेत् ॥

मनुः—

यज्ञश्चेत् [2]प्रतिरुद्धः स्यादेकेनाङ्गेन[3] यज्वनः ।
ब्राह्मणस्य विशेषेण धार्म्मिके सति राजनि ॥
यो वैश्यः स्याद्[4]बहुपशुर्हीनक्रतुरसोमपः ।
कुटुम्बात्तस्य तद्द्रव्यमाहरेद्यज्ञसिद्धये ॥
आहरेत्त्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः ।
न हि शूद्रस्य यज्ञेषु कश्चिदस्ति परिग्रहः ॥

---

१ मूले—पदा मस्तकमाक्रम्य । २ (ख) प्रतिबद्धः ।
३ (ग) अंशेन । ४ मूले बहुपशुः ।

योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥
आदाननित्याच्चादातुराहरेदप्रयच्छतः ।
तथा यशोऽस्य प्रथते धर्म्मश्चैव प्रवर्द्धते ॥

प्रतिरब्ध आरम्भश्च न विलम्बितः एकेनाङ्गेन दक्षिणादिना । पशुग्रहणमत्र धनमात्रोपलक्षकम् । तस्य द्रव्यमाहरेदिति वैश्येना-दीयमानमपि तदधिकभूतं द्रव्यं ततो गृह्णीयात् वैश्यादसम्भवे तु त्रीणि वाऽङ्गानि द्वे वाऽङ्गे शूद्रादपि ग्राह्याणि ।

शूद्रस्य वेश्मन इत्यभिधानाद्बलादपि शूद्रगृहादाच्छेदनीयं नहि शूद्रस्येत्यन्तेन शूद्रधनस्य यज्ञानुपयुक्तत्वमुक्तम् । अयज्वा सोमयागरहितः, आदाननित्योऽनिन्दितप्रकारेणार्थार्ज्जनतत्परः । अदातुरदानशीलस्य । अदातुरप्रयच्छतः--इत्युभयोपादानात् त्रैवर्णिकः प्रथम प्रार्थनीयः प्रार्थितश्चेन्न ददाति तदा अविचार-यन् आहरेत् ।

गौतमः—

द्रव्यादानं विवाहसिद्ध्यर्थं धर्म्मप्रसङ्गे च शूद्रादन्यत्रापि[1] शूद्राद्ब-हुपशोर्हीनकर्म्मणः शतगोरनाहिताग्नेः सहस्रगोरसोमात् सप्तमीं-श्चाभुक्त्वा ऽनिचयायाहीनकर्म्मणा आचक्षीत राज्ञा पृष्टस्तेन भर्त्तव्यः । श्रुतशीलसम्पन्नश्चेद्धर्म्मतन्त्रपीड़ायां तस्याकरणे दोषः ।

द्रव्यादानं विवाहसिद्ध्यर्थमिति द्रव्यस्य परकीयस्याननुज्ञात-स्यापि स्वीकरणं यावता विना विवाहो न निष्पद्यते तावतः ।

---

१ (ख) अत्रापि ।

इदञ्च विवाहकालातिक्रमशङ्कायां कन्यादातुर्धर्म्मप्रसङ्गे चेति । धर्म्मोऽत्र धर्म्मतन्त्रोऽग्निहोत्रादिः, तस्य प्रसङ्गे प्रवृत्तस्य छेदः । चकारःसिद्ध्यर्थमित्यनुकर्षणार्थः । अत्रापि तत्सिद्धिर्यावता धनेन विना न भवति तावदेव ग्राह्यं अधिकस्वीकरणे चौर्य्यापत्तेः ।

कुतस्ततः स्वीकर्त्तव्यमत आह शूद्रादिति शूद्रादलाभे अन्यत्रापि शूद्रादन्यस्मादपि वक्ष्यमाणात् त्रैवर्णिकात् । अहीनकर्म्मा धनसाध्यादृष्टकर्म्महीनः । गोग्रहणं धनमात्रोपलक्षणम् ।

परद्रव्याहरणे निमित्तान्तरमाह— सप्तमीत्याभुक्तेति त्र्यहो-रात्रेषु षड्भोजनवेलास्तासु अभोजने चतुर्थदिवसे सप्तमभोजन-वेलायां भोजनानुकूल-धनशून्यो भोजनार्थं परद्रव्यमप्यपहरेत् । अनिचाय भोजनमात्रार्थं न तु सञ्चयाय । तत् चौर्य्य-निमित्तं यदि गृह्यते अहीनकर्म्मणा व्यवहार-रक्षापरेण राज्ञा किमर्थमेतत् कृतं तदाऽस्मै आचक्षीत न तु भयाद्गोपयेत् धर्म्मतन्त्र-पीड़ायां तस्य धर्म्मतन्त्रस्य पीड़ायां सत्यां अनन्तरोक्तनिमित्त-त्रयवतः तत्प्रधानकारणे ।

अङ्गिराः—

> खलक्षेत्रगतं धान्यं वापीकूपगतं जलम् ।
> अभोज्यादपि तद्ग्राह्यं यच्च गोष्ठगतं पयः ॥
> विच्छिन्नेषु तु पक्षेषु हविषां अयणेषु च ।
> इष्टिं त्वविकृतां कुर्य्यात् प्रकृतन्तु न लोपयेत् ॥

अभोज्यात् शूद्रादेः, एतच्च धान्यादि यज्ञविच्छेदशङ्कायां तत्-

पूरणार्थमेव ग्राह्यम्। विच्छिन्नेषु पक्षेषु पक्षान्तराश्रयणं। ग्राक-मेधादिषतुष्टये अविकृतां पक्षादिविकारशून्याम्।

बौधायनः—

अमेध्याधाने समारोप्य निर्मथ्य पवमानेष्टिः। शौचदेश-मन्त्रावप्रकर्षद्रव्यसंस्कारकालभेदेषु पूर्व्वप्राधान्यमग्निषु।

अमेध्यमशुचि आधानं प्रक्षेपः तेनाशुचिप्रक्षेपे तमग्निमरण्यां समारोप्य निर्मथनं कृत्वा पवमानेष्टिः कार्य्या इति वाक्यार्थः।

शौचदेशेति शौचादयः सर्व्वकर्म्मणि विशेषतो दर्शिताः तेषु सर्व्वेषु यावत्सम्पादनाशक्तौ शौचं प्राधान्येनादरणीयमित्यर्थः।

प्रकाशकारेण प्रकर्षपदस्थाने आवृदर्थेति पठित्वा आवृत् इति-कर्त्तव्यताविशेषः, अर्थः पयसादिद्रव्यमिति व्याख्यातम्।

पैठीनसिः—

पर्ण-मूल-कन्द-पुष्प-फल-प्ररोह रस-गन्धादीनां सादृश्येन[1] प्रतिनिधिं कुर्य्यात् सर्व्वाभावे यवः प्रतिनिधिर्भवति।

छन्दोगपरिशिष्टे कात्यायनः—

यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत्।
यवानामिव गोधूमा व्रीहीणामिव शालयः॥

तथा—

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः॥

---

१ (ख) तादृश्येन।

नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतरा[1] क्वचित्।
न विमुक्ता त्वचा चैव न सकीटा न पाटिता॥
प्रादेशान्नाधिका नोना न तथा स्याद्विशाखिका।
न सपर्णा न निर्वीजा[2] होमेषु च विजानता॥

एतान्यन्यानि च प्रतिनिधिवाक्यानि कृत्यरत्नाकरे परिभाषा-तरङ्गे व्याख्यातानि अस्माभिः॥

आपस्तम्बः—

नानूचानमृत्विजं वृणीते न पणमानं। अयाज्योऽनधीयानः।

अनूचानोऽत्र यो वेदार्थान् आचार्य्यमुखाच्छ्रुत्वा शिष्येभ्यो व्यपदिश्य परीहारं व्याचष्टे। पणमानोऽचामुकेन दक्षिणाकल्पेन परमहं त्वां याजयामीति यः पणते असौ। अनधीयानो यो वेदं नाधीते न स याज्यः।

शङ्खः—

वृतन्तु न त्यजेद्विद्वान् पूर्व्वमेव सदर्त्विजाम्।
कर्म्मणा जन्मना शुद्धमिज्ययाऽध्ययनेन च॥
एतैरेव गुणैर्युक्तं धर्म्मार्ज्जितधनं तथा।
याजयेत सदा विप्रो ग्राह्यस्तस्मात् प्रतिग्रहः॥

पूर्व्वमाधानकाल एव वृतं यथोक्तकर्म्मादिमन्तमृत्विजं त्यक्त्वा अग्निसदर्शयागादौ ऋत्विगन्तरं न वृणुयादित्यर्थः।

---

१ मूले स्थूलतया।
२ मूले निर्वीर्य्या।

विष्णुः—

अथायाज्या-ब्राह्मणाः पतिता मातृतः पितृतश्चाप्युद्गाः। सर्व्व एवाभोज्याश्चाप्रतिग्राह्याः।

हारीतः—

न याजयेद्वृत्तहीनं वृणुयाद्वा न तं गुरुम्।
अकृतत्वं येऽविधानज्ञा यज्ञं तन्वन्ति लोभतः॥
तेऽधमां जातिमायान्ति निरुद्धां स्वेन कर्म्मणा।

यमः—

विद्यामेके पशूनेके आयुरेके हरन्ति च।
इष्टापूर्त्तञ्चतुर्थेन नास्ति याज्यसमो रिपुः॥
पुरोधाः शूद्रवर्गस्य ब्राह्मणो यः प्रवर्त्तते।
स्नेहादर्थप्रसङ्गाद्वा कृत्स्नमेवाच कारणम्॥
भयादज्ञानतो वापि पातकेन स युज्यते।
तस्माच्छूद्रा न संयाज्या ब्राह्मण्यं दुर्लभं यतः॥

महाभारते—

देवाः समेता ब्रह्माणं भूमिभागे यियच्चवः।
श्रुतिदेशमयाचन्त यजेम इति पार्थिवाः॥
भगवंस्त्वं प्रभुर्भूमेः सर्व्वस्य त्रिदिवस्य च।
यजेमहि महाभाग यज्ञं भवदनुज्ञया॥

पुनर्हारीतः—

आयुरेके जिघांसन्ति बुद्धिमेके यशोऽपरे।
बलारोग्ये तथा चान्ये तस्माद्धि तान्न याजयेत्॥

प्रभामेके पशूनेके विद्यामेके हरन्ति च।
[१]बहुदोषमया याज्या नास्ति याज्यसमो विधिः॥

तथा—

यज्ञेन विमला लोका विभान्ति
यज्ञेन देवा अस्य तत्त्व[२]माप्नुवन्।
यज्ञेन पापैर्बहुभिर्विमुक्तः
प्राप्नोति लोकान् परमस्य विष्णोः॥

इति महामहेन्द्र-महाराजाधिराज-श्रीहरसिंहदेव महासान्धि-
विग्रहिक-श्रीवीरेश्वरात्मज-महासान्धिविग्रहिकावसथिक-
ठक्कुरश्रीचण्डेश्वरविरचिते गृहस्थरत्नाकरे
यजनयाजनतरङ्गः॥ १५॥

---

## अथाह्निकम्।

तत्र दक्षः—

प्रातरुत्थाय कर्त्तव्यं यद्द्विजेन दिने दिने।
तत् सर्व्वं संप्रवक्ष्यामि द्विजानामुपकारकम्॥
उदयास्तमयं यावत् न विप्रः क्षणिको भवेत्।
नित्यनैमित्तिकैर्युक्तः काम्यैश्चान्यैरगर्हितैः॥

---

१ (क) पुस्तके बहुदोषमया त्यागान्नास्ति याज्यसमो रिपुः।
२ (ख) अमृतत्वम्।

न क्षणिको भवेदुक्तकर्महीनः क्षणमपि न तिष्ठेदित्यर्थः।

अगर्हितैरनिषिद्धैः।

तथा—

स्वकं कर्म परित्यज्य यदन्यत् कुरुते द्विजः।

अज्ञानादथवा लोभात् स तेन पतितो भवेत्॥

स्वकं निजवर्णाश्रमोक्तं परित्यज्य चिरकालं परित्यज्येत्यर्थः।

तथा—

दिवसस्याद्यभागे तु कृतं तस्योपदिश्यते।

दिवसशब्दोऽत्र उषःकालादिप्रदोषकालान्तपरोऽजहत्स्वार्थ-लक्षणया दक्षेणैव दिवसस्येत्युक्त्वा उषःकालोपक्रमप्रदोषान्तकृत्यव्युत्पादनात्।

तथा—

द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा।

षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक्॥

विभागेष्वेषु यत् कर्म तत् प्रवक्ष्याम्यशेषतः।

उत्थायावश्यकं कृत्वा कृतशौचः समाहितः।

पूर्व्वां सन्ध्यां जपंस्तिष्ठेत् स्वकाले चापरां चिरम्॥

आवश्यकमिह मूत्रपुरीषत्यागः। समाहितो नियतचित्तः। अपरां पश्चिमां सन्ध्यां चिरं नक्षत्रोदयादूर्द्ध्वमपि।

एतच्च निरग्निविषयं साग्नेर्नक्षत्रोदयात् पूर्व्वमेव सन्ध्याकर्म्म-समाप्तेः।

मनुः—

ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थौ चानुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ॥

ब्राह्मो मुहूर्त्तः पञ्चदशधा विभक्ताया रात्रेश्चतुर्द्दशो भागः । तन्मूलान् धर्म्मार्थोपादानमूलान् वेदतत्त्वार्थमिति तत्त्वपदमपन्याय-प्रतीतिवारणार्थम् ।

विष्णुपुराणे—

ब्राह्मे मुहूर्त्ते स्वस्थे च मानसे मतिमान्नरः ।
विबुद्धश्चिन्तयेद्धर्म्ममर्थञ्चास्याविरोधिनम् ॥
अपीड़या तयोः काममुभयोरपि चिन्तयेत् ।

इति गृहस्थरत्नाकरे आह्निकतरङ्गः ॥

---

# अथ मूत्रपुरीषोत्सर्गः ।

तत्र विष्णुपुराणे—

ततः कल्यं समुत्थाय कुर्य्यान्मैत्रं नरेश्वर! ।
नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः ।
तिष्ठन्न च चिरं तत्र न वा किञ्चिदुदीरयेत् ॥

कल्यमुषःकाले मैत्रं विड्विसर्गः, मित्रदेवताकं मैत्रं तत्-सम्बन्धात् । नैर्ऋत्यां शयनस्थानात् ।

याज्ञवल्क्यः—

दूरादुच्छिष्टविण्मूत्रपादावसेचनं त्यजेत्[1]।

आपस्तम्बः—

मूत्रपुरीषे कुर्य्याद्दक्षिणां दिशं दक्षिणापरां वा। गत्वेति शेषः। दक्षिणापरां नैर्ऋतीम्।

अस्तमिते च बहिर्ग्रामादाराद्वावसथान्मूत्रपुरीषयोः कर्म्म कुर्य्यात्। आवसथाद्गेहात्। आराद्दूरे।

मनुः—

दूरादावसथान्मूत्रं दूरात् पादावसेचनम्।

उच्छिष्टान्नं निषेकञ्च दूरादेव समाचरेत्॥

पादावसेचनं पादप्रक्षालनम्। निषेक उच्छिष्टद्रव्यप्रक्षेपः।

तथा— तिरस्कृत्योच्चरेत् काष्ठं पत्रं लोष्टं तृणानि वा।

नियम्य प्रयतो वाचं संवीताङ्गोऽवगुण्ठितः॥

काष्ठादिभिर्दूरत आकाश इति पृथ्वीखण्डतात्पर्य्यार्थः। उच्चरेत् पुरीषं त्यजेत्। प्रयतः शुचिः, वाचं नियम्येत्यर्थः। संवीतं निवीतम्। संवीतं मानुषमिति तैत्तिरीयश्रुतेः। तदङ्गं यस्य तथोक्तः। एतच्च द्विवस्त्रपक्षे। कर्णासक्तयज्ञोपवीतकः एकवस्त्रत्वपक्षे। सांख्यायनग्टह्यम्॥

यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा।

यथा यमः—

यज्ञोपवीतं कृत्वा तु पृष्ठतः कण्ठलम्बितम्।

---

१ मूले पादाभ्यां सिचमुत्सृजेत्।

विण्मूत्रञ्च गृही कुर्य्याद्यदा कर्णे समाहितः॥

बौधायनः—

शुष्कतृणमयाज्ञिकं काष्ठं लोष्ठं वा तिरस्कृत्याहोरात्रयोरुदक्-दक्षिणामुखः। प्रावृत्य शिर उच्चरेदवमेहेत वा।

अयाज्ञिकं यज्ञोपयुक्तकुशपलाशादिव्यतिरिक्तं, अवमेहेत मूत्रं त्यजेत।

विण्मूत्रोत्सर्गं कुर्य्यादित्यनुवृत्तौ वायुपुराणे—

शुष्कैस्तृणैर्वा काष्ठैर्वा पत्रैर्वेणुदलेन वा।
मृन्मयैर्भाजनैर्वापि अन्तर्धाय वसुन्धराम्॥

हारीतः—

प्राणास्ये वेष्टयित्वा मृत्पात्रीं ग्रीवायामासज्य दक्षिणबाहु-पार्श्वे कमण्डलुमादायोत्सृजेत्।

मृत्पात्रीं मृत्तिकापात्रीमुत्सृजेत् मूत्रपुरीषे इति शेषः।

मनुः— मूत्रोच्चारसमुत्सर्गं दिवा कुर्य्यादुदङ्मुखः।
दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा॥

शांख्यायनगृह्यम्—

अनादित्याभिमुखो न जघनेन।

न जघनेनेत्यन्तेन जघनसम्मुखता यत्र भवति तत्र न कुर्य्या-दित्यर्थः।

यमः—

प्रत्यङ्मुखस्तु पूर्वाह्णे पराह्णे प्राङ्मुखस्तथा।
उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः॥

देवलः—

सदैवोदङ्मुखः प्रातः सायाह्ने दक्षिणामुखः।
विण्मूत्रे विसृजेन्नित्यं सन्ध्यासु परिवर्ज्जयेत्॥

तत्र चेयं व्यवस्था—

देवलवाक्यवलात् प्रातःसायंकालयोस्त्रिमुहूर्त्तयोरुदङ्मुखत्वमेवं यमवचनं तदतिरिक्तं पूर्वाह्ने प्रत्यङ्मुखताप्रापकम्।

मनुः—

छायायामन्धकारे च रात्रावहनि वा द्विजः।
यथासुखमुखः कुर्य्यात् प्राणबाधाभयेषु च॥

छायान्धकारयोः प्राणपीड़ायां व्याघ्रादिभये च दिङ्मुखनियमो नादर्त्तव्य इति।

तथा तत्रैव—

न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे।
न फालकृष्टे न जले न नद्यां[1] न च पर्व्वते॥

मूत्रशब्दोऽत्राजहत्स्वार्थलक्षणया पुरीषस्याप्युपलक्षकम्। चित्यामग्निचयनस्थाने चितायां वा।

तथा—

न जीर्णदेवायतने न वल्मीके कदाचन।
न ससत्त्वेषु गर्त्तेषु न गच्छन्नापि च स्थितः॥
न नदीतीरमासाद्य न च पर्व्वतमस्तके।
वाय्वग्निविप्रानादित्यमपः पश्यंस्तथैव च॥

---

१ (ख) चित्यां।

न कदाचन कुर्व्वीत विण्मूत्रस्य विसर्ज्जनम् ॥

न पर्व्वत इति पूर्व्ववचनादेव पर्व्वतनिषेधे सिद्धे मस्तकनिषेधो भूयस्त्वाय । यच्च पर्व्वतेष्वशक्यो परीहारस्तत्रापि मस्तकवर्ज्जनार्थमिति पारिजातः । वाय्वादिकं पश्यन् सम्मुखमुपलभ्यमानः ।

हारीतः—

न चत्वरोपद्वारयोर्मूत्रपुरीषे कुर्य्यात्, न तीर्थे, न शस्यसम्पूर्णे, न यज्ञभूमौ न यज्ञियानां वृक्षाणामधस्तात् ।

चत्वरं नानाजनावस्थानदेशः । काकादिबलिस्थानमित्यपरे । उपद्वारं द्वारसमीपं, तीर्थं पुण्यदेशः, जलावतरणमार्ग इत्येके ।

देवलः—

वापी-कूप-नदी-गोष्ठ-चैत्यावासेषु चाम्भसि[1] ।
अग्नौ काष्ठे श्मशाने वा विण्मूत्रं न समाचरेत् ॥

वाप्यादिपदं निरुदकभागपरमम्भसः पृथगुपादानात् । चैत्यो ग्रामव्यपदेशको वृक्षः, आवासो वासकरणीयदेशः ।

यमः-

पल्वलानि तड़ागानि नदी-प्रस्रवणानि च ।
नग-गोमय-भस्मानि फालकृष्टञ्च वर्ज्जयेत् ॥

पल्वलमल्पसरः । तड़ागं कृत्रिमं सरः ।

तुषाङ्गारकपालानि देवतायतनानि च ।
राजमार्गश्मशानानि क्षेत्राणि च खलानि च ॥
उपरुद्धो न सेवेत छायां पथ्यस्तुष्पथम् ।

---

१ (ख) न वहिर्द्वारोपद्वारयोः । २ मूले चैत्याम्भः पथि भस्मसु ।

उदकञ्चोदकान्तञ्च पन्थानञ्च विवर्ज्जयेत् ॥
वर्ज्जयेद्वृक्षमूलानि चैत्यश्वभ्रबिलानि च ।

उपरुद्धो विण्मूत्राभ्यां पीड़ितो न सेवेत मूत्रपुरीषोत्सर्गार्थ-मिति शेषः । पन्थानं विवर्ज्जयेदित्युक्तापि राजमार्ग-चतुष्पथ-ग्रहणं दोषातिशयार्थं । श्वभ्रं विदीर्णभूभागः ।

वशिष्ठः—

नोप्ते न शाद्वलोपजीव्यछायासु ।

शाद्वलो हरितस्निग्धो भूभागः ।

नोषरे न पराङ्मुखौ नोद्याने नोदकपिण्डयोर्वाकाशे ।

नाट्टालस्थित इत्यर्थः ।

तथा—

न प्रत्यगनिलेन्द्वर्क-स्त्रीगुरुब्राह्मणान्वावगुण्ठितशिराः ।

आपस्तम्बः—

छायायां मूत्रपुरीषयोः कर्म्म वर्ज्जयेत् । स्वां तु अवमेहेत ।

स्वीयछायां प्रतीति शेषः । तेन स्वछायायां मेहने न दोषः ।

तथा तत्रैव—

न सोपानत्को मूत्रपुरीषे कुर्य्यात् ।

तथा तत्रैव—

गोदेवताभिमुखो मूत्रपुरीषयोः कर्म्म वर्ज्जयेत् ।

गौतमः—

न वाय्वग्निविप्रादित्यापोदेवतागोषु प्रतिमिथुनं[1] वा मूत्र-पुरीषामेध्यान्युदस्येत ॥

---

१ (ख) गांश्च वा पश्यन् ।

यमः— प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत्।
दृष्ट्वा सूर्य्यं निरीक्षेत गामग्निं ब्राह्मणं तथा॥
प्रत्यादित्यं प्रत्यनिलं प्रतिगाञ्च प्रतिद्विजम्।
प्रतिसोमं प्रतिजलं प्रतिसन्ध्यञ्च नित्यशः॥
हन्ति मेहयतः प्रज्ञां प्रतिपन्थानमेव च।
मेहयन्ति य एतांस्तु ते भवन्ति गतायुषः॥

हारीतः—
रथ्याचत्वरतीर्थेषु श्मशानायतनेषु च।
अपथं समवाप्नोति आयुषा च विमुच्यते॥

मेहयतीति शेषः।

विष्णुः—
तिष्ठेन्नातिचिरं तत्र।

तत्र मूत्रपुरीषस्थाने।

यमः—
नामेध्यमङ्गारैरन्मृज्यान्नापि बर्हिषा।

आपस्तम्बः—
आर्द्रानोषधि वनस्पतीनूर्द्ध्वमाच्छिद्य मूत्रपुरीषयोः संस्रवं[1] वर्ज्जयेत्।

॥ इति गृहस्थरत्नाकरे मूत्रपुरीषोत्सर्गः॥

१ मूले मुन्धने।

## अथ शौचं।

तत्र हारीतः—

शुष्ककाष्ठेन वा मृज्जीत। लिङ्गगुदे इति शेषः।

पारस्करः—

स्वयं शीर्णेन काष्ठेन वा प्रमृज्जीत।

गोतमः—

न हरित्तृणलोष्टाभिर्मूत्रपुरीषाणामपकर्षणं कुर्य्यात्।

हारीतः—

लोष्टविधिरन्यद्रव्यालाभे पर्णनिषेधोऽप्यधाराच्छिद्यमान-पर्ण-गोचरः।

तथा आपस्तम्बः—

अश्मना लोष्टकाष्ठार्द्रानोषधिवनस्पतीनूर्द्धानाच्छिद्य मूत्र-पुरीषयोः शुन्धनं वर्ज्जयेत्॥

देवलः—

अशौचं नोन्मृजेच्छिन्नं प्रस्रावोच्चारयोः स्वयम्।

याज्ञवल्क्य-बौधायनौ—

गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः।
गन्धलेपक्षयकरं शौचं कुर्य्यादतन्द्रितः॥

अतन्द्रित आलस्यशून्यः।

ब्रह्माण्डपुराणे—

उद्धृतोदकमादाय मृत्तिकाञ्चैव वाग्यतः।
उदङ्मुखो दिवा कुर्य्याद्रात्रौ चेद्दक्षिणामुखः॥

कुर्य्याच्छौचमिति शेषः ।

तथा—

सुनिर्णिक्ते मृदं दद्यात् मृदन्ते ह्याप एव च ।

सुनिर्णिक्ते केवलजलप्रक्षालिते लेपाद्यादौ गन्धलेपापकर्षणे शौचममेध्यस्य अद्भिः पूर्व्वं मृदा चेति गोतमवचनात् । एवञ्च सुनिर्णिक्तपदं काष्ठादिप्रोञ्छितगुदानुवादकमिति स्मृतिवचन-व्याख्यानमसङ्गतमिति वैयर्थ्यात् ॥

देवलः—

धर्म्मविद्दक्षिणं हस्तमधःशौचे न योजयेत् ।
तथैव वामहस्तेन नाभेरूर्द्धं न शोधयेत् ॥
प्रकृतिस्थितिरेवास्मात् कारणादुभयक्रिया ।

कारणाद्रोगादेः ।

दक्षः—

एका लिङ्गे च सव्ये त्रिरुभयोर्म्मृद्द्वयं स्मृतम् ।

सव्ये उभयोरिति च हस्ताभिप्रायेणोक्तं एतावन्मूत्रोत्सर्गाशौचम्

तिस्रोऽपाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः ।

उभयोर्हस्तयोः ।

गृहस्थाशौचमाख्यातं त्रिष्वन्येषु यथाक्रमम् ।
द्विगुणं त्रिगुणञ्चैव चतुर्थे च चतुर्गुणम् ॥
अर्द्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ।
द्वितीया च तृतीया च तदर्द्धं परिकीर्त्तितम् ॥
लिङ्गेऽप्यत्र समाख्याता त्रिपर्व्वी पूर्य्यते यया ।

दातव्यमुदकं तावद्यावत् स्यान्मृत्तिकाक्षयः ॥

सुधाद्रव्येन शुद्धिः स्यान्न क्लेशो नैव च वृथा ।

सुधाद्रव्येण सुलभद्रव्येण ।

यस्य शौचेऽपि शैथिल्यं वृत्तं तस्य परीक्षितम् ।

मनुः—

विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्य्यादेयमर्थवत् ।

दैहिकानां मलानाञ्च शुद्धिषु द्वादशस्वपि ॥

मनुः—

एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश ।

उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सता ॥

एकत्र वामे ।

मनु-विष्णू—

वसाशुक्रमसृङ्मज्ज्ञा-मूत्रविट्कर्णविण्नखाः ।

श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥

स्मृतिसमुच्चये मनुः—

करस्थीतपात्रेण कृत्वा मूत्रपुरीषयोः ।

तन्मूत्रसमपानीयं पीत्वा चान्द्रायणं चरेत् ॥

विष्णुपुराणे—

एका लिङ्गे गुदे तिस्रो दश वामकरे नृप ।

हस्तद्वये च सप्तान्या मृदः शौचोपपादिकाः ॥

एतच्छु[1]द्धिर्गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।

१ (ख) शौचम् ।

त्रिगुणं स्याद्वनस्थानां यतीनाञ्च चतुर्गुणम् ॥
यद्दिवा विहितं शौचं रात्रौ तस्यार्द्धमिष्यते।
तदर्द्धमातुरे प्रोक्तमातुरस्यार्द्धमध्वनि ॥

यमः— शिश्ने त्वेका गुदे तिस्रो वामे पाणौ चतुर्द्दश।
ततः पुनरुभाभ्याञ्च दातव्याः सप्त मृत्तिकाः ॥

शङ्खः—

मेहने मृत्तिकाः सप्त लिङ्गे द्वे परिकीर्त्तिते।
एकस्मिन् विंशतिर्हस्ते द्वयोर्ज्ञेया चतुर्द्दश ॥

मेहनमत्र अपानं द्वयोर्हस्तयोः।

तिस्रस्तु मृत्तिका देया कृत्वा तु नखशोधनम्।
तिस्रस्तु पादयोर्देयाः शौचकामेन नित्यशः ॥
शौचमेतद्गृहस्थानां तथा गुरुनिवासिनाम्।
द्विगुणं स्याद्वनस्थानां यतीनां त्रिगुणं भवेत् ॥

पैठीनसिः—

मृत्तिकां संगृह्य एका लिङ्गे अपाने पञ्च एकस्मिन् हस्ते दश उभयोः सप्त मृत्तिकाः। द्विगुणं ब्रह्मचारिणां, वनवासिनां यतीनाञ्च चतुर्गुणम्। गन्धलेपक्षयं यावत् प्रक्षाल्याचम्य प्रयतो भवति।

हारीतः—

एका लिङ्गे तिस्रोऽपाने दद्यात् मृत्तिकामादोषात् पाणौ प्रक्षाल्य दश सव्ये षट् षट् पृष्ठे सप्तोभाभ्याम्। द्विगुणं ब्रह्मचारिणां त्रिगुणं वानप्रस्थानां चतुर्गुणं भिक्षूणाम्।

पृष्ठे हस्तपृष्ठे।

ब्रह्मपुराणे—

द्वे लिङ्गे मृत्तिके देये गुदे सप्त यथाक्रमम्।
द्वाविंशद्वामहस्ते च तथा देयास्तु मृत्तिकाः॥
द्वयोस्तु षोडशाऽन्यास्तु पुनः सप्त च सर्व्वदा।
पादयोर्द्वे गृहीत्वा च सुप्रक्षालितपाणिना॥
त्रिराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनम्।

बौधायनः—

मूत्रे मृदाऽद्भिः प्रक्षालनं त्रिः पाणेः, मूत्रवत् रेतसः समुत्सर्गे।

देवलः—

यावत् साध्विति मन्येत तावच्छौचं विधीयते।
प्रमाणं शौचसंख्यायां न शिष्टैरुपदिश्यते॥

एतद्वचनानुसारात् मनूक्त-संख्याधिकोत्तरोत्तर-मृत्संख्यानां [1]लेपानुवृत्तिशङ्कया व्यवस्था। चतुराद्यविहितसंख्यानुष्ठाने तु संख्याधिगमनेऽपि विहितमुक्तं दक्षेण—

न्यूनाधिकं न कर्त्तव्यं शौचं शुद्धिमभीप्सता।
प्रायश्चित्तं प्रयुज्येत विहितातिक्रमे कृतम्॥

इति। पारिजाते तु देवलवचनानां [2]चतुराश्रमेषु स्त्रीशूद्रानुपनीतविषयत्वाद्व्याख्यातम्। तच्च संख्यादेरश्रुतेः। उदकविषयं वा—

---

१ (क) गन्धलेपक्षयकारसंख्यया।
२ (ख) चतुराश्रमेतरविषयं स्त्रीशूद्रानुपनीतविषयं वा।

दातव्यमुदकं तावत् यावत् स्यान्मृत्तिकाक्षयः।

इति दक्षेणाप्युक्तेः। इत्युक्तम्।

मनूक्तपक्षेऽपि वामकरपृष्ठेऽपि षट् मृत्तिका देयाः। षट् पृष्ठत इति हारीतवचनात्।

शौचानन्तरं शङ्खलिखितौ—

कमण्डलुमुपस्पृश्य प्रक्षाल्य पाणि-पादौ वाचमु[1]त्सृज्य मनसा ईशानं ध्यायेत्। ईशान ईश्वरः।

शौचानन्तरं हारीतः—

तिसृभिः पादौ प्रक्षाल्य गोमयेन वा कमण्डलुं परिमृज्य पूर्व्ववदुपस्पृश्यादित्यं सोममग्निं वीक्षेत।

अत्र दिवा आदित्यं रात्रौ सोमं तयोरभावे अग्निमिति ज्ञेयम्।

आपस्तम्बः—

अह्नि शौचं यथा प्रोक्तं निश्यर्द्धन्तु तदिष्यते।
पथि पादस्तु विज्ञेय आर्त्तः कुर्य्याद्यथाबलम्॥

न पश्येदात्मनः शकृदित्यनुवृत्तौ गौतमः—

दृष्ट्वा सूर्य्यं निरीक्षेत गामग्निं ब्राह्मणं तथा।

अत्रैव व्यासः—

शौचं कृत्वा मूत्रोच्चारं न पश्येत।

दक्षः—

यथा प्रोक्तं दिवा शौचमर्द्धं रात्रौ विधीयते।

---

१ (ख) वाचमय।

आतुरस्य तदर्द्धं स्यात् तदर्द्धन्तु पथि स्मृतम् ॥

छन्दोगपरिशिष्टः—

यस्मिन् स्थाने कृतं शौचं वारिणा च विशोधयेत्।
न शुद्धिस्तु भवेत्तस्य मृत्तिकां यो न शोधयेत् ॥

विष्णुपुराणे—

वल्मीकमूषिकोत्खातां मृदमन्तर्जलात्तथा।
शौचावशिष्टां गेहाच्च नादद्यात्लेपसम्भवाम् ॥
अन्तःप्राण्यवपन्नाञ्च हलोत्खाताञ्च पार्थिव।
परित्यजेन्मृदस्त्वेताः सकलाः शौचसाधने ॥

अन्तःप्राण्यवपन्नां अन्तर्मध्ये प्राणिभिः कीटादिभिर्युक्ताम्।

यमः—

आहरेन्मृत्तिकां विप्रः कूलात् ससिकतां तथा।
नाखूत्कृष्टां न वल्मीकां न पांशुलां न कर्द्दमाम् ॥
न मार्गान्नोषराच्चैव शौचशिष्टां परस्य तु।
एतास्तु वर्ज्जयेद्विद्वान् वृथा शौचं हि तत् स्मृतम् ॥

आखूत्कृष्टां मूषिकोत्कृष्टाम्।

इति गृहस्थरत्नाकरे शौचतरङ्गः ॥

---

## अथाचमनानि ।

तत्र मनुः—

उपस्पृश्य द्विजो नित्यमन्नमद्यात् समाहितः ।

भुक्त्वा चोपस्पृशेत् सम्यगद्भिः खानि च संस्पृशेत् ॥

तथा—

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।

कायत्रैदशिकाभ्यां वा न पित्रेण कदाचन ॥

कायः प्राजापत्यं तीर्थं, विप्र इति चोपलक्षणं विहिताचमनानुवादात् । ब्राह्मतीर्थस्यायोग्यत्वे कायत्रैदशिकाभ्यां वाचमनं कर्त्तव्यमिति व्यवस्थितो विकल्पः ।

गोतमः—

प्राङ्मुख उदङ्मुखो वा शौचमाचरेत् ।

शुचौ देशे आसीनो दक्षिणं बाहुं जान्वन्तरं कृत्वा यज्ञोपवीत्यामणिबन्धात् पाणी प्रक्षाल्य वाग्यतो हृदयस्पृशस्त्रिश्चतुर्वा अप आचामेत् द्विः प्रमृज्यात् । पादौ चाभ्युक्षेत् । खानि चोपस्पृशेत् । शीर्षण्यानि मूर्द्धनि च दद्यात् ।

मणिवन्धः पाणेरूर्द्धं प्रकोष्ठादधोदेशः । त्रिश्चतुर्वेति भावशुद्ध्यपेक्षया विकल्पो न तु फलभूयस्त्वार्थं । कल्पनायां बीजाभावात् । खानि इन्द्रियाणि उपस्पृशेदित्यत्र अप इत्यन्वीयते । उपस्पृशेदुपस्पर्शयेत् अन्तर्भावितण्यर्थः ।

तथाच गोभिलः—

संस्टशेन्द्रियाण्यद्भिः संस्पृशेत् अक्षिणी नासिके कर्णाविति ।

पारिजाते तु०— उपस्पृशेदित्येव पठितं शीर्षण्यानि शिरसि जातानि।

हारीतः—

आमणिबन्धात् पाणी प्रक्षाल्य जङ्घाभ्यां पादौ शान्तिश्रेष्ठकामोऽन्नाद्यकामो वा दक्षिणे चरणाङ्गुष्ठे पाणिमवस्राव्य प्राणानालभ्य नाभिमुपस्पृशेत्।

देवलः—

प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः।
उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः॥
शिखां बद्ध्वा वसित्वा च निर्णिक्ते वाससी शुभे।
तूष्णीं भूत्वा समाधाय नोर्द्ध्वञ्च विलोकयन्॥

शनैस्त्वरामकुर्व्वन् निर्णिक्ते सुधौते समाधाय मन इति शेषः। ऊर्द्ध्वञ्च उत्तिष्ठन्, अविलोकयन् दिश इति शेषः। दिशस्त्वानवलोकयन् इति शङ्खोक्तेः।

प्राङ्मुखोदङ्मुखयोराचमनानुकूल-पादावसेचनेऽस्त्वनेन विधानात् प्रत्यक् पादावसेचनमित्यापस्तम्बवचनं केवलप्रक्षालनविषयं बोद्धव्यम्।

तथा—

न गच्छन्न शयानश्च न ज्वलन् न परान् स्पृशन्।
न हसन् न च संजल्पन् नात्मानञ्चैव वीक्षयन्॥

ज्वलन् कम्पमानः, आत्मानं आत्महृदयं वीक्षयन्निति स्वार्थे णिच्।

तथा—

केशान्नीवीमधःकायमस्पृशन् धरणीमपि।

हस्तौ च मणिवन्धाभ्यां पश्चादासीत संयतः ।
यदि स्पृशति चैतानि भूयः प्रक्षालयेत् करम् ॥
अधःकायं नाभेरधःप्रदेशं अस्पृशन् करेणेति शेषः ।

तथा—

इत्येवमङ्घ्रिराजानु प्रक्षाल्य चरणौ पृथक् ।
अथापः प्रथमात् तीर्थाद्दक्षिणात् त्रिः पिबेत् समम् ॥
अशब्दमनवस्रावमबहिर्जानुबुद्बुदम् ।

प्रथमात् ब्राह्मात् हेतौ (?) पञ्चमी अनवस्रावं यथा जलं न स्रवति अबहिर्जानुबुद्बुदं अबहिर्जानु अबुद्बुदम् ।

तथा— द्विस्तथाङ्गुष्ठमूलेन परिमृज्यात् पुनर्मुखम् ।
न वाङ्गुल्या न पृष्ठैर्वा परिमृज्यात् कथञ्चन ॥
ततः कृत्वाङ्गुलिस्पर्शं द्विः श्रोत्रं नाभिमुक्त वा ।
मूर्द्धानं चरणौ चाद्भिः संप्रोक्ष्य मुखमास्पृशेत् ॥
पृष्ठैरङ्गुलिपृष्ठैः ।

व्यासः—

त्रिः प्राशयेदपः पूर्व्वं द्विरुन्मृज्यात्ततो मुखम् ।
पादौ चाभ्युक्ष्य मूर्द्धानमभ्युक्षेत्तदनन्तरम् ॥
अक्षिणी नासिके कर्णावोष्ठौ च तदनन्तरम् ।
ततः स्पृशेन्नाभिदेशं पुनरापश्च संस्पृशेत् ॥

विष्णुः—

तन्मनाः सुमनाश्चाचामेत् । तन्मना आचमनमनाः तचा-वहित इति यावत् ।

याज्ञवल्क्यः—

अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः।

प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्॥

त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिरुपस्पृशेत्।

अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः॥

मरीचिः—

ईशानाभिमुखो भूत्वा उपस्पृश्येद्यथाविधि।

विवर्णवरगन्धाढ्यं फेनिलञ्च विवर्ज्जयेत्॥

नरसिंहपुराणे—

दक्षिणन्तु करं कृत्वा गोकर्णाकृतिमत् पुमान्।

त्रिः पिबेत् वीक्षितं तोयमास्यं द्विः परिमार्ज्जयेत्॥

भविष्यपुराणे—

समौ च चरणौ कृत्वा तथा नद्युग्मिखो नृप।

अत्यन्तमुत्थिताश्चापि (?) त्यक्त्वा राजन् सुदूरतः॥

तथा— घनाङ्गुलिकरं कृत्वा एकाग्रसुमना द्विजः।

अङ्गुष्ठेन प्रदेशिन्या वाऽलभेद्दक्षिणं नृप॥

अङ्गुष्ठानामिकाभ्याञ्च नासिकामालभेत्ततः।

मध्यमाभिर्मुखं नित्यं संस्पृशेत् कुरुनन्दन॥

कनिष्ठाङ्गुष्ठकाभ्याञ्च कर्णावालभते ततः।

अङ्गुलीभिस्तथा बाहू अङ्गुष्ठेन तु मण्डलम्॥

नाभेः कुरुकुलश्रेष्ठ शिरः सर्व्वाभिरेव च।

नाभेर्मण्डलमित्यर्थः।

दक्षः—

अनेनैव विधानेन आचान्तः शुचितामियात् ।
प्रक्षाल्य पाणी पादौ च त्रिः पिबेदम्बु वीक्षितम् ॥

अनेन वक्ष्यमाणेन ।

संवृत्योङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम् ।
संहत्य तिसृभिः पूर्व्वमास्यमेवमुपस्पृशेत् ॥

मुखं संवृत्याङ्गुष्ठमूलेन प्रमृज्यादित्यन्वयः। तिसृभिः तर्ज्जनी-मध्यमानामिकाभिः। एवमिति संवृत्यान्वयः।

तथा—

अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ।
अङ्गुष्ठानामिकाभ्याञ्च चक्षुः-श्रोत्रे पुनः पुनः ॥
नाभिं कनिष्ठाङ्गुष्ठेन हृदयन्तु तलेन वै ।
सर्व्वाभिश्च शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥

प्रदेशिनीतर्ज्जनीभ्यां पूर्व्वमास्यं स्पृष्ट्वा पश्चाद्घ्राणम्। अनन्तरं चक्षुषी पुनः श्रोत्रे पुनर्नाभिमित्यन्वयः।

अत्र घ्राणस्य चक्षुषः श्रोत्रस्य स्पर्शनं पुटद्वये बाहुस्पर्शनञ्चांश-देशे।

अत्रैव शङ्खः—

तर्ज्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् ।
अङ्गुष्ठमध्ययोगेन स्पृशेन्नेत्रद्वयं ततः ॥
अनामाङ्गुष्ठयोगेन स्पृशेत् कर्णद्वयं तथा ।
कनिष्ठाङ्गुष्ठयोगेन स्पृशेत् स्कन्धद्वयं ततः ॥

सर्व्वासामेव योगेन नाभिञ्च हृदयं तथा।
संस्पृशेच्च तथा शीर्षमयमाचमने विधिः॥

पैठीनसिः—

अङ्गुष्ठेन प्रदेशिन्या नासिके संस्पृशेत् अङ्गुष्ठानामिकाभ्यां नेत्रे कनीनिकाङ्गुष्ठाभ्यां श्रोत्रे मध्यमाङ्गुष्ठाभ्यां नाभिं सर्व्वाभिः शिरः।

प्रदेशिनी वायुर्मध्यमा प्रजापतिरनामिका तु मघवा अङ्गुष्ठोऽग्निर्यथासंख्यमिति॥

तथा—

स्पृष्ट्वा प्राणान् यथासंख्यं पादौ प्रोक्ष्य तथा शुचिः।
सव्ये च पाणौ शेषा अपो निनयेत्। प्राणानिन्द्रियाणि।

आपस्तम्बः—

तिष्ठन्नाचामेत् प्रह्वो वा। आसीनस्त्रिराचामेत् हृदयगाभिरद्भिः सकृदोष्ठौ परिमृज्येत् सकृदुपस्पृशेद्द्विरित्येके। दक्षिणेन पाणिना सव्यं प्रोक्षेत् पादौ शिरश्चेन्द्रियाण्युपस्पृशेत् चक्षुषी नासिके श्रोत्रे अथाप उपस्पृशेत्।

तिष्ठन् प्रह्वो वा नाचामेदित्यर्थः। प्रह्वः अत्यन्तावनतकायः सव्यशब्दः सव्यपाणिपरः। सव्यं पाणिं पादौ च प्रोक्षतीति तैत्तिरीयश्रुतेः।

सव्यं पाणिं पादौ शिरश्च प्रोक्षेदित्यन्वयः। सकृदुपस्पृशेत् द्विरित्येके इत्यत्र भावशुद्ध्यपेक्षया विकल्पः।

हारीतः—

प्राङ्मुख उदङ्मुखो वा उपविश्यान्तर्ज्जानुरत्नी कृत्वा त्रिरपो द्रष्टाः पिवेत्। द्विः प्रमृज्यौष्ठौ सकृत् मूर्द्धानं चक्षुःश्रोत्रे नाभिं हृदयं पादावभ्युक्ष्य उपस्पृश्य प्रयतो भवति।

शङ्खः—

त्रिः प्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः।
ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुम॥
गङ्गा च यमुना चैव प्रीयते परिमार्ज्जनात्।
नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये॥
स्पृष्टे लोचनयुग्मे च प्रीयेते शशिभास्करौ।
कर्णयुग्मे तथा स्पृष्टे प्रीयेते अनिलानलौ॥
स्कन्धयोः स्पर्शनादेव प्रीयन्ते सर्व्वदेवताः।
मूर्द्धसंस्पर्शनादस्य प्रीतस्तु पुरुषो भवेत्॥

नासत्यदस्रावश्विनौकुमारौ पुरुषः परमात्मा।

अत्र ऋषिभेदेन श्रोत्राद्यालम्भे ये प्रकाराः परस्परभिन्ना उक्ताः। ते चाचमने वैकल्पिका इत्यविरोधः।

इन्द्रियस्पर्शानन्तरं भविष्यपुराणे—

यद्भूमावुदकं वीर समुत्सृजति मानवः।
वासुकिप्रमुखा नागास्तेन प्रीणन्ति नित्यशः॥
विना यज्ञोपवीतेन तथा मुक्तशिखो द्विजः।
अप्रक्षालितपादस्तु आचान्तोऽप्यशुचिर्भवेत्॥
बहिर्जानुरुपस्पृश्य एकहस्तार्पितैर्जलैः।

सोपानत्कस्तथा तिष्ठन् नैव शुद्धिमवाप्नुयात् ॥

देवलः—

सोपानत्को जलस्थो वा मुक्तकेशोऽपि वा नरः ।
उष्णीषी वापि नाचामेत् वस्त्रेणावेष्ट्य वा शिरः ॥
न शौचशेषधाराभिराचामेद्वेदतत्त्ववित् ।

गोभिलः—

जानुभ्यामूर्द्धमाचम्य जले तिष्ठन्न दुष्यति ।
नाभ्यामधस्तथा तिष्ठन्नाचामेन्न विचक्षणः ॥

याज्ञवल्क्यः—

परिधानाद् बहिःकचा निबद्धा त्वासुरी भवेत् ।
धर्म्ये कर्म्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥

कचा पश्चादञ्चलं बहिर्वलाते इति शेषः ।

प्रचेताः—

नान्तर्वासाः । अधोवस्त्रशून्य इत्यर्थः ।

तथा—

नान्तरीयैकदेशेन कल्पयित्वोत्तरीयकम् ।

शाठ्यायनः—

दानमाचमनं होमं भोजनं देवतार्च्चनम् ।
प्रौढ़पादो न कुर्व्वीत स्वाध्यायं पितृतर्पणम् ॥
आसनारूढ़पादस्तु जानुनोर्जङ्घयोस्तथा ।
कृतावसक्थिको यश्च प्रौढ़पादः स उच्यते ॥

मरीचिः

न बहिर्जानुस्त्वरया न वासनस्थो न चोत्थितः।
न पादुकास्थो नाविक्तः शुचिः प्रयतमानसः॥
उपस्पृश्य द्विजो नित्यं शुद्धः पूतो भवेन्नरः।
भुक्तासनस्थोऽप्याचामेन्नान्यकाले कदाचन॥

व्यासः—

शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्॥
अपः पाणिनखाग्रेषु आचामेद्यस्तु ब्राह्मणः।
सुरापानेन तत्तुल्यमित्येवं ऋषिरब्रवीत्॥

ब्रह्माण्डपुराणे—

कर्णं(ण्ठं) शिरो वा प्रावृत्य रथ्यापणगतोऽपि वा।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्॥

आपणः क्रयविक्रयभूमिः।

बौधायनः—

पादप्रक्षालनोच्छेषणेन नाचामेत् यद्याचामेत् भूमौ स्रावयित्वा आचामेत्।

उच्छेषणेन शेषेण।

आपस्तम्बः—

न वर्षधारया आचामेत्।

तथा—

न प्रदरोदकेन तप्ताभिप्राकारणात्।

प्रदरः स्वयं विदीर्णभूभागः। अकारणात् वेगादिना।

अपो नाचामेदित्यनुवृत्तौ वशिष्ठः—

प्रदरा अपि·या गोस्तर्पणसमर्थाः स्युर्वर्णरसदुष्टा याश्च स्युर-शुभागमाः।

वर्णरसदुष्टा द्रव्यान्तरसम्बन्धेन[1] दूषितवर्णरसाः, अशुभागमा अशुभ आगमो यासां तास्तथा अशुभत्वं निन्दितदेशकालादिना।

तथा—

न्लावश्यककार्य्याणि आचामेच्छौचवित्ततः।

आवश्यकं मूत्रपुरीषोत्सर्गादि। ततः कमण्डलोस्तस्य प्रक्रान्तत्वात्।

आचमेदित्यनुवृत्तौ शङ्खलिखितौ—

उद्धृतपरिपूताभिरद्भिर्वीचिताभिरनभिमिश्रिताभिरफेनाभि-रबुद्बुदाभिर्न शूद्राशुच्येकपाण्यावर्ज्जिताभिः।

उद्धृतपरिपूताभिः निरस्तान्यद्रव्याभिः, अशुचिशब्दः आचमनकर्त्तृव्यतिरिक्तपरः। एवमेकपाण्यावर्ज्जितेत्यत्राप्येकः पाणि-राचमनकर्त्तुरन्यस्य। एवञ्च स्वयमेकपाण्यावर्ज्जितेनाप्याचमनम-प्रतिषिद्धं। भूमिगतास्वाचम्य प्रयतो भवति। यं वा प्रयत आचामयेत् इत्यापस्तम्बवचनेऽपि प्रयत आचमनकर्त्त्रन्य एव आचामयेदिति प्रयोगकर्त्तृभिन्नाभावात्[2]।

तेनायं तदाकार्थः। भूमिष्ठाचमनमप्रयतपराणां वर्ज्जित-जलानाञ्च शुद्धिकरमिति। अतो यत् शूद्राशुच्येकपाण्यादि-

---

१ (ख) संसर्गेण। २ (ख) पुस्तके प्रयोजककर्त्तभिलापात्।

वर्ज्जिताभिरिति सामान्येन एकपाण्यावर्ज्जितेन आचमन-निषेधात्।

आपस्तम्बवाक्ये प्रयतपरनियमाच्च मुखमार्ज्जितेनाचमनं शुद्धि-हेतुरिति कल्पतरुः। तन्नादेयम्।

तथाच कमण्डल्वधिकारे बौधायनः—

मूत्रपुरीषे कुर्व्वन् दक्षिणहस्ते गृह्णाति सव्ये आचमनीयम्। आचमनीयं आचमनविधिं कुर्व्वन् सव्यहस्ते कमण्डलुं गृह्णाति इत्यर्थः। एतेनाचमने वामकरावर्ज्जितत्वमभिहितं अन्यथा अदृष्टार्थत्वापत्तेः। मूत्रसाहचर्य्यात् शिष्टाचारविरोधाच्च।

आपस्तम्बः—

नाग्न्युदकशेषेण वृथा कर्म्माणि कुर्व्वीताचामेद्वा। पाणि-संक्षुब्धेनोदकेनैकपाण्यावर्ज्जितेन च नाचामेत्।

अग्न्युदकशेषेण अग्निपर्य्युक्षणाद्यर्थोपात्तोदकशेषेण वृथेति यत इत्यध्याहाराद्धेतुः यतो वृथाकर्म्माणि स्युरिति। संक्षुब्धमालोड़ितं एकपाणिरन्य एव।

विष्णु-याज्ञवल्क्यौ—

हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः।
शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः॥

अत्र कल्पतरुः—

अन्तत अन्तरवायवे एतेनाभ्युक्षणं विहितम्।

त्रिराचामेदपः पूर्व्वं द्विः प्रमृज्यात्ततो मुखम्।
शारीरं शौचमिच्छन्ति स्त्री शूद्रस्य सकृत् सकृत्॥

इति महार्णवकारलिखितमनुवचनादित्याह ।

मिताक्षराकारस्तु—

अन्तेन तालुना स्पृष्टाभिः सकृदिति च शब्दादनुपनीतोऽप्याह । तेनानयोः प्रत्येकमुक्ताचमनमभिमतं पारिजाते तु अन्तत ओष्ठप्रान्तेन उत्तरोत्तरमपकर्षादित्याह ।

अत्र वाकारोपष्टम्भेन कल्पतरुमिताक्षरावचने न्याय्ये ।

एवञ्च ब्रह्मपुराणे—

स्त्री शूद्रो वाथ नित्याम्भःक्षालनाञ्च करोष्ठयोः ।

इत्याचमनानुरूपजलाभावे नेयम् ।

शूद्राधिकारे गोतमः—

आचमनार्थे प्रक्षालनमेव। एतदपि आचमनानुरूपजलाभावे ।

इति गृहस्थरत्नाकरे आचमनतरङ्गः ॥

---

# अथाचमननिमित्तानि ।

तत्र मनुः—

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतं वचः ।
पीत्वापोऽध्येष्यमाणश्च आचमेत् प्रयतोऽपि सन् ॥

वायुपुराणे—

निष्ठीविते तथाऽभ्यक्ते तथा पादावसेचने ।
उच्छिष्टस्य च सम्भाषादशुच्यप्रयतस्य[1] च ॥

---

१ क्वचित् अशुच्युपहतस्य च ।

सन्देहेषु च सर्व्वेषु शिखां मुक्त्वा तथैव च ।
विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत् ।

सन्देहे आचमननिमित्तस्याचमनस्य च । विना यज्ञोपवीतेनेत्यत्र यज्ञोपवीतत्याग उपस्पर्शे निमित्ततयोक्तः ।

तथा—

उच्छिष्टस्य च संस्पर्शे दर्शने चान्त्यवासिनाम् ।

अन्त्यवासिनोऽत्र चाण्डालाः ।

विष्णुः—

क्षुत्वा सुप्त्वा च भुक्त्वा च भोजनाध्ययनेऽशुचिः ।
पीत्वा स्नात्वा च निष्ठीव्य वासो विपरिधाय च ॥

रथ्यामाक्रम्य कृतमूत्रपुरीषः पञ्चनखास्थिस्नेहं स्पृष्ट्वा चाचामेत् चाण्डालम्लेच्छसम्भाषणे च ।

वाक्यमिदं हलायुधेन द्विराचमने लिखितं तन्मन्दं पुनराचामेदित्यश्रुतेः । अन्यत्राप्येवम् ।

ब्रह्मपुराणे—

क्षुते श्लेष्मपरित्यागे धीते वा भक्षिते सति ।
अधोवर्णस्य सम्भाषे स्वप्ने वा दन्तधावने ॥
आचम्य प्रयतो भूत्वा ततः शुद्धो भवेन्नरः ।

धीते पीते धटः पानार्थस्य रूपं अधोवर्णोऽत्र चाण्डालादिः ।

आचमनविध्यन्तरं देवलः—

रेतो-मूत्र-शकृत्-सेके[1] भोजनेऽध्वपरिश्रमे ।

---

१ (ख) पुस्तके — मोक्षे ।

शौचमेवंविधं प्रोक्तमौषधान्यत्र वर्त्तते ॥

एवम्विधं सर्व्वाङ्गसम्पूर्णमन्यथाङ्गहीनमपीत्यर्थः ।

तथा— विशेषशौचं वक्ष्यामि भोजनोच्चारकर्म्मणः ।
सामान्येन विनिर्द्दिष्टः सर्व्वत्राचमनक्रमः ॥
उच्छिष्टं मानवं स्पृष्ट्वा भोज्यं[1] वापि तथाविधम् ।
तथैव हस्तौ पादौ च प्रचाल्याचम्य शुध्यति ॥

तथाविधमुच्छिष्टम् ।

यदम्भः शौचनिर्मुक्तं चितिं प्राप्य विनश्यति ।
प्रचाल्याशुचिलिप्तञ्च स्पृष्ट्वाचम्य विशुध्यति ॥

शौचनिर्मुक्तमत्र शौचजलं विनष्टं भूमौ विलीनं । तद्भूमिं स्पृष्ट्वेति यावत्, प्रचाल्याशुचिलिप्तं कायभागं प्रचाल्य चाचम्य प्रयतो भवति ।

पैठीनसिः—

उच्छिष्टं रेतो मूत्रं संस्पृश्य उन्मृज्याचम्य प्रयतो भवति । प्रचाल्य च तं प्रदेशमुच्छिष्टादिलिप्तकायभागम् ।

अत्र चाचमनप्रचालनयोः पाठिकक्रमस्यानुक्रमादनादरः ।

आपस्तम्बः—

स्वप्नेषु चवथौ [2]शिघाणिकालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं गत्वा अमेध्यञ्चोपस्पृश्य अप्रयतञ्च मानुषं नीवीञ्च परिधायाप उपस्पृशेत् । आर्द्रं वा शकृदोषधी र्भूमिं वा ।

---

१ (क) पुस्तके भोजनेऽपि । २ (ख) शृङ्घाणिकाश्चालम्भे ।

सिंहाणिका नासिकाविस्रुतः श्लेष्मा, अश्रु नेत्रजलम्। एतच्चाग्नि-गो-ब्राह्मणानां स्पर्शे यदाचमनं तद्विहितस्पर्शेतरस्पर्शविषये स्पर्शमात्रनिमित्तं न तु स्पर्शजन्यप्रायश्चित्तनिमित्तं बोध्यम्। महापथो राजमार्गः, नीवीञ्च परिधाय वस्त्रे ग्रन्थिं कृत्वा आर्द्रं शकृत् अशुष्कं गोमयम्।

बौधायनः—

नीवीं विस्रंस्य परिधायोपस्पृशेत्। आर्द्रं तृणं भूमिं गोमयं वा उपस्पृशेत्।

विस्रंस्य मोचयित्वा। एतद्बौधायनदर्शनात् अन्यत्रापि वासः-पदं अधरीयवस्त्रपरम्। आचमनासम्भवे चार्द्रतृणादिस्पर्श इति विकल्पः।

आपस्तम्बः—

रिक्तपाणिर्वयसे उद्यम्याप उपस्पृशेत्। शक्तिविषये न मुहूर्त्तमप्यप्रयतः स्यान्नग्नो वा। नाप्सु सतः प्रयमणं विद्यते उत्तीर्य्य आचामेत्।

रिक्तपाणिर्लोष्ट्रादिशून्यहस्तः वयसे पक्षिणे उद्यम्य उत्क्षिप्य पाणिमित्यन्वयः। प्रयमणं प्रायत्यं शौचमिति यावत् उत्तीर्य्य उदकादुत्थाय।

यमः—

> उत्तीर्य्योदकमाचम्य अवतीर्य्य उपस्पृशेत्।
> एवं स्याच्छ्रेयसा युक्तो वरुणश्चैव पूजितः॥

अवतीर्य्य प्रविश्य।

जलमित्यनुवृत्तौ हारीतः—

नोत्तरेदनुपस्पृश्य। उत्तरेत् सन्तरेत्।

पैठीनसिः—

अन्तरुदकमाचान्तो ऽन्तरेव शुद्धो भवति, बहिरुदकमाचान्तो बहिरेव शुद्धः स्यात्। तस्मादन्तरेकं बहिरेकञ्च कृत्वा पादमाचामेत्। सर्व्वत्र शुद्धो भवति।

संवर्त्तः—

चर्म्मारं रजकं वेणुं धीवरं नटमेव च।
एतान् स्पृष्ट्वा नरो मोहादाचामेत् प्रयतोऽपि सन्॥

पराशरः—

क्षुते निष्ठीविते चैव दन्तस्पृष्टे तथाऽनृते।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत्॥
प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा।
विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत्॥

अयञ्च मुख्याचमनासम्भवेऽनुकल्पः।

दक्षिणकर्णस्पर्शानुवृत्तौ शातातपः—

वातकर्म्मणि निष्ठीव्य दन्तश्लिष्टेऽन्यथा नृप॥

मार्कण्डेयपुराणे—

कुर्य्यादाचमनस्पर्शं गोपृष्ठस्यार्कदर्शनम्।
कुर्व्वीतालम्भनं वापि दक्षिणश्रवणस्य च॥
यथा विभवतो ह्येतत् पूर्व्वाभावे ततः परम्।
विद्यमाने न पूर्व्वस्मिन्नुत्तरप्राप्तिरिष्यते॥

आपस्तम्बः—

श्यावान्तपर्य्यन्तावोष्ठावुपस्पृश्याचामेत्। न श्मश्रुभिरुच्छिष्टो भवत्यन्तरास्ये सद्भिर्यावन्न हस्तेनोपस्पृशति। [१]यत्रानिमित्तं स्वेदविन्दवः पतन्त उपलभ्यन्ते तत्राचमनं विहितम्। ये भूमौ न तेष्वाचामेदित्येके।

श्यावान्तपर्य्यन्तौ विलोमकौ पतन्तः स्वाङ्गे इति शेषः।

इति गृहस्थरत्नाकरे आचमननिमित्ततरङ्गः॥

---

## अथ द्विराचमननिमित्तानि।

तत्रापस्तम्बः—

भोक्ष्यमाणस्तु प्रयतो द्विराचामेत् द्विःपरि[२]मृजेत्। सकृदुपस्पृशेत्।

एतच्च भोक्ष्यमाणस्यैव सकृदोष्ठादिस्पर्शनं अन्यदा तु सकृत् द्विर्वा एवं परिमार्ज्जनेऽपि व्यवस्था।

उपस्पृशेदिति जलं स्पृशेदित्यर्थ इति हलायुधः। तच्च परिमृजेदित्यत्र कर्म्मत्वेनोपस्थितस्योष्ठस्यैव स्पृश्यत्वस्यैर्व्यात्। अत्र द्विराचमने पाणिपादप्रक्षालनं सकृदेव दृष्टैक्यात् आस्यमार्ज्जनमावर्त्तते अदृष्टार्थत्वादिति पारिजातः। आचान्तस्य

---

१ मूले य आस्याद्विन्दवः पतन्तः। २ (क) मृज्यात्।

पुनराचमनविधानात् साङ्गस्यैव। त्रिःपिबेदम्बु वीक्षितमिति आचमनस्यावृत्तिरित्यनेनोच्यते।

व्यासः—

प्रक्षाल्य पाणी पादौ च भुञ्जानो द्विरुपस्पृशेत्।

याज्ञवल्क्यः—

> स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे।
> आचान्तः पुनराचामेद्वासो विपरिधाय च॥

शङ्खलिखितौ—

मूत्रपुरीषनिष्ठीवनादिसूक्तवाक्याभिधानेषु च पुनरुपस्पृशेत्। सूक्तं परुषम्।

पैठीनसिः—

कलिन-काय-श्वासागमे च रथ्याचत्वर-श्मशाना-क्रान्तेषु च आचान्तः पुनराचामेत्।

कलिनशब्दः कठिनस्पर्शार्थकः, कायोऽत्र विहृतौ व्यायामादिना, चत्वरं प्रसिद्धम्।

इति गृहस्थरत्नाकरे द्विराचमननिमित्ततरङ्गः॥

---

## अथाचमनापवादः।

तत्र मनुः—

> नोच्छिष्टं कुर्व्वते मुख्या विप्रुषोऽङ्गं न यान्ति याः।
> न श्मश्रूणि गतान्यास्यं न दन्तान्तरधिष्ठितम्॥

मुख्या मुखे भवाः, यान्ति गच्छन्ति, अश्रूणि जुखकेशविशेषाः, आस्यगतानि मुखान्तर्गतानि दन्तान्तरधिष्ठितं दन्तमध्याविष्टम् ।

गोतमः—

दन्तश्लिष्टन्तु दन्तवत् । अन्यत्र जिह्वाभिमर्षणात् ।

प्राक्च्युतेरित्येके ।

च्युतिष्वास्त्रववद्विद्यात् निगिरन्नेव तच्छुचिः[१] ।

अन्यत्र जिह्वाभिमर्षणात् । जिह्वया भिन्नत्वेन रसावगमः, प्राक्च्युतेरित्येक इति ।

सत्यपि जिह्वया भिन्नत्वेन रसानवगमे यावन्न च्यवते तावच्छु-चिरित्येके मन्यन्ते च्युतेरास्रववत् लालावत्, निगिरन्नेव त्यजन्नेव शुचिः शुद्धः । दन्तलग्नं जिह्वास्पृष्टं आचमनार्थमाकर्षणीयं यदि न च्यवते तदा दन्तलग्ने सत्यप्याचमनं करणीयम् ।

तदुक्तं देवलेन—

भोजने दन्तलग्नानि निर्हृत्याचमनञ्चरेत् ।
दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत् ॥
न तत्र बहुशः कुर्य्याद्यत्नमुद्धरणे पुनः ।
भवेदशौचमत्यर्थं तृणवेधाद्व्रणे कृते ॥

शङ्खः—

दन्तवद्दन्तलग्नेषु रसवर्ज्जम् ।

वशिष्ठः—

न च अश्रुगतो लेपः ।

१ (ख) पुस्तके तच्छुचिः ।

दन्तवद्दन्तलग्नेषु यावन्नान्तर्मुखे भवेत्।
आचान्तस्यावशिष्टं स्यात् निगिरन्नेव तच्छुचिः[1] ॥

न च श्मश्रुगतो लेपः अशुचिरिति शेषः। आचान्तस्य पुरुषस्य प्रमादादवशिष्टमणुकणाद्याचमनोत्तरमुपलभ्यते तदपि निगिरन्नेव शुचिरित्यर्थः।

पैठीनसिः—

भूमिगता विन्दवः परामृष्टाः पूता विप्रुषः। रोमद्वयक्लिन्ना आचामेत्।

विन्दवोऽत्र आचमनजलविन्दवः विप्रुषः परामृष्टाः स्पृष्टाः पूता नाशुद्धिमुत्पादयन्ति रोमद्वयार्द्रीभावोत्पादनक्षमास्त्वाचमन-निमित्तमित्यर्थः।

याज्ञवल्क्यः—

मुखजा विन्दवो[2] मेध्याः तथाचमनविन्दवः।
श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥

त्यक्त्वा अपनीय।

मनुः—

स्पृशन्ति विन्दवः पादौ य आचामयतः परान्।
भूमिगैस्ते समा ज्ञेया न तैरप्रयतो भवेत् ॥

अङ्गिरसौ—

मधुपर्के च सोमे च अप्सु प्राणाहुतिषु च।
नोच्छिष्टस्तु भवेद्विप्रो यथाऽत्रेर्वचनं तथा ॥

---

१ (ख) तद्भविः। २ (ख) विप्रुषः।

अस्त्विति प्राणाहुतिमात्रपर्य्यप्राप्तापोशानविषयम्। अन्यत्रो-दकपाने—पीतापोऽध्येष्यमाणश्च इत्याचमनविधेः। सोऽप्याचमनार्थ-जलपानं विहाय आचमनविध्यन्यथानुपपत्तेः।

शातातपः—

दन्तलग्ने फले मूले भक्ष्ये स्नेहे तथैव च।

ताम्बूले चेक्षुखण्डे च नोच्छिष्टो हि भवेद्द्विजः॥

फले कटुकषाये जातीफलादौ समाचारात् भक्ष्ये फलमूला-तिरिक्ते कटुकषाये।

तथाचमनानुवृत्तौ लघुहारीतः—

कषायकटु ताम्बूलं भुक्त्वा स्नेहानुलेपनम्। इति।

वशिष्ठः—

प्रचरन्नभ्यवहार्य्येषूच्छिष्टं यदि संस्पृशेत्।

भूमौ निक्षिप्य तद्द्रव्यमाचम्य प्रचरेत् पुनः॥

उच्छिष्टशब्देनाचमनार्होच्छिष्टविवक्षणं स्नानार्होच्छिष्टे केवला-चमनविध्यनुपपत्तेः।

शङ्खलिखितौ—

द्रव्यहस्त उच्छिष्टं स्पृष्ट्वा निधायाभ्युक्ष्य द्रव्यम्।

एतच्चाभ्यवहार्य्यविषयम्।

मनुः—

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन।

अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात्॥

एतदभ्यवहार्य्येतरविषयमिति विश्वरूप-भर्त्तृयज्ञौ।

तथाच बृहस्पतिः—

प्रचरंश्चान्नपानेषु यदोच्छिष्टमुपस्पृशेत्।
भूमौ निधाय तद्द्रव्यमाचम्य प्रचरेत् पुनः॥
अवगाह्यमुदके रात्रौ चौरव्याघ्राकुले पथि।
कृत्वा मूत्रपुरीषं वा द्रव्यहस्तो न दुष्यति॥
शौचं कुर्य्यात् प्रथमतः पादौ प्रक्षालयेत्ततः।
उपस्पृश्य तदभ्युक्ष्य गृहीतं शुचितामियात्॥

द्रव्यहस्तो गृहीतद्रव्यः। द्रव्यपदमत्रामङ्कुचितमरममध्वा[१]दि ग्राहकम्।

तथाच लघ्वापस्तम्बः—

कृत्वा मूत्रं पुरीषन्तु द्रव्यहस्तः कथञ्चन।
भूमावन्नं प्रतिष्ठाप्य कृत्वा स्नानं यथाविधि॥
तत्संयोगाच्च पक्वान्नमुपस्पृश्य ततः शुचिः।

वायुपुराणे—

प्रक्षाल्य पादौ निःक्षिप्य आचम्याभ्युक्षणं पुनः।
पुष्पादीनां तृणादीनां प्रोक्षणं हविषान्तथा॥

निःक्षिप्य द्रव्यं भूमौ निधाय।

बौधायनः—

तैजसं चेदादायोच्छिष्टी स्यात्तदुदस्याचम्याद्भिः प्रोक्षेत्। स चेदन्नेनोच्छिष्टी स्यात्तदुदस्याचम्याद्भिः प्रोक्षेत्। अथ चेदद्भिरुच्छिष्टी स्यात्तदुदस्याचम्यादास्यनद्भिः प्रोक्षेत्।

१ (ख) अन्नादिग्राहकम्।

एतदेव विपरीतमन्याधानस्येति विकल्पः ।

अन्नेनोच्छिष्टो स्यादन्नेनोच्छिष्टेन स्पृष्टः, अद्भिराचमनजल-पानादौ एतदेवानपेक्ष्य चाच वैपरीत्यम् । उदस्य त्यक्त्वा चाचामेत् न पुनस्तत्कुर्यादित्यर्थः ।

इति गृहस्थरत्नाकरे आचमनापवादतरङ्गः ॥

---

## अथ दन्तधावनम् ।

तत्र याज्ञवल्क्यः—

शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः ।
प्रातःसन्ध्यामुपासीत दन्तधावनपूर्व्वकम् ॥
उषःकाले तु सम्प्राप्ते शौचं कृत्वा यथार्थवत् ।
ततः स्नानं प्रकुर्व्वीत दन्तधावनपूर्व्वकम् ॥

उषःकालो धर्म्माद्यर्थचिन्तनावरुद्धातिरिक्त-ब्राह्ममुहूर्त्तभागः, सन्ध्यातः पूर्व्वं प्राचीप्रकाशवानिति पारिजातः । यथार्थवत् यथाविहितशौचोपपादकमृज्जलादिसंख्यावत् इत्यर्थः । दन्तधावनं दन्तमलापकर्षणम् ।

वृद्धशातातपः—

मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः ।
तस्मात् सर्व्वप्रयत्नेन भक्षयेद्दन्तधावनम् ॥

अप्रयतः अशुचिः। भक्षयेदिति दन्तधावनस्याशौचः प्रयोगः। पूर्व्वोक्तराचमनानुकल्प[1]-भक्षणधर्म्मप्राप्तेः।

एतच्च शङ्खशातातपवचनात् स्वतन्त्रमेव दन्तधावनं शुद्धि-कारणं न तु स्नानाङ्गम्।

दन्तान् प्रक्षाल्य स्नायादिति छन्दोगपरिशिष्टे एककालार्थः संयोग इति ज्ञेयः।

यमः—

आम्रपेलालविल्वानामपामार्गशिरीषयोः।

भक्षयेत् प्रातरुत्थाय वाग्यतो दन्तधावनम्॥

पेलालः आम्रातकः।

हारीतः—

काले पलाश-कोविदार-श्लेष्मातक-विल्वक-शाकवृक्ष-निशुण्ठी-शिखण्डि-वेणुवर्ज्जम्। प्लक्ष-माषक-बदरी-करञ्ज-शमी-शिंशपा इत्येके। दधित्य हरीतक्यश्वकर्णशालनिम्बामलकानित्यपरे। विल्व-खदिराम्र-पेलाल-शिरीषापामार्गाणामेकतममनार्द्रं नाति-शुष्कं नातिस्थूलमपोथिताग्रमनीरग्रन्थिमुदङ्मुखो वाग्यत आसीनो दन्तधावनं भक्षेत।

काले उषःकाले। कोविदारः केओआर इति प्रसिद्धः। श्लेष्मातको बहुवार इति प्रसिद्धः। विल्वकस्त्रिक इति प्रसिद्धः। शाकवृक्षः सगमन इति प्रसिद्धः। निशुण्ठी सिन्धुवारः। शिखण्डी मयूरशिखा, शिखण्डिसंज्ञकः कण्टकिगुल्म इत्यपरे।

१ (ख)—चमनात्मक।

वेणुनिषेधस्त्वगितरपरः। नरसिंहपुराणे— तिन्तिड़ी वेणुपृष्ठ-श्चेत्यभिधानात्।

दधित्थः कपित्थः शालः शर्ज्जवृक्षः। एके अपरे इत्युभयत्रापि त्यक्तेति शेषः।

अनार्द्रमिंशामश्यच्छिन्नं नातिशुष्कमित्युक्तेः प्रक्षालनस्य विहितत्वात् आर्द्रस्यावश्यकत्वात्। अपोथिताग्रमीषच्चूर्णिताग्रं अनोष्ठग्रन्थिर्यस्य ग्रन्थिना ओष्ठं न स्पृशति तत्।

विष्णुः— अथ न पालाशं दन्तधावनं स्यात् न श्लेष्मा-तकारिष्टविभीतक धव धन्वनजम्। न कोविदार शमी पीलु[१] पिप्पलीङ्गुद गुग्गुलुजम्। न कर्व्वुर निर्गुण्ठी-तिल्वक[२]-तिन्दुकजम्। न शिग्रू पारिभद्राम्लिकामोचका शाल्मलीशणजम्। न मधुरं नाम्लं नोर्द्धशुष्कं न शुषीरं न पूतिगन्धि। न पिच्छिलं न दक्षिणापराशाभिमुखो ऽश्यात्। उदङ्मुखः प्राङ्मुखो वा वटासनार्क खदिर करञ्ज वदर सर्ज्ज निम्बारिमेदाऽपामार्ग मालती ककुभ विल्वानामन्यतमं कषायं कटुतिक्तं वा।

कनिष्ठाग्रसमस्थौल्यं सकूर्चं द्वादशाङ्गुलम्।
प्रातर्भुक्त्वा च यतवाक् भक्षयेद्दन्तधावनम्॥

अरिष्टं हरिठा इति लोके प्रसिद्धः। निम्ब इति पारिजातः। धन्वनो धामनिरिति प्रसिद्धः। पीलुः गुड़फलः यस्य पिलुरिति पश्चिमदेशे प्रसिद्धः। इङ्गुद उम्नजमिति प्रसिद्धः। कण्टकवृक्ष इति पारिजातः। इङ्गुशाक इति पश्चिमदेशे प्रसिद्धः।

१ (क) पुस्तके विल्व। २ (ख) तिल्वक—।

इङ्गुदः कण्टकिवृक्ष इति कल्पतरुः। शिग्रूः शोभाञ्जनः। पारिभद्रः हरहर इति प्रसिद्धः। मोचका कदली, अम्लिका तिन्तिड़ी। ऊर्द्ध्वशुष्कं वृक्ष एव शुष्कं, शुषिरं छिद्रवत्। अपराशा दक्षिणाशा तत्र वा परा पश्चिमेति यावत्। असन आमन इति प्रसिद्धः। सर्ज्जः सालः। अरिमेदो निम्बः, विट्‌खदिर इति पारिजातः। मालती जाती, ककुभोऽर्ज्जुनः। कषायं कटुतिक्तं वा अविहितानिषिद्धमन्यदपि ग्राह्यम्।

सकूर्चं चूर्णिताग्रं प्रातर्भुक्त्वेत्यनेन प्रातःकाले भोजनानन्तर-काले च दन्तधावनमुक्तं भुक्तेति यतिविषयमिति स्मृतिरत्न-विवेकः।

श्रीमहाभारते—

प्रक्षाल्य हस्तौ पादौ च मुखञ्च सुसमाहितः।
दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरा ततः॥
तिक्तं कषायकटुकं सुगन्धि कण्टकान्वितम्।
क्षीरिणं वृक्षगुल्माद्यं भक्षयेद्दन्तधावनम्॥
प्रक्षाल्य भुक्त्वा जह्याच्च शुचौ देशे प्रयत्नतः।
पतितेऽभिमुखे सम्यग्भोज्यमाप्नोत्यसंशयम्॥

दक्षिणं बाहुमुद्धृत्य उपवीतं कृत्वेति शेषः। गुल्माद्या मल्लिकादयः।

छन्दोगपरिशिष्टे कात्यायनः—

नारदाद्युक्तवार्क्षयमष्टाङ्गुलमपाठितम्।
सत्वचं दन्तकाष्ठं स्यात् तदग्रेण प्रधावयेत्॥

उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः।
प्रतिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम्॥

मन्त्रो यथा—

आयुर्बलं यशो वर्च्चः प्रजाः पशुवसूनि च।
ब्रह्म प्रज्ञाञ्च मेधाञ्च त्वन्नो धेहि वनस्पते॥

नारदाद्युक्तवार्क्षेयं नारदादिभिर्ये दन्तधावने विहिता वृक्षास्तत्सम्भवम्। परिजप्य च मन्त्रेण आयुर्बलमित्याद्यभिमन्त्र्य दन्तधावनं भक्षयेदित्यर्थः।

यमः—

आसनं शयनं यानं पादुके दन्तधावनम्।
वर्ज्जयेत् भूतिकामस्तु पालाशानित्यमात्मवान्॥

न पालाशे पादुके पादपीठे आसनं शयनं यानं दन्तधावनं वा न कुर्य्यात्। यानं शकटादि।

उशनाः—

नाङ्गुलीभिर्दन्तान् प्रक्षालयेत्।

अकरणे दोषमुक्त्वा नरसिंहपुराणे—

तथा शुष्कमथार्द्रं वा भक्षयेद्दन्तधावनम्।
खदिरस्य कदम्बस्य करञ्जस्य वटस्तथा।
तिन्तिड़ी वेणुपृष्ठञ्च आम्र-निम्बौ तथैव च॥
अपामार्गस्य विल्वस्य अर्कस्योडुम्बरस्तथा।
एते प्रशस्ताः कथिता दन्तधावनकर्म्मणि॥
दन्तकाष्ठस्य वक्ष्यामि समासेन प्रशस्तताम्।

सर्व्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः ॥

अष्टाङ्गुलेन मानेन तत्प्रमाणमिहोच्यते।

प्रादेशमात्रमथवा तेन दन्तान् विशोधयेत् ॥

प्रतिपद्दर्शषष्ठीषु नवम्याञ्चैवं सत्तमाः।

दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥

अलाभे दन्तकाष्ठानां प्रतिषिद्धदिने तथा।

अपां द्वादशगण्डूषैर्मुखशुद्धिर्विधीयते ॥

वेणुपृष्ठं वंशस्य त्वग्भागः। शुष्कमथार्द्रं वेति विधानात् नोर्द्ध्वशुष्कमिति विष्णुवचनाच्च शुष्कनिषेध ऊर्द्ध्वशुष्कविषय इति बोद्धव्यम्।

महाभारते—

वर्ज्जयेद्दन्तकाष्ठानि वर्ज्जनीयानि नित्यशः।

भक्षयेच्छास्त्रदृष्टानि पर्व्वस्वपि च वर्ज्जयेत् ॥

पर्व्वस्वपीति पर्व्वाणि च—

चतुर्द्दश्यष्टमी चैव अमावस्याऽथ पूर्णिमा।

पर्व्वाण्येतानि राजेन्द्र! रविसंक्रान्तिरेव च ।

इति विष्णुपुराणोक्तानि।

तथा—

नाद्यात् सपर्व्वमज्ञातमूर्द्ध्वशुष्कञ्च पाटितम्।

त्वग्विहीनं ग्रन्थियुतं तथा पालाशशांशपम् ॥

ऋजु वितस्तिमात्रं वा कीटाग्निभिरदूषितम्।

प्राङ्मुखस्योपविष्टस्य भक्षयेद्दाग्यतो नरः ॥

शांशपं शिंशपावृक्षोद्भवम्। अत्र शुद्धिहेतौ दन्तधावने काष्ठविशेषनियमविधिना अर्थात् निषेधोऽपि काष्ठान्तरे। यदेतत् विशेषकाष्ठान्तरे पुनर्निषेधः, तत्र चरुविधिना वाधितेष्वपि माषादिषु "अयज्ञिया वै माषाः" इति निषेध एवं मुख्याभावे प्रतिनिधित्वेनापि तदुपादाननिरासाय।

यत् विहितप्रतिषिद्धं तस्य प्रतिषेधसम्बन्धेन केवलविहितापेक्षया किञ्चिन्न्यूनत्वात् केवलविहितालाभे उपादानम्। तस्याप्यभावे अविहिताप्रतिषिद्धमुपादेयं केवलनिषिद्धन्तु सर्व्वथा नोपादेयं द्वादशगण्डूषैरेव मुखशुद्धिरापादनीयेति।

हारीतः—

दन्तधावनं भक्षयेदविरक्तं सोदकमेकान्तमुत्सृज्य स्नातो वाग्यतः शुचिरहतशुक्लवासा अग्निहोत्रादि-देवतार्थान् कुर्य्यात्।

अविरक्तं सरसं सोदकं प्रक्षालितम्। अग्निहोत्रादि-देवतार्थान् अग्निहोत्रादीन् देवतार्थान् पूजादीनि।

इति गृहस्थरत्नाकरे दन्तधावनतरङ्गः॥

## अथ प्रातःस्नानादि ॥

तच्च छन्दोगपरिशिष्टे कात्यायनः—

यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः ।
दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत् ॥

यथाहनीति यथेतिकर्त्तव्यतया मृदालम्भाद्यात्मिकया ऽहनि मध्याह्ने स्नायात् तथा प्रातस्तथैव प्रातरपि स्नायादित्यर्थः। एतच्च निरग्निविषयं साग्नेरपि तथात्वे काललोपेन होमलोपापत्तेः अनातुरः स्नानसम्बर्द्धनीयरोगशून्यः ।

लक्ष्मीधरस्तु—

अनातुर इत्यभिधानादातुरः स्नाननिमित्ताप्रायत्यराहित्यात् मन्त्रार्ज्जनादिना शौचमुत्पाद्य सन्ध्यां कुर्य्यात् । दन्तधावनमधिकमित्याह गेहे चेदिति ।

ततः प्रातःस्नानं केनापि निमित्तेन गेहे चेत् क्रियते अमन्त्रवत् स्नानाङ्गमन्त्रशून्यं कुर्य्यात् ।

तथा—

अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्म्मणः ।
[1]प्रातर्न तनुयात् स्नानं होमलोपो विगर्हितः ॥

एतत् साग्निमधिकृत्य न तनुयात् संक्षिप्य कुर्य्यादित्यर्थः ॥

संक्षेपोऽपि याज्ञवल्क्याद्युक्तः । तीर्थपरिकल्पनजलाभिमन्त्रणाचमनमार्ज्जनस्नानाद्यन्तर्जलस्नानाद्यघमर्षणसूक्तेन त्रिरावृत्तेनेत्येवं रूपः पद्मपुराणीयादिर्वा ।

---

१ (क) प्रातः संक्षेपतः स्नानं ।०

दक्षः—

अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवत्येष दिवारात्रौ प्रातःस्नानं विशोधनम् ॥
क्लिद्यन्ति हि प्रसुप्तस्य इन्द्रियाणि स्रवन्ति च ।
अङ्गानि समतां यान्ति उत्तमान्यधमैः सह ॥

तथा—

अस्नात्वा नाचरेत् कर्म्म जपहोमादि किञ्चन ।
लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान् ॥
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत् ।
सर्व्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम् ॥

समतां यान्ति उत्तमाङ्गान्यपि नेत्रादीनि क्लेदसम्बन्धादधमाङ्गसमानि भवन्तीत्यर्थः । अस्नात्वा नाचरेदित्यत्र लालास्वेदसमाकीर्ण इति हेतुर्विशेषणेनोक्तः । यत इति शेषः ।

दृष्टादृष्टकरं दृष्टं शौचात्मकं कर्म्माधिकारजनकं मलापनयनादिना शुद्धिरिति लक्ष्मीधरः । अदृष्टं प्रत्यवायपरीहारः । नित्यस्नानजपादिद्वारा परलोकशुद्धिरिति पारिजातः ।

विष्णुः—

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्म्मणि ।
पवित्राणां तथा जप्ये दाने च विधिचोदिते ॥
अलक्ष्मीः कालकर्णी च दुःस्वप्नो दुर्व्विचिन्तितम्[१] ।
स्नानेनाभिषिक्तस्य नश्यन्त इति धारणा ॥

१ (ख) दुर्व्विचिन्तितं ।

याम्यं हि यातनादुःखं प्रातःस्नायी न पश्यति।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो जनाः॥

कालकर्णी दुःसहस्य रक्षसो दुहिता। दुर्विचिन्तितम् अनिष्ट-चिन्तितं अनिष्टचिन्तनं मन्त्रार्थेण उद्धृतेनानुद्धृतेन वेत्यर्थः। मन्त्रं विनापीति पारिजातः। धारणा निर्द्धारणं निश्चय इति यावत्। याम्यं यमभवमिति।

तथा—

य इच्छेद्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपमान्।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ॥

यमः—

प्रातःस्नायी च सततं द्वौ मासौ माघफाल्गुनौ।
देवान् पितॄन् समभ्यर्च्य सर्व्वपापैः प्रमुच्यते॥

एतच्च वाक्यद्वयमस्माभिः श्रीकृत्यरत्नाकरे विहितव्याख्यान-मिति तदेव च ज्ञेयम्। प्रातःशब्दश्चात्र उदयकालप्राक्काल-वचनः। प्रातःस्नाय्यरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायादिति विष्णुवाक्यात्[1]। अत्र सन्ध्यायां स्नाननिषेधात् सन्ध्यातिरिक्तः कालो विवक्षितः इति प्रकाशकारः।

तदुक्तं दक्षेण—

प्रातःस्नानस्य सन्ध्यास्नानत्वेनैवाभिधानात् रात्रित्वेनान्यत्रापि निषेधसाम्यात्तस्मादरुणोदयप्रस्तामित्यसङ्कुचितमेव नेयम्।

यच्च— प्रातःकालो मुहूर्त्तांस्त्रीनित्युक्तं तच्छ्राद्धविषयम्।

१ (ख) विष्णुवाक्ये तस्यैव लब्धत्वात्।

दक्षः—

सन्ध्यास्नानं निशान्ते तु मध्याह्ने च ततः पुनः।
[1]उपास्ते यस्तु नो सन्ध्यां ब्राह्मणो हि विशेषतः॥
स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते।
सन्ध्याकर्म्मावसाने तु स्वयं होमो विधीयते॥
स्वयं होमे फलं यत्स्यात्तदन्येन न जायते।
ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः॥
एतैरेव हुतं यच्च तद्धुतं स्वयमेव हि।

गुरुः पित्रादिः, विट्पतिर्जामाता। प्रतिनिधयश्चैते।

याज्ञवल्क्यः—

हुत्वाऽग्नीन् सूर्य्यदैवत्यान् जपेन्मन्त्रान् समाहितः।

अग्नीनाहवनीयान् सूर्य्यदैवत्यान् उदुत्यं जातवेदसमित्यादीन् समाहितस्तन्मनाः।

नरसिंहपुराणे—

पूर्व्वां सन्ध्यां सनक्षत्रामुपक्रम्य यथाविधि।
गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनम्॥
ततश्चावसथं प्राप्य होमं कुर्य्याद्विचक्षणः।
देवकार्य्यं ततः कृत्वा गुरुमङ्गलवीक्षणम्॥
देवकार्य्यस्य सर्व्वस्य पूर्व्वाह्णस्तु विधीयते।
देवकार्य्यन्तु पूर्व्वाह्णे मनुष्याणान्तु मध्यमे॥

---

१। (ग) यो न सन्ध्यामुपासीत।

पितॄणामपराह्णे तु कार्य्याण्येतानि यत्नतः।
दिवसस्याद्यभागे तु सर्व्वमेतत् समाचरेत्॥

मङ्गलं ब्राह्मणादिवीक्षणं सादरेण।

वराहपुराणे—

उदयाद्रिःस्थितं सूर्य्यं यस्तु भक्त्या नरो द्विजः।
दध्यक्षताञ्जलिभिस्तं तिसृभिः पूजयेच्छुचिः॥
तस्य भावप्रपन्नस्य अशुभं यत् समर्ज्जितम्।
तत्क्षणादेव निर्दग्धं भस्मीभवति काष्ठवत्॥

भावप्रपन्नस्य भक्त्या शरणं गतस्य।

ब्रह्मपुराणे—

स्वमात्मानं घृते पश्येद्दीर्घ्घेच्चिरजीवितम्।

स्वमात्मानं स्वकीयं शरीरम्।

विष्णुपुराणे—

आचान्तश्च पुमान् कुर्य्यात् ततः केशप्रसाधनम्।
आदर्शाञ्जनमङ्गल्यदूर्व्वाद्यालभनानि च॥

अञ्जनं सौवीराञ्जनादि चक्षुष्यं दूर्व्वादीत्यादिशब्देन दध्यादि-ग्रहणम्।

मनुः—

मैचं प्रसाधनं स्नानं दन्तधावनमञ्जनम्।
पूर्व्वाह्ण एव कुर्व्वीत देवतानाञ्च पूजनम्॥

मैचं पुरीषोत्सर्गः प्रसाधनं केशरचनानुलेपनादि।

द्वितीये च तथा भागे वेदाभ्यासो विधीयते।

वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं ज(य:)पः ॥
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ।
समित्-पुष्पकुशादीनां स कालः समुदाहृतः ॥

उपादानमित्यध्याहार्य्यं । स्वीकरणमित्यध्ययनं । एतच्च ब्रह्मचारिविषयं गृहस्थस्यापि अनधीतवेदादिभागे ।

तदुक्तं याज्ञवल्क्येन—

वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ।
बुद्धिवृद्धिकराण्याशु धान्यानि[1] च हितानि च ॥
नित्यं शास्त्राणि वीक्षेत निगमांश्चैव वैदिकान् ।
यथा यथा हि पुरुषः शास्त्रं समधिगच्छति ॥
तथा तथा विजानाति विज्ञानञ्चास्य रोचते ।

बुद्धिवृद्धिकराणि तर्कमीमांसादीनि, धान्यानि धनाय हितान्यर्थशास्त्राणि हितान्यायुर्वेदादीनि निगमाः पदार्थनिर्णायक निघण्टादयः, रोचते दीप्तं भवति ।

यमः—

दानेन तपसा यज्ञैरुपवासव्रतैस्तथा ।
न तां गतिमवाप्नोति विद्यया यामवाप्नुयात् ॥

दक्षः—

तृतीये च तथा भागे पोष्यवर्गार्थ[2]साधनम् ।

अर्थसाधनं धनोपादानं कुर्य्यादिति शेषः ।

१ (ख) धनानि विहितानि च ।
२ (ख) वर्गार्थे— ।

पोष्यवर्गः—

माता पिता गुरुर्भार्य्या प्रजा दीनाः समाश्रिताः।
अभ्यागतोऽतिथिश्चापि पोष्यवर्ग उदाहृतः॥
ज्ञातिर्बन्धुजनः क्षीणस्तथाऽनाथः समाश्रितः।
अन्योऽपि धनयुक्तस्य पोष्यवर्ग उदाहृतः॥
भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम्।
नरकं पीड़नाच्चास्मात् तस्माद्यत्नेन तं भरेत्॥

अभ्यागतोऽसम्बन्धी, अतिथिः ग्रामान्तरादागतः। ज्ञातिश्च पितृबन्धुः मातृबन्धुरपि। अनाथः पित्रादिपोषकशून्यः।

गौतमः—

योगक्षेमार्थमीश्वरमधिगच्छेत्। नान्यमन्यत्र देवगुरुधार्म्मिकेभ्यः।

योगो लाभः, क्षेमो लब्धस्य रक्षणमन्यमीश्वरात्।

मनुः—

दैवतान्यभिगच्छेत धार्म्मिकांश्च द्विजोत्तमान्।
ईश्वरञ्चैव रक्षार्थं गुरूणेव च पर्व्वसु॥
अभिवादयेत्तु तान् वृद्धान् दद्याच्चैवासनं स्वकम्।
कृताञ्जलिरुपासीत गच्छतः पृष्ठतोऽन्वियात्॥

अभिगच्छेत आभिमुख्येन सत्कारार्थं गच्छेत्। गुरूणेवेत्येवकारोऽभिगच्छेदित्यनन्तरं द्रष्टव्यम्।

छागलेयो यमश्च—

यतीनां दर्शनञ्चैव स्पर्शनं भाषणन्तथा।
कुर्व्वाणः प्रयतो नित्यं तस्मात् पश्येच्च नित्यशः॥

पश्येच्चेति चकारः समुच्चये । स्पर्शनभाषणविधिं समुच्चिनोति न स्पृशेत् भाषेदित्यपि लभ्यते । पश्येदित्यनेन स्पर्शनभाषणेऽप्युपादीयेते अजहत्स्वार्थलक्षणयेति लक्ष्मीधरस्तन्न अन्यथैव तत्प्राप्तेर्लक्षणाया अनौचित्यात् ।

अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात् पश्येच्च नित्यशः ॥

अग्निचित् कृताग्निचयनः । कपिला कपिलवर्णा गौः । सत्री कृतसत्रयागः— अर्थात् सत्रयाजी इति पारिजातः । भिक्षुरिह चतुर्थाश्रमी ।

वराहपुराणे—

वामनं ब्राह्मणं दृष्ट्वा वराहञ्च जलोत्थितम् ।
नमस्येत्तेव यो भक्त्या स पापेभ्यः प्रमुच्यते ॥
यज्वा मिष्टान्नदः सत्री शतायुर्धार्म्मिकः शुचिः ।
ज्ञाननिष्ठान् तपःविद्वान् दृष्ट्वा पापात् प्रमुच्यते ॥

शुचिस्तीर्थसेवादिपूतः । ज्ञाननिष्ठो मोक्षानुकूलतत्त्वज्ञानरसिकः ॥

नारदः—

लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः ॥
एतान् यः सततं पश्येन्नमस्येदर्च्चयेच्च यः ।
प्रदक्षिणञ्च कुर्व्वीत तथाऽस्यायुर्न हीयते ॥

एतानि ब्राह्मणादीनां मङ्गलानां दर्शन-नमस्कारार्च्चनप्रदक्षि-

करणानि समुदितान्यायुःकामस्य तृतीयभाग एव कर्त्तव्यत्वेन विहितानि। दिवसस्याद्यभागे मङ्गलाद्यालम्भनं करणीयमिति-लक्ष्मीधरः।

वामनपुराणे—

स्नात्वा शिरःस्नानमथाङ्गिकानि
सम्पूज्य तोयेन [1]पितृंश्च देवान्।
होमञ्च कृत्वालभनं शुभानां
ततो बहिर्निर्गमनं प्रशस्तम्॥
दूर्व्वां दधिं सर्पिरथोदकुम्भं
धेनुं सवत्सां वृषभं सुवर्णम्।
मृद्गोमयं स्वस्तिकमक्षतानि
लाजान् मधु ब्राह्मणकन्यकाश्च॥
श्वेतानि पुष्पाणि तथा शमीञ्च
हुताशनं चन्दनमर्कबिम्बम्।
अश्वत्थवृक्षञ्च समालभेत
ततश्च कुर्य्यान्निजजातिधर्मान्॥
देशानुशिष्टं कुलधर्ममग्र्यं
सगोत्रधर्मं न हि सन्त्यजेच्च॥

सम्पूज्य तोयेनेत्यनेन प्रातःस्नाने देवपितृतर्पणं कार्य्य-मित्युक्तम्। आलभनं शुभानां वक्ष्यमाणदूर्व्वादीनां स्वस्तिको गृहविशेषः। अर्कबिम्बाद्यालभनन्तु वीक्षणपर्य्यवसन्नम्।

१ (ख) पितॄन् समादरात्।

अत्र शिरःस्नानाद्यशेषं यथाकालप्राप्तमनूद्य तत् कुर्य्यादिति। निजजातिधर्म्मादि तृतीयभागे विधीयते निजजातिधर्म्मः स्वजाति-विहितार्ज्जनादिरूपः। तत्रापि यस्मिन् देशे यस्यां जातौ यस्मिन् कुले योऽर्ज्जनोपायो विहितोऽनिन्दितः स एव तेन करणीय इत्यर्थः।

दक्षः—

चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत्।
तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले॥

आदिपदेन गोमयदूर्व्वाद्युपादाय स्नानं कुर्य्यादिति शेषः। अकृत्रिमे जले नद्यादौ।

शातातपः—

वल्मीकाखूत्करान्नेपाज्जलाच्च पथि वृक्षयोः।
कृतशौचावशिष्टाश्च न ग्राह्याः सप्त मृत्तिकाः।

आखूत्करो मूषिकोत्क्षिप्तमृत्तिका लेपः कुशादीनां जला-न्तस्थमध्यात्। पथि वृक्षयोः सम्बन्धिनीति शेषः।

शुचौ देशे च संग्राह्याः शर्कराश्मादिवर्ज्जिताः।
रक्ता गौरी तथा श्वेता मृत्तिकास्त्रिविधाः स्मृताः॥

शुचौ देशे स्थिता इति शेषः। शर्कराश्मादीत्यादिशब्देन केशकीटादिपरिग्रहणं रक्तेत्यादिनियमात् मृद्भारस्य स्नाने नाङ्गत्वमिति विवक्षितम्।

न मृदं नोदकं वापि न निशायाञ्च गोमयम्।
न गोमूत्रं प्रदोषे तु शौचार्थाद्बुद्धिमानरः॥

निशायामिति स्नुदादिभिः सम्बध्यते। निषेधश्चायमदृष्टार्थे कर्म्मणि एवं प्रदोषे गोमूत्रनिषेधोऽपि।

मनुः—

न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि।
न वासोभिः सहाऽजस्रं नाविज्ञाते जलाशये॥

न स्नानमाचरेद्भुक्त्वेति रागप्राप्तस्नाननिषेधो नित्यस्याप्राप्तत्वात्। नैमित्तिकस्य च निषेद्धुमशक्यत्वात्।

नैमित्तिकानि काम्यानि निपतन्ति यदा यदा।
तदा तदैव कार्य्याणि न कालस्तु विधीयते॥

इति वचनात्॥

आतुरस्य सर्व्वदा वारुणस्नाननिषेधः। महानिशा निशाया मध्यप्रहरद्वयम्।

महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम्।
तस्यां स्नानं न कर्त्तव्यं काम्यनैमित्तिकादृते॥

इति देवलवचनात्।

अजस्रमनवरतं अज्ञाताशयादिना प्राप्तं अविज्ञाते सुगमतया अनिन्दितकर्त्तृकतया च।

जावालः—

न पारक्ये सदा स्नायात् न भुक्त्वा न महानिशि।
नार्द्रमेकञ्च वसनं परिदध्यात् कदाचन॥

पारक्ये परकीयवाप्यादौ। एतच्चाहनिमासम्भवे कदाचनेति वचनात्। एकं वसनमार्द्रञ्च निषिद्धम्।

एवञ्च पुरुषस्य सदा वस्त्रद्वयधारणविधानात् स्नानकालेऽपि तत् परित्यागो निष्प्रमाणकः ।

तथाः—

त्रयोदश्यां तृतीयायां दशम्याञ्च विशेषतः ।

शूद्रविट्क्षत्रियाः स्नानं नाचरेयुः कथञ्चन ॥

अयमपि रागप्राप्तस्नाननिषेधः ।

लक्ष्मीधरस्तु—

अम्भोऽवगाहनं स्नानं विहितं सार्व्वकालिकम् ।

इति यत्सामान्येन प्रसक्तं तदनेन त्रयोदश्यादिषु यथाक्रमं शूद्रादीनां प्रतिषिध्यते । इत्याह ।

बौधायनः—

न नग्नः स्नायात् । न नक्तं स्नायात् ।

आपस्तम्बः—

अशिरो मज्जनमप्सु वर्ज्जयेत् । अस्तमिते च स्नानमुदकं प्रविश्य ।

अशिरस्कं रागतो निमज्जनं न कुर्य्यात्, अस्तमिते च स्नानं वर्ज्जयेदित्यर्थः । एतदपि रागप्राप्तस्नानविषयमेव ।

प्रकाशकारस्तु—

अशिरोमज्जनमिति लिखित्वा गात्रप्रक्षालनमात्रं प्रविश्य न कुर्य्यात् इति व्याहृतवान् ।

अत्र चास्तमितमात्रे स्नाननिषेधात् न महानिशीत्यत्र महत्त्वं विशेषदोषभूयस्त्वप्रतिपादनार्थम्[१] ।

१ (ख) पुस्तके दृष्टार्थं वा आधिकः पाठः ।

पराशरः—

दिवाकरकरैः पूतं दिवास्नानं प्रशस्यते ।

अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥

यथा—

स्नानं दानञ्च सूर्य्यस्य ग्रहणे शस्यते दिवा ।

सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते ॥

राहोरन्यत्र दर्शनादित्युपलक्षणम् ।

राहुदर्शन-संक्रान्ति-विवाहात्ययवृद्धिषु ।

स्नानदानादिकं कार्य्यं[1] निशि काम्यव्रतेषु च ॥

इति कृत्यसारदर्शनात् ।

वामनपुराणे—

स्नायात् शिरःस्नानतया न नित्यं

नाकारणाच्चैव सदा निशासु ।

ग्रहोपरागेषु जलाधिपातं

त्यक्त्वा स्वजन्मर्चगतं शशाङ्कम् ॥

योगियाज्ञवल्क्यः—

उभे सन्ध्ये तु स्नातव्यं ब्राह्मणैस्तु गृहाश्रितैः ।

त्रिसृष्वपि च सन्ध्यासु स्नातव्यं च तपस्विभिः ॥

तपस्वी वानप्रस्थादिः ।

शङ्खलिखितौ—

अनग्नन् अनग्नः स्नायात् नावमेहेत नोद्वर्षनं कुर्य्यात् न

१ (क) कुर्य्युः ।

पादेन पाणिना वा जलमतिहन्यात् यस्मादापो वै सर्व्वदेवताः । न स्रवन्तीं वृथातिक्रामेत् अनवसिच्य अमेध्योदकं परिहरेत् अल्पोदके न स्नायात् न समुद्रोदकमवगाहेत ॥

अनश्नन् भक्षणमकुर्व्वाणः । अनग्नः सवासाः । मेहनं मूत्र-परित्यागः । उद्वर्त्तनमङ्गमलापकर्षणमप्सु न कुर्य्यादित्यन्वयः ।

अतिक्रमेत् लङ्घयेत् । वृथा निष्प्रयोजनं । अनवसिच्य तर्पणमकृत्वा अमेध्यमशुचिं परिहरेत न तत्र किञ्चित् कुर्य्यात् । अल्पोदके न स्नायात् इति प्रभूतमनोहरोदकसम्भवे ।

तथा योगियाज्ञवल्क्यः—

प्रभूते विद्यमाने तु उदके सुमनोहरे ।
नाल्पोदके द्विजः स्नायात् नदीञ्चोत्सृज्य कृत्रिमे ॥

नदीग्रहणमकृत्रिमोपलक्षणं नावगाहेत अन्तःप्रविश्य न स्नायात् ।

देवलः -

न नदीषु नदीं ब्रूयात् न पर्व्वतेषु च पर्व्वतम् ।
नान्यत् प्रशंसेत्तत्रस्थस्तीर्थेष्वायतनेषु च ॥

हारीतः—

न चत्वरोपद्वारयोः स्नायात् ।

चत्वरमिह यज्ञादिबलिस्थानम् । उपद्वारं द्वारसमीपम् ।

हारीतः—

न स्नानवर्णकयोरग्र्यं प्रयच्छेत । अन्यत्र देवगुरुब्राह्मणेभ्यः । स्नात्यनेनेति स्नानं कुङ्कुमादि वर्णकं वर्णकरत्वात् सुगन्धिद्रव्य-

मुद्वर्त्तनादि तेन स्नानकरणीभूतकुम्भादेरेतत्करणसुगन्धिद्रव्यस्यापं न दद्यादित्यर्थः।

*योगियाज्ञवल्क्यः—*

पादेन पाणिना वापि यष्ट्या वस्त्रेण चोदकम्।
न हन्यान्न च बाधेत न[1] च प्रक्षोभयेद्बुधः॥

प्रक्षोभणमिहात्यन्तमलिनीकरणम्।

विष्णुः—

परनिपानेषु न स्नानमाचरेत् आचरेद्वा पञ्चपिण्डानुद्धृत्यापदि नाजीर्णो नातुरो न नग्नो राजदर्शनवर्ज्जं न रात्रौ न सन्ध्यायाम्।

प्रातःस्नायी अरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायात्। आपदि अकृत्रिमजलाशये स्नानासम्भवे। सन्ध्यायां प्रातः-सन्ध्यायाम्।

---

## अथ स्नानविधिः।

पठीनसिः—

परकृतान् सेतून् कूपांश्च वर्ज्जयेत्। अंशभाक् तत्र सेतुकृत्। त्रीन् पिण्डानुद्धृत्य स्नायात्॥

मनुः—

परकीयनिपानेषु स्नायाच्चैव कदाचन।

[1] (ख) नापवदेत्

निपानकर्त्तुः स्नात्वा हि दुष्कृतांशेन लिप्यते ॥

परकीयं परकृतमात्रं तच्च प्रतिष्ठितञ्चाप्रतिष्ठितञ्च अविशेषेण परकृतानिति पैठीनसिबौधायनवचनानुसारात्। स्वकारिते तु न विरोधः। निपानं जलाधारः।

बौधायनः—

तपस्यमवगाहनं देवतास्तर्पयित्वा

पितृतर्पणमनुतीर्थमप आसिञ्चत्यूर्ज्जंवहन्तीरिति।

अत्राप्युदाहरन्ति।

स्रवन्तीष्वनिरुद्धासु त्रयो वर्णा द्विजातयः।

प्रातरुत्थाय कुर्व्वीरन् देवर्षिपितृतर्पणम् ॥

निरुद्धासु न कुर्व्वीरन्नंशभाक् तत्र सेतुकृत्।

तस्मात् परकृतान् सेतून् कूपांश्च परिवर्ज्जयेत् ॥

उद्धृत्य वाऽपि त्रीन् पिण्डान् कुर्य्यादापत्सु नो सदा।

निरुद्धासु तु त्रीन् पिण्डान् कूपात्त्रीनघटांस्तथा ॥

तपसे हितं तपस्यमवगाहनं तपश्चात्र नित्यनैमित्तिककर्म्मानुष्ठानमभिप्रेतं स्नातस्य तत्राधिकारात्।

अनुतीर्थं तीर्थं लक्षीकृत्य देवपित्रादितीर्थेन इत्यर्थः। ऊर्ज्जं वहन्तीरिति तर्पणान्तिमपदार्थोपादानमेतावानेकः प्रयोग इति बोधनार्थं। निरुद्धासु निरुद्धप्रवाहासु।

शङ्खलिखितौ—

नेष्टकाचिते पितॄंस्तर्पयेत वापीतडागोदपानेषु सप्त पञ्च त्रीन् वा पिण्डानुद्धृत्य पितॄंस्तर्पयेत्।

याज्ञवल्क्यः—

पञ्चपिण्डाननुद्धृत्य न स्नायात् परवारिणि।

स्नायान्नदीदेवखातह्रदेषु च सरःसु च॥

पैठीनसि-बौधायनवाक्यानुसारात् स्नानकर्त्ता मृत्पिण्डत्रयोद्धरणं सेतौ कर्त्तव्यं कूपेषु घटत्रयोद्धरणं। पञ्चपिण्डोद्धारस्तु शङ्ख-वाक्यपर्य्यालोचनया वाप्युदपानान्यकृत्रिमजलाशयविषयः। वाप्यान्तु सप्तपिण्डोद्धरणमुदपाने तु पिण्डत्रयोद्धरणम्। मृत्पिण्डश्च तत्र हस्ताभ्यां यावानुद्धर्त्तुं शक्यते तावान्। अत्र च परनिपानं प्रतिष्ठितं विवक्षितं अप्रतिष्ठिते चौर्य्यापत्तेः।

परकीयनिपानेषु अपेयं सलिलं भवेत्।

इति वाक्याच्चेति प्रकाशकारादयः। एवमेव पारिजाते श्रीदत्ताह्निके च। लक्ष्मीधर-हलायुधौ तु सामान्यमेव पुरस्कुरुतः स्म।

मनुः नदीषु देवखातेषु तड़ागेषु सरःसु च।

स्नानं समाचरेन्नित्यं गर्त्त-प्रस्रवणेषु च॥

देवखातेषु तड़ागेषु देवसम्बन्धितया प्रसिद्धेषु, सर इति प्रसिद्धजलाशयः।

गर्त्तः—

धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते।

न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः॥

इत्यादिना वक्ष्यमाणः। स्वल्पगर्त्त इति कल्पतरुः। प्रस्रवणं निर्झरः।

विष्णुपुराणे—

कूपेषूद्धृततोयेन स्नानं कुर्व्वीत वा भुवि ।
स्नायीतोद्धृततोयेन यदि वा भुव्यसम्भवे ॥

कूपसम्बन्धिना उद्धृततोयेन भुवि स्थितः स्नायात् ।

इति प्रथमखण्डार्थः । अन्यत्रापि जलाशये प्रविश्य स्नानासम्भवे तथैव स्नायादिति द्वितीयखण्डार्थः ।

विष्णुः—

स्नायात् प्रस्रवणदेवखातसरोवरेषु । उद्धृतात् भूमिष्ठमुदकं पुण्यं स्थावरात् प्रस्रवत् । तस्मान्नादेयं तस्मादपि साधुपरिगृहीतं सर्व्वत एव गाङ्गम् ।

साधुपरिगृहीतं यथा रामादिपरिगृहीतं मन्दाकिन्यादि चित्रकूटादौ ।

शङ्खः—

सर्व्वतीर्थानि पुण्यानि पापघ्नानि सदा नृणाम् ।
परस्परानपेक्षाणि कथितानि मनीषिभिः ॥
सर्व्वे प्रस्रवणाः पुण्याः सर्व्वे पुण्याः शिलोच्चयाः ।
नद्यः पुण्याः सदा सर्व्वा जाह्नवी तु विशेषतः ॥
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥
नृणां पापकृतां तीर्थे पापस्य शमनं भवेत् ।
यथोक्तफलदं तीर्थं भवेत् शुद्धात्मनां नृणाम् ॥

हस्तसंयमोऽत्र निन्दितप्रतिग्रहनिवृत्तिः । पादसंयमोऽगम्य-

देशागमननिवृत्तिः। मनःसंयमः कामक्रोधादिनिवृत्तिः। विद्या सच्छास्त्रवेदाद्यधिगमरूपा, तपश्चान्द्रायणादि, कीर्त्तिर्धार्म्मिकत्वादिना प्रसिद्धिः।

योगियाज्ञवल्क्यः—

चिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः।
समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः॥
वृथा तूष्णोदकस्नानं वृथा जप्यमवैदिकम्।
वृथा त्वश्रोत्रिये दानं वृथा भक्तमसाक्षिकम्॥

एतद्वाक्योक्त जलाधारादन्यत्र जलाशये त्रिरात्रं स्नानेन यत्-फल तदसमुद्रगायां नद्यां स्नानेनेत्यर्थः। एवं पक्षस्येत्यादावपि त्रिरात्र-पक्ष-मास व्रतफलदा इति केचित्।

समुद्रगास्नानात् प्रत्यभिज्ञेयसमुद्रप्रवाहगाः। वृथा शरीर-क्षालनान्यफलाजनकम्।

विष्णुपुराणे—

शिवलिङ्गसमीपस्थं यत्तोयं पुरतः स्थितम्।
शिवगङ्गेति विख्यातं तत्र स्नात्वा दिवं व्रजेत्॥

छन्दोगपरिशिष्टे कात्यायनः—

पक्षद्वयं श्रावणादि सर्व्वा नद्यो रजस्वलाः।
तासु स्नानं न कुर्व्वीत वर्ज्जयित्वा समुद्रगाः॥

पक्षो मासः, क्षमेकः सम्वत्सरः। इति शतपथश्रुतेः।

अये स्नानमात्रस्य प्रतिषेधात् प्रागपि, रजस्वला इति

हेतुमभिगदात् स्नानानर्हत्वमेव विवक्षितं नत्वाचमनार्हत्वमपि ।
संप्रदायोऽप्येवम् ।

नदीलक्षणमाह तत्रैव—

धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते ।
न ता नदीशब्दवहा गर्त्तास्ते परिकीर्त्तिताः ॥

धनुरत्र प्रमाणपुरुषचतुर्हस्तमितो दण्डः ।

उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते ॥
वेदाश्छन्दांसि सर्व्वाणि ब्रह्माद्याश्च दिवौकसः ।
जलार्थिनोऽपि पितरो मरीच्याद्यास्तथर्षयः ॥
उपाकर्म्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः ।
यियासूननुगच्छन्ति संहृष्टा ह्यशरीरिणः ॥
समागमस्तु यत्रैषां तत्रान्ये बहवो मलाः ।
नूनं सर्व्वे क्षयं यान्ति किमुतैकं नदीरजः ॥
ऋषीणां सिच्यमानानामन्तरालं समाश्रिताः ।
संपिबेयुः[१] शरीरेण पर्षन्मुक्तजलच्छटाः ॥
विद्यादीन् ब्राह्मणः कामान् पित्रादीन् सार्य्यपि ध्रुवम्[२]
आमुष्मिकाण्यपि सुखान्याप्नुयान्नात्र संशयः ॥
अशुच्यशुचिना दत्तमामसृच्छकलादिना ।
अनिर्गतदशाहास्तु प्रेता रक्षांसि भुञ्जते ॥

---

१ (ख) संपिबेस ।     २ मूले ध्रुवान् ।

स्वर्धुन्यम्भःसमानि स्युः सर्व्वाण्यम्भांसि भूतले ।
कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः ॥

ऋषीणां कुशमयऋषिप्रतिमादीनां स्वशुपाध्यायैस्तर्प्यमाणाना-मन्तरालं तर्पणकर्त्तृगणमध्यं शरीरेण संपिबेत संप्रतीच्छेत । पर्यन्मुक्तजलच्छटाः तर्पणकर्त्तृगणमुक्तजलसन्ततीः । अशुचिद्रव्यं शुचिना पुंसा आममपक्वं मृच्छकलादिना मृत्तिकाकपालादिना । अनिर्गतदशाहाः जन्मानन्तरं दशाहाभ्यन्तरे मृतास्ते च प्रेता रचांसि भुञ्जते इत्यर्थः । एतच्च

समागमस्तु यत्रैषामित्यादिना यो रजःप्रभृति सर्व्वदोषाभाव उक्तस्तदपवादार्थमशुचीत्यादिवाक्यम् । स्वर्धुनी गङ्गा ।

आदौ कर्क्कटके देवी त्र्यहं यावद्रजस्वला ।
चतुर्थेऽहनि सम्प्राप्ते शुद्धा भवति जाह्नवी ॥
तपनस्य सुता गङ्गा गोमती च सरिद्वरा ।
रजसा न प्रदूष्यन्ति ये चान्ये नदसंज्ञकाः ॥

इति वचनद्वयं प्रचरदपि महाजनापरिग्रहात् संहिताख्यदर्शना-च्चोपेक्षितम् ।

ब्रह्मपुराणे—

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ।
तर्पणन्तु भवेत्तस्य अङ्गत्वेन प्रकीर्त्तितम् ॥

नित्यमहरहः क्रियमाणम् ;

यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः ।

इति वचनेनोक्तम्। नैमित्तिकं सूर्य्यग्रहणादाववश्यं कार्य्यं न तु चाण्डालादिस्पर्शनिमित्तं शङ्खोक्तम्।

तत्र—

अस्पृश्यकर्म्माश्रुपातश्च मैथुनं छर्द्दनन्तथा।
अस्पृश्यस्पर्शनं कृत्वा स्नायादत्राद्या जलक्रिया॥

इति ब्रह्मपुराणे तर्पणनिषेधात्।

काम्यं स्वर्गादिहेतु तीर्थस्नानादि न तु पुष्यस्नानादि शङ्ख-लिखितं तस्य लौकिकस्य तत्सूत्रनयेनालौकिकेतिकर्त्तव्यता-सम्बन्धानौचित्यात्।

एवञ्च—

स्नानाङ्गत्वेऽपि तर्पणस्य सन्ध्योत्तरकालीनत्वं वाचनिकमेव बोद्धव्यं सन्ध्यानुष्ठानपक्षे, चन्द्रग्रहादौ सन्ध्यानुष्ठानासम्भवे स्नाना-नन्तरमेव तर्पणमिति।

दक्षः—

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते।
तेषां मध्ये तु यन्नित्यं तत्पुनर्भिद्यते त्रिधा॥
मलापकर्षणं पार्श्वे मन्त्रवत् मार्ज्जनं स्मृतम्।
सन्ध्यास्नानमुभाभ्याञ्च स्नानभेदाः प्रकीर्त्तिताः॥

पार्श्वे न जलमध्ये सन्ध्यास्नानं प्रातःस्नानं मन्त्रवदिति अन्दैवत-मन्त्राङ्गमदृष्टार्थं यत्तज्जलमध्ये स्मृतमुभाभ्याञ्च जले स्थले च।

शङ्खः—

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम्।

क्रियास्नानं तथा षष्ठं षोढ़ास्नानं प्रकीर्त्तितम् ॥
अस्नातस्तु पुमान् नार्हो जप्याग्निहवनादिषु ।
प्रातःस्नानं तदर्थन्तु नित्यस्नानं प्रकीर्त्तितम् ॥
चाण्डाल-शव-यूपादि स्पृष्ट्वा स्नातां रजस्वलाम् ।
स्नानार्हस्तु ततः स्नाति स्नानं नैमित्तिकं हि तत् ॥
पुष्यस्नानादिकं यत्तु दैवज्ञविधिचोदितम् ।
तद्धि काम्यं समुद्दिष्टं नाकामस्तु प्रयोजयेत् ॥
जप्तुकामः पवित्राणि अर्च्चिष्यन् देवताः पितॄन् ।
स्नानं समाचरेद्यत्तु क्रियाङ्गं तत् प्रकीर्त्तितम् ॥
मलापकर्षणं नाम स्नानमभ्यङ्गपूर्व्वकम् ।
मलापकर्षणार्थन्तु प्रवृत्तिस्तस्य नान्यथा ॥
सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
क्रियास्नानं समुद्दिष्टं स्नानं तत्र मता क्रिया ॥
तत्र काम्यन्तु कर्त्तव्यं यथावद्विधिचोदितम् ।
नित्यं नैमित्तिकञ्चैव क्रियाङ्गं मलकर्षणम् ॥
तीर्थाभावे तु कर्त्तव्यमुष्णोदकपरोदकैः ।
स्नातस्य वह्नितप्तेन तथैव परवारिणा ॥
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं भवेत् ।
अद्भिर्गात्राणि शुध्यन्ति तीर्थस्नानात् भवेत् फलम् ॥
सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
स्नानमेव क्रिया यस्मात् स्नानात् पुण्यफलं स्मृतम् ॥

अभ्यङ्गपूर्व्वकमिति मलापकर्षसाधनोपलक्षणार्थम् । तीर्थ-

शब्दोऽत्र सरोनदीदेवखातान्यतीर्थात्मकजलाशयपरः । मता अभिमता इति यावत् पुण्यस्नानाद्युक्तेतिकर्त्तव्यतया । नित्यं नैमित्तिकमित्यादिना काम्यस्नान-क्रियास्नाने उष्णोदकपरोदकाभ्यां न कार्य्ये इत्युक्तम् । परवारि परकृतजलं अकृत्वाचमस्य परेणोपार्ज्जितं स्नानफलं स्वर्गादि ।

हारीतः—

पञ्च स्नानानि विप्राणां कीर्त्तितानि मनीषिभिः ।
आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च ॥
आग्नेयं भस्मना स्नानमद्भिर्वारुणमुच्यते ।
आपोहिष्ठेति तद्ब्राह्मं वायव्यं गोरजः स्मृतम् ॥
अद्भिः सातपवर्षाभिर्दिव्यं स्नानमिहोच्यते ।
एतैस्तु मन्त्रतः स्नात्वा तीर्थानां फलमाप्नुयात् ॥

अग्निशब्दोऽत्र लक्षणया भस्मपरः । आग्नेयमित्यत्र सर्व्वत्राग्नि कस्मिभ्यास्य वक्तव्यमिति ठक् ।

आपोहिष्ठेति वक्ष्यमाणमन्त्रचतुष्टयोपलक्षणं एतैराग्नेया-दिभिः । मन्त्रतः मृदालम्भादिसाधनमन्त्रोच्चारणेन ।

योगियाज्ञवल्क्यः—

कालदोषादसामर्थ्यान्न शक्नोति यदा त्वसौ ।
तदा स्नात्वा तु ऋषिभिर्मन्त्रैर्दृष्टैस्तु मार्ज्जनम् ॥
शन्न आपस्तु द्रुपदा आपोहिष्ठाऽघमर्षणम् ।
एतैश्चतुर्भि ऋङ्मन्त्रैर्मन्त्रस्नानमुदाहृतम् ॥
स्नानमब्दैवतैर्मन्त्रैर्मार्ज्जनं प्राणसंयमः ।

अघमर्षणसूक्तेन अश्वमेधावभृत्समम् ॥
अप्रायत्ये समुत्पन्ने स्नानमेव तु कारयेत्।
पूर्व्वोद्दिष्टैस्तथा मन्त्रैरन्यथा मार्ज्जनं भवेत् ॥

कालदोषो ऽतिवर्षादि असामर्थ्यं शरीरापाटवं सम्पूर्णवारुण-स्नानानुकूलद्रव्यविरहो वा स्नानमब्दैवतैरिति अब्दैवतैर्मार्ज्जनं अघमर्षणसूक्तेन प्राणसंयम इति संवन्धः।

तादृशमन्त्रस्नानं पूर्व्वोक्त-मन्त्रस्नानादुत्कृष्टं, शन्न आपस्तु इत्यादिमन्त्रः कठब्राह्मणे श्रूयते चतुर्भिरपि सूक्तापेक्षया च ऋचां भूयस्त्वात्।

औदन्ताह्निके तु—

आपोहिष्ठेत्यादि ऋक्त्रयमात्रमेव विवक्षितमिति।

योगियाज्ञवल्क्येन—

शन्न आप इति मन्त्रचतुष्टयेनान्यस्नानमुक्तमिति लिखितम् अप्रायत्यमशुचि स्नानमप्येवंरूपं, अन्यथाऽशुद्ध्यभावे।

योगियाज्ञवल्क्यः—

असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया।
मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः ॥
मान्त्रं भौममथाग्नेयं वायव्यं दिव्यमेव च।
वारुणं मानसञ्चैव सप्तस्नानं प्रकीर्त्तितम् ॥
आपो हिष्ठेति वै मान्त्रं मृदालम्भस्तु पार्थिवम्
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम्[१]।

१ मूले रजसागवाम्।

यत्तु सातपवर्षेण स्नानन्तद्दिव्यमुच्यते।
वारुणश्चावगाहश्च मानसं विष्णुचिन्तनम्॥
अस्तं स्नानं यथोद्दिष्टं मन्त्रस्नानक्रमेण तु।
कालदोषादसामर्थ्यात् सर्व्वन्तुल्यफलं स्मृतम्॥
मानसं प्रवरं स्नानं केचिदिच्छन्ति सूरयः।
आत्मतीर्थप्रशंसायां व्यासेन पठितं यतः॥

एतच्च मुख्यस्नानासामर्थ्ये कर्त्तव्यं अमुख्यस्नानगणे मुख्यस्यापि निवेशः सङ्गलमात्रपूरणाय अन्येषां मुख्यतुल्यताद्योतनाय वा ततोऽन्यस्य मुख्यस्याभावात्।

स्कन्दपुराणे—

पुण्यं कनखले यच्च प्रयागे यच्च सुन्दरि!।
तत्फलं सकलं देवि भूतिस्नाने विधीयते॥

भूतिर्भस्म तच्च संस्कृताग्निप्रसूतमिति श्रीदत्ताह्निके।

तथा—

उच्छिष्टं वा प्रमत्तं वा नरवाहननन्दिते।
भूतिस्पृष्टं न हि नरं धर्षयन्ति विनायकाः॥

प्रमत्त उन्मत्तः, धर्षयन्ति भर्त्सयन्ति, विनायकाः कुष्माण्डादयः

विष्णुपुराणे—

आकाशगङ्गासलिलं समादाय गभस्तिमान्।
अनभ्रागतमेवोर्व्व्यां सद्यः क्षिपति रश्मिभिः॥
तस्य स्पर्शविनिर्धूतपापपङ्को द्विजोत्तमः।
न याति नरकं मर्त्त्यो दिव्यं स्नानं हि तत् स्मृतम्॥

कृत्तिकादिषु ऋक्षेषु विषमेषु स्वयं द्विजः।
दृष्ट्वार्कं पतितं ज्ञेयं तद्गाङ्गं दिग्गजोज्झितम्॥
युग्मर्क्षेषु च यत्तोयं पतत्यर्कोज्झितं दिवः।
तत् सूर्य्यरश्मिभिः सद्यः समादाय विनश्यति॥

विषमर्क्षेषु प्रथम-तृतीय-पञ्चमादिषु अश्विनी-कृत्तिका-मृगशिरः-पुनर्वस्वादिषु युग्मेषु समेषु रोहिण्यादिषु।

तथा—

उभयं पुण्यमत्यर्थं नृणां पापहरं द्विजः।
आकाशगङ्गासलिलं दिव्यं स्नानं महामुने॥

वराहपुराणे—

दक्षिणावर्त्ततोयेन तिलमिश्रोदकेन च।
उदके नाभिमात्रे तु यः कुर्य्यादभिषेचनम्॥
प्राक्स्रोतसि वै नद्यां नरस्त्वेकाग्रमानसः।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति॥

प्राक्स्रोतसि पूर्व्वदिगभिमुखप्रवाहायाम्।

अच्छिन्नपद्मपत्रेण सर्व्वरत्नोदकेन च।
स्रोतसो वै नरः स्नात्वा सर्व्वपापैः प्रमुच्यते॥

स्रोतस इति सप्तम्यर्थे षष्ठी।

पारिजाते तु—

स्रोतसीति पठित्वा सप्तम्यर्थं व्याख्यातम्।

दक्षिणावर्त्तशङ्खेन पात्रे औदुम्बरे स्थितम्।
उदकं यः प्रयच्छेत शिरसा कृष्णमानसः॥

तस्य जन्मकृतं पापं तत्क्षणादेव नश्यति ॥

औदुम्बरे ताम्रपात्रे, शिरसेति सप्तम्यर्थे तृतीया ।

जावालः—

अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्म्मिणाम् ।
आर्द्रेण वाससा वाऽपि दैहिकं मार्ज्जनं विदुः ॥

कर्म्मिणां स्नानानन्तरं यत् कर्म्म विहितं तच्चिकीर्षूणां मार्ज्जनमिह प्रोञ्छनम् ।

अशिरस्क इत्यनुवृत्तौ मनुः—

न च स्नायाद्विना ततः ।

ततः शिरसो विना । तेनाप्यशक्तौ विहितं स्नानं अशिरस्कं कर्त्तव्यमित्युक्तम् ।

मार्कण्डेयपुराणे—

शिरःस्नानन्तु कुर्व्वीत दैवं पैत्र्यमथापि वा ।

इति गृहस्थरत्नाकरे प्रातःस्नानादितरङ्गः ॥

---

## अथ क्रियास्नानम् ।

तत्र शङ्खः—

क्रियास्नानन्तु वक्ष्यामि यथावदनुपूर्व्वशः ।
मृद्भिरद्भिश्च कर्त्तव्यं शौचमादौ यथाविधि ॥
जले निमग्नस्तून्मज्ज्य उपस्पृश्य यथाविधि ।

१ मूले निमज्ज्य ।

तीर्थस्यावाहनं कुर्य्यात्तत्प्रवक्ष्याम्यतः परम्[1] ॥
प्रपद्ये वरुणं देवमम्भसाम्पतिमूर्ज्जितम् ।
याचितं[2] देहि मे तीर्थं सर्व्वपापापनुत्तये ॥
तीर्थमावाहयिष्यामि सर्व्वाघविनिसूदनम् ।
सान्निध्यमस्मिंस्तु तोये भजतां मदनुग्रहात् ॥
रुद्रान् प्रपद्ये वरदान् सर्व्वानप्सुसदस्त्वहम् ।
सर्व्वानप्सुसदश्चैव प्रपद्ये प्रणतः स्थितः ॥
देवमप्सुसदं[3] वह्निं प्रपद्येऽघनिसूदनम् ।
आपः पुण्याः पवित्राश्च प्रपद्ये वरुणस्तथा ॥
रुद्राश्चाग्निश्च सर्पाश्च वरुणस्त्वाप एव च ।
शमयन्त्वाशु मे पापं पुनन्तु च सदा मम[4] ॥
इत्येवमुक्त्वा कर्त्तव्यं ततस्तु मार्ज्जनं जले ।
आपो हिष्ठेति तिसृभिर्यथावदनुपूर्व्वशः ॥
हिरण्यवर्णेति च वै ऋग्भिश्च तिसृभिस्तथा[5] ।
शन्नो देवीरिति तथा शन्न आपस्तथैव च ॥
इदमापः प्रवहतां तथा मन्त्रमुदीरयेत् ।
एवं सम्मार्ज्जनं कृत्वा छन्द आर्षं सदैवतम् ॥
अघमर्षणसूक्तञ्च संस्मरेत् प्रयतस्तथा ।

---

१ मूले अपोषतः। २ (क) याचेत ।
३ क्वचित् अंसुसदं । ४ मूले मास्य रक्षन्तु सर्व्वशः ।
५ मूले हिरण्यवर्णेति तिसृभिर्जगतीभिश्चतसृभिः ।

छन्दश्चानुष्टुभस्तस्य[१] ऋषिश्चैवाघमर्षणः ॥
देवता भाववृत्तस्तु पापघ्नस्य[२] प्रकीर्त्तितः ।
ततोऽम्भसि निमज्जेत्तु त्रिःपठेदघमर्षणम् ॥
यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः ।
तथाघमर्षणं सूक्तं सर्व्वपापापनोदनम् ॥
अनेन विधिना स्नात्वा अमेध्यस्नानवाससा ।
परिवर्त्तितवासास्तु तीर्थतीरमुपस्पृशेत् ॥
उदकस्याप्रदानाद्धि स्नानशाटीं न पीडयेत् ।
अनेन विधिना स्नातः पुण्यं फलमुपाश्नुते[३] ॥

भजतामित्यत्र विभक्तिविपरिणमनं तेन वरुणमित्यनेनान्वयः । हिरण्यवर्णेति हिरण्यवर्णाः शुचयः पावका इत्याद्यास्तस्र-स्तैत्तिरीय-मैत्रावरुणीययोः शाखयोर्द्रष्टव्याः पापघ्नस्याघमर्षण-सूक्तस्येत्यन्वयः।

कात्यायनः—

अथातो नित्यस्नानं नद्यादौ मृद्गोमयकुशतिलसुमनस आहृत्य उदकान्तं गत्वा शुचौ देशे प्रतिष्ठाप्य प्रक्षाल्य पाणिपादं कुशोपग्रहो बद्धशिखो यज्ञोपवीत्याचम्योरुं हीति-तोयमामन्त्र्य आवर्त्तयेत् ये ते शतमिति सुमित्रिया न इत्यपोऽञ्जलिमादाय दुर्मित्रिया इति द्वेष्यं प्रतिषिञ्चेत् ।

१ (क) छन्दोऽनुष्टुभ् च तस्यैव ।
२ (क) पापक्षये क्वचित् पापघ्नस्तु
३ (क) तीर्थस्य फलमश्नुते ।

कटिमस्थि उरू जङ्घे चरणौ करौ मृदा त्रिस्त्रिः प्रक्षाल्याचम्य नमस्योदकमालभेत अङ्गानि मृदा, इदं विष्णुरिति सूर्य्याभिमुखो निमज्जेदापोऽस्मानिति स्नात्वोदिदाभ्य इत्येवमप्सु निमज्योन्मज्याचम्य गोमयेन विलिम्पेत् मानस्तोक इति।

ततो ऽभिषिञ्चेदिदं मे वरुण इति चतसृभिर्मापि उदुत्यमवभृथेत्यृचेतस्मिन्निमज्योन्मज्याचम्य दर्भैः पावयेत्। आपो हिष्ठेति तिसृभिरिदमापो हविष्मती देवीराप इति द्वाभ्याम्, आपो देवा। द्रुपदादिव। शन्नो देवीरपां रसमापो देवीः पुनन्तु मेति नवभिर्वित्पतिर्मेति ॐकारेण व्याहृतिभि र्गायत्र्यावादावन्ते जलेऽघमर्षणं त्रिरावर्त्तयेत् द्रुपदां वा आयं-गौरिति एवं प्राणायामो वा सप्तिरसं ॐ इति वा विष्णोर्वा स्मरणम्।

उपागृह्यतेऽनेनेति उपग्रहो हस्तस्तेन कुग्रहन्त इत्यर्थः। नित्यं यज्ञोपवीतीति पुरुषार्थविधिप्राप्ते यज्ञोपवीतीति द्वितीयवस्त्र-धारणार्थमिति कात्यायनभाष्यं। तन्न, परिसंख्यापत्तेः।

तस्य क्रत्वर्थत्वाश्रयणं प्रकरणात् तेन दैवादिनष्टेऽपि यज्ञोपवीते तदुत्पाद्य स्नानमिति मिथ्यतीति।

वस्तुतस्तु— द्विवस्त्रता त्रुटिते यज्ञोपवीते तदन्यमपि स्नान-दशायामुपादेयम्।

उरुं हीति—

उरुं हि राजा वरुणश्चकार इति ऋक्। ये ते शतमिति— ये ते शतं वरुण इत्यादि ऋक्। सुमित्रिया न इति सुमित्रिया न

आप इत्यादि यजुः। दुर्मित्रिया इति दुर्मित्रियास्तस्मै सन्त्विति यजुः।

द्वेष्यं प्रतिषिञ्चेदिति द्वेष्यावस्थानदिशि निःक्षिपेत्।

बौधायनः—

सुमित्रिया न आप ओषधयः सन्त्विति तां दिशं निरुक्षति। यस्यामस्य दिशि द्वेष्यो भवति तामिरुक्षति तस्यां दिशि क्षिपति। नमस्य नमस्कृत्य आलभेत लिम्पेत इदं विष्णुरिति।

इदं विष्णुर्विचक्रमे इत्यादिना सूर्य्याभिमुखो निमज्जेत इति तड़ागाभिप्रायम्।

नद्यां सरःसु च स्नायात् प्रतिस्रोतःस्थितो द्विजः।

इति नरसिंहपुराणात्

आपो ऽस्मानिति आपोऽस्मान् मातर इति ऋक् उद्यदादित्याभिमुखो ऽशुचिरासुत इति सूर्य्याभिमुखो निमज्जेदित्येकं मज्जनं उन्मज्जनानन्तरं निमज्जनश्रवणात् द्वितीयमस्ति चैवं तन्निमज्ज्योन्मज्ज्य चापरं इति मज्जनत्रयसिद्धिः।

पारिजातस्तु—

स्नात्वेति श्रवणात् पुनर्मज्जनं उन्मज्ज्य निमज्ज्येति चापरमिति मज्जनत्रयसिद्धिरित्याह।

तच्चिन्त्यम्।

मानस्तोके तनये इत्यनया ऋचा अभिषिञ्चेत्, हस्तेन शिरसि जलं क्षिपेत्। इमं मे वरुण इति— इमं मे वरुण श्रुधीहर इत्यादि तत्त्वायामीति ऋक् त्वन्नोऽग्ने इत्यादि ऋक् सत्वन्नोऽग्ने

इत्यादि ऋग्भिः। आप इति आप ओषधीरित्यादिका ऋक्।

मुञ्चन्त्विति मुञ्चन्तु मा शपथ्यादिका ऋक्। अवभृथेति अवभृथं विष्णुं पुनरित्यादि यजुः। अन्ते चैतदिति एतद्वक्ष्यमाण मार्ज्जनान्ते उक्तमन्त्रकमभिषेककर्म्म कर्त्तव्यमित्यर्थः।

अत्र चाभिषेको मार्ज्जनञ्च एकयैव ऋचा अङ्गबलात् दर्भैरपि बहुत्वं त्रित्वविश्रान्तं कपिञ्जलन्यायेन। पावयेन्मार्ज्जनं कुर्य्यात्।

आपो हिष्ठेति तिसृभिरिति आपो हिष्ठा मयोभुव इत्यादि-तिसृभिः। इदमाप इति इदमापः प्रवहतेति हविष्मतीरिति-हविष्मतीरिमा आप इति। देवीराप इति। द्वाभ्यामिति। देवीरापो अपानपात् इति कार्षिरसि समुद्रस्य त्वा, इति द्वे।

आपो देवा इति आपो देवा मधुमतीरिति द्रुपदादिव मुमुचान इत्यादि शन्नोदेवीरभीष्टये इति अपां रसमिति अपां रसमुद्वयसमिति आपो देवीरिति आपो देवीरुपसृजेदिति पुनन्तु मेति पुनन्तु मा इत्यादिका नव ऋचः विपेतिर्मेति विपेतिर्मा पुनातु वाकपतिर्मा प्रणाक्षीति अस्यान्ते वाच्छिद्रे सूर्य्यस्य रश्मिभिरित्यनुषङ्गेण मन्त्रद्वयम्। देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिरिति च तृतीयो मन्त्रः। एभिर्मन्त्रैः पावयित्वेत्यर्थः।

आदावन्ते चेति आपो हिष्ठेत्यादि मार्ज्जनाद्यन्ते अघमर्षणं ऋतञ्च सत्यञ्चेत्यादि द्रुपदादिव मुमुचान इति आयं गौरिति ऋचं आयं गौः पृश्निरिति ऋच प्राणायामो वा कर्त्तव्य इति शेषः। ॐमिति वा स्मरणं विष्णोर्वा स्मरणं कर्त्तव्यमिति शेषः॥

योगियाज्ञवल्क्यः—

> योऽसौ विस्तरतः प्रोक्तः स्नानस्य विधिरुत्तमः ।
> असामर्थ्यान्न कुर्य्याच्चेत्तत्रायं विधिरुच्यते ॥
> स्नानमन्तर्जले चैव मार्ज्जनाचमने तथा ।
> जलाभिमन्त्रणञ्चैव तीर्थस्य परिकल्पनम ॥
> अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः ।
> स्नानाचरणमित्येतत् समुद्दिष्टं महात्मभिः ॥

अत्रायमर्थः—

यदि देशकालाद्यसामर्थ्यादिना विस्तरस्नानं कर्त्तुमशक्तस्तदा अघमर्षणसूक्तेन त्रिरावृत्तेन तीर्थपरिकल्पनजलाभिमन्त्रणाचमन-मार्ज्जन-जप-स्नानानि कुर्य्यादिति पूर्व्वप्रतिपन्नक्रमवत्तीर्थपरिकल्पनाद्यनुवादेन मन्त्रमात्रविधानात् ।

अत्र विपरीतेऽपि शाब्दक्रमे पूर्व्वस्नानीय एव क्रमो ग्राह्यः, तेन प्रथमं जलाभिमन्त्रणं तत आचमनं ततो मार्ज्जनं ततः स्नानमिति लभ्यते ।

गोभिलः—

अथ स्नानविधिं प्रवक्ष्यामो नदी-देवखात-गर्त्त-प्रस्रवणादीन् गत्वा शुचौ देशे मृत्तिकाकुशगोमयाद्यनुकल्प्य पारक्यनिपाने पञ्चपिण्डानुद्धृत्य नमस्कृत्य तीर्थं पावकानः सरस्वती इत्यादिना पादादारभ्य मृदा गात्राणि प्रक्षाल्योपविश्य बद्धशिखो यज्ञोपवीती प्राङ्मुख उदङ्मुखो वा कुशहस्तः समाहितः सव्याहृतीः सावित्रीञ्च

[1]मन्त्रञ्जपित्वा सप्तकृत्वः सावित्र्यानुमन्त्रितं सकृदुदकमाचामेदिति।
तत आचम्यापो यथाविधि।

अथ देवताभिसन्धिं कृत्वा सहस्रशीर्षा घृतवत्यनुक्रान्ताभिर्ऋग्भिर्मृत्तिकामादाय इदं विष्णुरिति तद्विष्णोरिति पद्भ्यचेन[2] संमृज्य उद्वयन्तमसस्परि उदुत्तममिति चोर्द्ध्वं पाणी कृत्वा आदित्यमवेक्षेतोद्धृतासीति आमोऽसीति प्रातिलोम्येनाङ्गानि[3] मृदा लेपयित्वा स्पृशेत् द्विरावृत्त्या[4]।

ततः गावस्त्विद्वासमन्यत्र इत्यनेन गोमयं गात्रेषु मृत्तिकावत्। ऋतञ्चेति तिसृभिः शुद्धाघमर्षणं जपेत्। ततो देवताभिसन्धिं कृत्वा नाभिमात्रजले स्थित्वा—

शन्नो देव्यापोहिष्ठीयाभिः पावमानीभिस्तरत् समन्दीभिरेतोन्विन्द्रं तमुष्टवामन किं इन्द्र उदुत्तममित्याभि ऋग्भिः पवित्रवतीभिर्मार्ज्जनं कृत्वा आभिः त्रिःप्राणायामं कृत्वा सहस्रशीर्षत्यृचेन त्रिराचम्याघमर्षणेन त्रिराप्लुत्य पुनः शन्नो देवीरित्यादिभिर्मार्ज्जनञ्च।

नदीदेवखात-गर्त्त-स्रवणादीन् गत्वेति वचनान्मध्यादावेवं स्नानविधिर्नोद्धृतोदके, मृदाद्युपकल्प्य अधमोत्तममध्यमाङ्गप्रक्षालनार्थं योगियाज्ञवल्क्येनैव त्रिधा कृत्वा मृदं तान्त्विति स्मृतेः।

पापकामः सरस्वतीराजोभिर्वाजिनीवतीति सहस्रशीर्षेति

१ (क) मन्त्रनास्ति। २ मूले अधिकं।
३ मूले प्रातिलोमान्यङ्गानि ४ मूले द्विरेतयावृता कृत्वा।

सहस्रशीर्षा पुरुष इति घृतवतीति घृतवती भुवनानामिति अश्व-क्रान्तेति अश्वक्रान्ते रथक्रान्तेति इदं विष्णुरिति इदं विष्णुर्विचक्रमे इति तद्विष्णोरिति तद्विष्णोः परमं पदमिति तद्विप्रास इति अतो देवा इति उद्वयमिति उद्वयन्तमसः परि, ज्योतिः पश्यन्त इति उदुत्तमं वरुणपाशमिति उद्धृतासीति उद्धृतासि वराहेणेति आत्मासि प्राण उद्धृत्यासीति।

प्रतिलोमानि पादादारभ्य शिरःपर्य्यन्तानि आवृता इति-कर्त्तव्यतया गावस्थिद्वाम इति गावस्थिद्घासमन्यव इत्यनेन। मरुत इति शुष्काघमर्षणम्। जलं विना अघमर्षणम्।

अच मार्ज्जनात् पूर्व्वं प्रपद्ये वरुणमित्यादि तीर्थावाहनं कुर्व्वते तदयुक्तम्।

तस्य शङ्खस्नानप्रविष्टतयाऽचाप्रवेशात् गोभिलीय-क्रम-विरोधाच्च।

पावमानीभिरिति पवमानसम्बन्धिच्छक्परं बहुवचनं द्वि(त्रि)त्व-विश्रान्तं कपिञ्जलन्यायात् त्रित्वव्यापकबहुत्वबोधकस्य प्रकरणे चापठितत्वात्।

अत उपास्मै गायता नर इति अभिते मधुना पय इति म नः पयस्वेति त्र्यृचत्रयपरिग्रहः।

एवं तदविद्युतेत्यादि षड्केन समं नवकानुष्ठानमप्रमाणकम्। केचित्—

पावमानीरित्यादिका एव ऋचः पावमानीपदयुक्तत्वेन पावमान्य इत्याहुः।

तदपरे दूषयन्ति लक्षणापत्तेरिति तरत् समन्दी धावतीति चतुष्कस्यैव गोतमादिभिः पावमानत्वेन कीर्त्तनात्।

एतोन्विन्द्रमिति ऋग्भिः स्तत एतोन्विन्द्रं मुषामशुद्धमिति एतोन्विन्द्रं तमुष्टवेति नद्याशायोर्स्त्रियमस्यमिति चतुष्टयं पवित्र-वतीभिरिति पवित्रसहिताभिरित्यर्थः।

न तु पवित्रन्तेति वितत इत्यादि पवित्रपदवत् ऋग्ग्रहणं लक्षणा-पत्तेः। राजाद्यलिखितोप्येषः स्नानविधिः सकलछन्दोगपरिग्रहादिह लिखितः[1]।

पद्मपुराणे—

नैर्मल्यं भावशुद्धिश्च विना स्नानं न विद्यते।
तस्मान्मनोविशुद्ध्यर्थं स्नानमादौ विधीयते॥
अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं समाचरेत्।
तीर्थं प्रकल्पयेद्विद्वान् मूलमन्त्रेण मन्त्रवित्॥
नमो नारायणायेति मूलमन्त्र उदाहृतः।
दर्भपाणिस्तु विधिना आचान्तः प्रयतः शुचिः॥
चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः।
प्रकल्प्यावाहयेद्गङ्गामेभिर्मन्त्रैर्विचक्षणः॥
ॐ विष्णोः पादप्रसूताऽसि वैष्णवी विष्णुपूजिता।
पाहि नस्त्वेनसस्तस्मादाजन्ममरणान्तिकात्॥
तिस्रः कोट्योऽर्द्धकोटी च तीर्थानां वायुरब्रवीत्।
दिवि भुव्यन्तरीक्षे च तानि ते सन्ति जाह्नवि॥

१ (ख) निबद्धः।

नन्दिनीत्येव ते नाम देवेषु नलिनीति च ।
वृन्दा पृथ्वी च सुभगा विश्वकाया शिवा सिता ॥
विद्याधरी सुप्रसन्ना तथा लोकप्रसाधनी ।
क्षेमा च जाह्नवी चैव शान्ता शान्तिप्रदायिनी ॥
एतानि पुण्यनामानि स्नानकाले प्रकीर्त्तयेत् ।
भवेत् सन्निहिता तत्र गङ्गा त्रिपथगामिनी ॥
सप्तवाराऽभिजप्तन्तु करसम्पुटयोजितम् ।
मूर्ध्नि कुर्य्याज्जलं भूयः त्रि चतुः पञ्च सप्त वा ॥
स्नानं कुर्य्यान्मृदा तद्वदामन्त्र्य च विधानतः ।
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ॥
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ।
उद्धृताऽसि वराहेण कृष्णेन शतबाहुना ॥
नमस्ते सर्व्वभूतानां प्रभवारिणि सुव्रते ।

नरसिंहपुराणे—

नद्यां सत्स्नु च स्नायात् प्रतिस्रोतःस्थितो द्विजः ।
तड़ागादिषु तोयेषु प्रत्यकं स्नानमाचरेत् ॥
शुचौ देशे समभ्युक्ष्य स्थापयेत् कुशमृत्तिलान् ।
मृत्तोयेन स्वकं देहं बहिः संशोध्य यत्नतः ॥
स्नानशाटीञ्च संशोध्य कुर्य्यादाचमनं बुधः ।
शनैर्जलं प्रविश्याथ नमेद्वरुणमप्पतिम् ॥
हरिमेव स्मरन् बुद्ध्या निमज्जेच्छरवज्जले ।
ततस्तीरं समासाद्य अप आचम्य मन्त्रतः ॥

प्रोक्षयेद्वरुणं देवं मन्त्रैर्वा पावमानीभिः।
कुशाग्रस्थेन तोयेन प्रोक्ष्यात्मानं प्रयत्नतः॥
आलभेन्मृत्तिकां गात्रे इदं विष्णुरिति द्विजः।
ततो नारायणं देवं संस्मरेत् प्रविशेज्जलम्॥
निमज्जानो जले सम्यक् त्रिर्जपेदघमर्षणम्।

प्रत्यर्कमादित्याभिमुखो भूत्वा। अत्र पौराणिकः स्नानविधिः सर्व्वशाखिसाधारणः, अन्यस्तु शाखाभेदेन वैकल्पिकः।

वैदिकमन्त्रशून्यस्तु पद्मपुराणीयो विधिः सर्व्वशाखि-सर्व्ववर्ण-साधारणोऽपीति प्राञ्चः।

याज्ञवल्क्यः—

तूष्णीमेवावगाहेत यदा स्यादशुचिर्नरः।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत्॥

अशुचिः स्नाननिमित्तेन चाण्डालस्पर्शादिना।

स्पर्शनाद्भिर्दूषिताभिरुद्धृताभिश्च मानवः।
स्नानं समाचरेद्यस्तु न स शुध्यति कर्हिचित्॥

स्पर्शनाशुचिद्रव्यस्य, उद्धृताभिरिति वचनादनुद्धृतासु न स्पर्शदोष इत्यर्थादायाति।

तथा—

अशाद्यास्त्वागता आपो नद्याः प्रथमवेगिकाः।
अक्षोभितास्तु केनापि यास्तु तीर्थादिनिःसृताः।

गङ्गाप्रवाहादिच्छिन्नाः।

तथा—

उपस्थाने हि यस्तासां मन्त्रवान् कीर्त्तितो विधिः।
निवेदनान्तस्तत् स्नानमित्याहुर्ब्रह्मवादिनः॥
निषेकात् प्रभृति स्नानं यावच्छ्रुतिनिदर्शनात्।
नामन्त्रवद्द्विजातीनां कर्म्म किञ्चित् प्रवर्त्तते॥

तथा—

मत्स्य-कच्छप मण्डूकास्तोये मग्ना दिवानिशम्।
वसन्तोऽपि च ते स्नाता फलं नार्हन्ति कर्हिचित्॥
श्रद्धाविधिसमायुक्तं कर्म्म यत् क्रियते नृभिः।
सुविशुद्धेन भावेन तदानन्त्याय कल्प्यते॥

उपस्थानं उरुं हि इत्यादि मन्त्रकं तासामपां निवेदनान्तः-देवा गातु विदो गातुमिति जप्य निवेदनान्तः, निषेको गर्भाधानम्।

तथा—

ब्रह्मचत्रविशाञ्चैव मन्त्रवत् स्नानमिष्यते।
तुष्णीमेव हि शूद्रस्य मनमस्कारकं स्मृतम्॥

तुष्णीममन्त्रकं मनमस्कारकमुदकनमस्कारवत्।

तथा—

अगम्यागमनात् स्तेयात् पापेभ्यश्च प्रतिग्रहात्।
रहस्याचरितात् पापात् मुच्यते स्नानमाचरन्॥
प्रकर्त्तुमसमर्थस्तेत् जुहोति यजति क्रियाः।
स्नान-ध्यान-जपैर्दानैरात्मानं शोधयेत् बुधः।

विष्णुः—

याम्यं हि यातनादुःखं नित्यस्नायी न पश्यति ।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो जनाः ॥

याम्यं यमलोकोद्भवम् ।

योगियाज्ञवल्क्यः—

विधिहीनं भावदुष्टं कृतमश्रद्धया च यत् ।
उद्धरन्त्यसुरास्तस्य मूढस्य दुष्कृतात्मनः ॥
स्नात्वा च वाससी धौते अक्लिष्टे परिधाय च ।
प्रक्षाल्योरू मृदाद्भिश्च हस्तौ प्रक्षाल्य वै तथा ॥
अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च ।
कुतपं योगपट्टं वा द्विवासा येन वा भवेत् ॥

कुतपो नेपालकम्बलः ।

तथा—

यावद्देवानृषींश्चैव पितॄंश्चैव न तर्पयेत् ।
तावन्न पीडयेद्वस्त्रं येन स्नातो नवोदके ॥
निष्पीडयति यः पूर्व्वं स्नानवस्त्रन्तु तर्पणात् ।
निराशाः पितरस्तस्य यान्ति देवा महर्षयः ॥

सांख्यायनगृह्यम्—

नवस्त्रोऽहरहराप्लुत्यानुदकोऽन्यद्वस्त्रमाच्छादयेत् ।

नवस्त्र इति द्वितीयवस्त्रप्राप्त्यर्थं एकवस्त्रत्वस्य नग्नत्वप्रतिषेधेनैव प्राप्तत्वादिति ब्रह्मदत्तभाष्यम् । अनुदकः शिरोव्यतिरिक्तगात्रेष्वनुद्धृतोदकः ।

पराशरः—

स्नात्वा निरस्य वासोऽन्यच्छुचि प्रक्षाल्य चाम्भसि[1]।

अपवित्रे कृते ते तु कौपीनश्च्योतवारिणा ॥

कौपीनं गुह्यदेशः। ततश्च्युतेन जलेन।

आचारः—

नार्द्रमेकञ्च वसनं परिदध्यात् कदाचन।

नरसिंहपुराणे—

न रक्तमुल्वणं वासो न नीलञ्च प्रशस्यते।

मलाक्तञ्च दशाहीनं वर्ज्जयेदम्बरं बुधः ॥

उल्वणमुद्भटम्।

स्नात्वेत्यनुवृत्तौ हारीतः—

नोत्तरीयविपर्य्यासं कुर्य्यात्।

विष्णुः—

स्नातः शिरो नावधुनेन्नाङ्गेभ्यस्तोयमुद्धरेत्।

न तैलवसे स्पृशेत्। नाप्रक्षालितं पूर्व्ववासो बिभृयात्।

स्नात एव सोष्णीषे धौते वाससी बिभृयात्।

न म्लेच्छान्त्यजपतितैः सह संभाषणं कुर्य्यात् ॥

तैलञ्च वसा च तैलवसे तैलशब्दस्य योगरूढ़पुरस्कारेण तिलतैले रूढ़ः, तैलादौ च तैलपदप्रयोगः स्नेहे तैलजिति तैलच् प्रत्ययादिति कल्पतरुपारिजातौ।

[1] (ख) प्रक्षालयेन्मृदा।

पूर्व्वधृतमङ्गेष्विति शेषः। उष्णीषधारणमिह शिरोजला-पनयनाय तेन तदनन्तरं न धार्य्यमिति।

तथाच महाभारते—

आप्लुतः सोऽधिवासेन जलेन च सुगन्धिना।
राजहंसनिभं प्राप्य उष्णीषं शिथिलार्पितम्॥
जलक्षयनिमित्तं वै वेष्टयामास मूर्द्धनि।

इति शिथिलार्पितं अगाढ़वद्धम्। पूर्व्ववासः पूर्व्वधृत-मङ्गेष्विति शेषः।

मार्कण्डेयपुराणे—

अपमृज्यात्र च स्नातो गात्राण्यम्बरपाणिना।
न चाग्रे धूनयेत् केशान् वाससी न च निर्धूनेत्॥

अम्बरं स्नानवस्त्रं तेन स्नानवस्त्रेण नाङ्गं परिमृज्यादिति पारिजातः।

अम्बरपाणिना रिक्तपाणिनेति हलायुधः।

एतदुभयमपि भद्रम्।

स्नातो नाङ्गानि निर्मृज्यात् स्नानशाट्या न पाणिना।

इति विष्णुपुराणात्।

एवञ्च स्नात्वा गात्रमवमृज्यादिति हारीतादि-वाक्येन स्नान-शाट्या न पाणिनां चेति विशिष्य समर्थं प्रति परिमार्ज्जनमात्रा-भावोऽक्तं असमर्थं प्रति पाणिस्नानशाटीकरणपरिमार्ज्जनाभाव इति प्रकाशकारः।

अन्ये तु—

नाङ्गेभ्यस्तोयमुद्धरेदित्यनेनैव वस्त्रनिषेधे सिद्धे पुनरम्बर-पाणिस्नानशाटीप्रतिषेधो यथोत्तरदोषभूयस्त्वार्थमित्याहुः।

मनुः—

शिरःस्नातस्तु तैलेन नाङ्गं किञ्चिदुपस्पृशेत्।

यदा शिरः स्नानं कृतं भवति तैलेन तदा तद्भिन्नमङ्गं तैलेन न संयोज्यं, तैलशब्दोऽत्रापि तिलतैलपरः।

पराशरः—

ब्राह्मणं स्नातुमायान्तमनुगच्छन्ति देवताः।
पितरश्च महाभागा वायुभूता जलार्थिनः॥

इति गृहस्थरत्नाकरे क्रियास्नानतरङ्गः॥

## अथ सन्ध्योपासनम्।

तत्र योगियाज्ञवल्क्यः—

अतः परं प्रवक्ष्यामि सन्ध्योपासननिर्णयम्।[1]
अहोरात्रकृतैः पापैर्यामुपास्य निवर्त्तते॥
सर्व्वावस्थोऽपि यो विप्रः सन्ध्योपासनतत्परः।
ब्राह्मण्याच्च न हीयेत अन्यजन्मगतोऽपि सन्॥

सन्ध्या च वक्ष्यमाणा प्राणायामादिकर्म्मात्मिका उपासनमनुष्ठानं सर्व्वावस्थोऽपि निन्द्यसेवादिकर्म्मरतोऽपि यथोचितशौचे अप्रसक्तोऽपि चेत्यर्थः।

मनुः—

पूर्व्वां सन्ध्यां जपंस्तिष्ठन् नैशमेनो व्यपोहति।
पश्चिमान्तु समासीनो मलं हन्ति दिवाकृतम्॥

मलं पापम्।

शातातपः—

अनृतं मद्यगन्धञ्च दिवामैथुनमेव च।
पुनाति वृषलस्यान्नं बहिः सन्ध्या ह्युपासिता॥

वृषलोऽत्राधार्म्मिकः।

वृषो हि भगवान् धर्म्मस्तस्य यः कुरुते लयम्।
वृषलं तं विदुर्द्देवाः—। इति महाभारतात्॥

---

१ प्रथमपङ्क्तेः परं क्वचिदधिका पङ्क्तिः।
पापी भवत्यकुर्व्वन् यद्ब्राह्मण्याच्चैव हीयते।

यमः— यदह्ना कुरुते पापं कर्म्मणा मनसा गिरा ।
आसीनः पश्चिमां सन्ध्यां प्राणायामैस्तु हन्ति तत् ॥
यद्रात्र्या कुरुते पापं कर्म्मणा मनसा गिरा ।
पूर्व्वां सन्ध्यां समासीनः प्राणायामैर्व्यपोहति ॥
सन्ध्यामुपासते ये तु नियतं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्[१] ॥

शंसितव्रता दृढ़व्रताः । एतच्चाज्ञानादिकृत-पापविषयम् ।

याज्ञवल्क्यः—

दिवा वा यदि वा रात्रौ यदज्ञानकृतं भवेत् ।
त्रिकालसन्ध्याकरणात् तत् सर्व्वं वै प्रणश्यति ॥

बौधायनः—

यदुपस्थकृतं पापं पद्भ्यां वै यत् कृतं भवेत् ।
बाहुभ्यां मनसा वापि वाचा वा यत् कृतं भवेत् ॥
सायं सन्ध्यामुपस्थाय तेन तस्मात् प्रमुच्यते ।

शातातपः—

गृहेषु प्राकृती सन्ध्या गोष्ठे शतगुणा भवेत् ।
नदीषु शतसाहस्री अनन्ता शिवसन्निधौ ॥

प्राकृती एकगुणफला ।

सम्वर्त्तः—

प्रातःसन्ध्यां सनक्षत्रामुपासीत यथाविधि ।
सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभास्कराम् ॥

---

१ (क) अनामयम् ।

योगियाज्ञवल्क्यः—

ह्रासवृद्धौ च सततं दिवसानां[1] यथाक्रमम्।

सन्ध्या मुहूर्त्तमाचन्तु ह्रासे वृद्धौ च सा[2] स्मृता॥

सन्धौ सन्ध्यामुपासीत नास्तगे नोदिते रवौ।

मुहूर्त्तो नाड़ीद्वयम्।

याज्ञवल्क्यः—

स्नानमब्दैवतैर्मन्त्रैर्मार्ज्जनं प्राणसंयमः।

सूर्य्यस्याप्युपस्थानं गायत्र्याः प्रत्यहं जपः॥

प्राणानायम्य संप्रोक्ष्य त्र्यृचेनाब्दैवतेन तु।

जपन्नासीत सावित्रीं प्रत्यगातारकोदयात्॥

सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्य्यदर्शनात्।

अब्दैवतैरापो हिष्ठेत्यादिभिः संप्रोक्षणं देवतीर्थस्थैः कुशैः शिरसि जलविन्दुप्रक्षेपः।

तथा छन्दोगपरिशिष्टे कात्यायनः—

शिरसो मार्ज्जनं कुर्य्यात् कुशैः सोदकविन्दुभिः।

सूर्य्यस्याप्युपस्थानं सौरेण मन्त्रेण, उदुत्यं जातवेदसमित्यादिना प्रकाशनं, प्रत्यक् पश्चिमाभिमुखः, प्राक् पूर्व्वमुखः।

योगियाज्ञवल्क्यः

ॐकारं व्याहृतीः सम्यक् गायत्रीं शिरसा सह।

आपो हिष्ठा ऋचस्तिस्रः सूक्तञ्चैवाघमर्षणम्॥

आदित्यरक्षणार्थाय सायं प्रातर्दिने दिने।

१ (क) दिनरात्र्योः। २ (ख) समा स्मृता।

सृष्टं स्वयम्भुवा पूर्वं ब्रह्मणो यन्मुखं स्मृतम् ॥
यावन्तो हि विकर्म्मस्थाः पृथिव्यां वालिशा द्विजाः।
तेषान्तु पावनार्थाय सन्ध्या सृष्टा स्वयम्भुवा ॥
सन्ध्या उपासिता येन विष्णुस्तेन उपासितः।

*विकर्म्मस्थाः विहिताकर्त्तारः शास्त्रनिषिद्धकर्त्तारश्च, वालिशाः ज्ञानशून्याः।*

*तथा—*

त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः।
प्राद्रवन्ति सहस्रांशुमुदयन्तं दिने दिने ॥
अहन्यहनि ते सर्व्वे सूर्य्यमिच्छन्ति खादितुम्।
अथ सूर्य्यस्य तेषान्तु युद्धमासीत् सुदारुणम् ॥
ततो देवगणाः सर्व्वे ऋषयश्च तपोधनाः।
सन्ध्येति तमुपासीना यत् क्षिपन्ति महज्जलम् ॥
ॐकारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम्।
तेन दह्यन्ति ते दैत्या वज्रीभूतेन वारिणा ॥

तं सूर्य्यं, ॐकारब्रह्मसंयुक्तं ॐकारात्मकेन ब्रह्मणा संयुक्तम्।

एतद्विदित्वा यो विप्र उपास्ते संशितव्रतः।
दीर्घमायुः स विन्देत सर्व्वपापैः प्रमुच्यते ॥
प्रातःसन्ध्या तु गायत्री सावित्री मध्यमा स्मृता।
या भवेत् पश्चिमा सन्ध्या सा विज्ञेया सरस्वती।
श्वेता भवति गायत्री सावित्री रक्तवर्णिका।
कृष्णा सरस्वती ज्ञेया सन्ध्यात्रयमुदाहृतम् ॥

त्रयाणाञ्चैव देवानां ब्रह्मादीनान्तु सङ्गमः।
सन्धिः सर्व्वसुराणाञ्च सन्ध्या तेन उदाहृता॥
गरीयसी च भूतानां तस्मात् पैत्री तनुर्हि सा।

पैत्री तनुः *पितामहस्य शरीरम्।*

*सन्धिते तु परे सूक्ष्मे निर्गुणे गुणबोधिनि।*
प्रधानपुरुषातीते सन्धिते सन्धिरुच्यते॥

व्यासः—

कृत्वोङ्कारञ्च गायत्रीं निबध्नीयात् शिखां ततः।
पुनराचम्य हृदयं नाभिं स्कन्धौ च संस्पृशेत्॥

अस्यार्थः—

यदि सन्ध्योपासनकाले मुक्तकेशः स्यात्तदानीं शिखा बन्ध-नीया न तु समन्त्रकत्वार्थं पूर्व्वशिखामोचणं कर्त्तव्यमिति।

पुनर्योगियाज्ञवल्क्यः—

सन्ध्यात्रयन्तु कर्त्तव्यं द्विजेनात्मविदा सदा।

आत्मविदा शरीराद्भिन्नं नित्यं पारलौकिकमात्मानं विजानता।

प्रसङ्गात्स्नानमाह—

उभे सन्ध्ये तु स्नातव्यं ब्राह्मणैश्च गृहाश्रितैः।
तिसृष्वपि सन्ध्यासु स्नातव्यन्तु तपस्विना॥

गृहाश्रितैः गृहस्थैः। तपस्विना वानप्रस्थादिना।

कालदोषादसामर्थ्यान्न शक्नोति यदा ह्यसौ।
तदा स्नात्वा ऋषिभ्यस्तु मन्त्रैर्दृष्टन्तु मार्ज्जनम्॥

कालदोषात् स्नानप्रतिबन्धकात्यन्तशीतादेः, असामर्थ्यात् स्नान-

प्रतिबन्धकरोगाद्युपघातात्। मन्त्रैर्मार्ज्जनं दृष्टं ऋषिभ्यो मन्त्रान् ज्ञात्वा मार्ज्जनं कुर्य्यादित्यर्थः।

तानाह—

> अत्र आपस्तु द्रुपदा, आपो हिष्ठाऽघमर्षणम्।
> एतैश्चतुर्भिर्मन्त्रैश्च मन्त्रस्नानमुदाहृतम्॥

अत्र आपो धन्वन्या इति कठब्राह्मणम्। चतुर्भिरित्यत्र ब्राह्मणानां (मन्त्राणां) चतुष्टयं सूक्तापेक्षया ऋचाश्चतुरधिकत्वात्।

> स्नानमब्दैवतैर्मन्त्रैर्मार्ज्जनं प्राणसंयमः।
> अघमर्षणसूक्तेनाश्वमेधावभृत्समम्॥
> अप्रायत्ये समुत्पन्ने स्नानमेव तु कारयेत्।
> पूर्व्वोद्दिष्टैस्तथा मन्त्रैरन्यथा मार्ज्जनं स्मृतम्॥
> अघमर्षणसूक्तस्य ऋषिरेवाघमर्षणम्।
> अनुष्टुभं भवेच्छन्दो भाववृत्तस्य दैवतम्॥

भाववृत्तो धाता भावे भावात्मके जनानभिजनयितुं वृत्तः प्रवृत्त इति व्युत्पत्त्या।

> अश्वमेधावभृथके विनियोगोऽस्य कल्पितः।
> सर्व्वपापापनोदनार्थं स्मृतिकारैरुदाहृतम्॥

तथा—

> कृत्वा लोकानपीमांस्त्रींस्त्रिः पठेदघमर्षणम्।
> तथाश्वमेधावभृथ एवन्मनुरब्रवीत्॥
> यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः।
> तथाघमर्षणं सूक्तं सर्व्वपापापनोदनम्॥

सिन्धुद्वीपं भवेदार्षं गायत्री छन्द उच्यते ।
आपस्तु दैवतं प्रोक्तं विनियोगस्तु मार्ज्जने ॥
सर्व्वत्र पावकं कर्म अङ्गानां समुदाहृतम् ।
कोकिलो राजपुत्रस्तु द्रुपदाद्यार्ष उच्यते ॥
अनुष्टुभं भवेच्छन्द आपस्तस्य तु दैवतम् ।
सौत्रामण्यावभृथके स्नाने तद्विनियोगकः ॥
द्रुपदा नाम सा देवी यजुर्वेदे प्रतिष्ठिता ।
अन्तर्जले त्रिरावृत्या मुच्यते ब्रह्महत्यया ॥
आपः पाण्योः समादाय त्रिःपठेद्द्रुपदां ऋचम् ।
तत्तोयं मूर्द्ध्नि विन्यस्य सर्व्वपापैः प्रमुच्यते ॥
एवं ज्ञात्वा तु मन्त्राणां प्रयोगं द्विजसत्तमाः ।
सन्ध्यामुपासते यद्वद्यथावत्तन्निबोधत ॥

अत्र च—

प्रणवव्याहृति सावित्री शिरसाम्मिलितानां प्राणायामे विनियोगान्मिलितानां ऋष्यादिकं स्मृत्वा प्राणायामोऽनुष्ठेयः ।

अन्येषान्तु मन्त्राणां तत्तन्मन्त्रपूर्व्वसमय एव ऋष्यादिकं स्मरणीयं न तु पठनीयं पाठे प्रमाणाभावात् न्यायप्राप्तमन्त्रपाठानन्तर्य्यभङ्गप्रसङ्गाच्च । एवं ज्ञात्वेति याज्ञवल्क्यविरोधाच्च । एतच्चावश्यमनुष्ठेयम् ।

तदुक्तं—

आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन सर्व्वत्रैव विशेषतः ॥ इति ॥

एवञ्चोङ्कारस्य श्वेतवर्णकथनं गायत्र्याश्चाग्निमुखवर्णनं स्तुतिमात्रं स्नध्यादिकस्मरणे पाठिकक्रमो ग्राह्यः ।

ऐशान्यभिमुखो भूत्वा शुचिः प्रयतमानसः ।
आचान्तः पुनराचामेत् [१]ऋतमन्त्राभिमन्त्रितम् ॥

ऋतमन्त्रमिति—

ऋतञ्च सत्यञ्चाभीध्येत्याद्यभिमन्त्रितम् ।
अन्तरं शुध्यति ह्येवमन्नपानमलीकृतम् ॥

शङ्खः—

इत्येवमुक्त्वा कर्त्तव्यं ततः सम्मार्ज्जनं जलैः ।
आपो हिष्ठेति तिसृभिर्यथावदनुपूर्व्वशः ॥
त्रिरावर्त्त्य तु सावित्रीं प्रणवं व्याहृतीस्तथा ।
मार्ज्जनञ्च तथा कृत्वा आपो हि ष्ठेति मार्ज्जयेत् ॥
साङ्गुष्ठञ्च प्रक्षिप्य ऊर्द्ध्वं सार्द्धां समुत्क्षिपेत् (?) ।
अधोभागविनिष्ठायामसुरा यान्ति संक्षयम् ॥
सर्व्वतीर्थाभिषेकश्च ऊर्द्ध्वं सम्मार्ज्जनाद्भवेत् ।
अघमर्षणसूक्तेन मार्ज्जनं कारयेत्ततः ॥
शन्न आपश्च द्रुपदां कामतस्तु प्रयोजयेत् ।
ॐकारपूर्व्वां गायत्रीं सलिङ्गामघमर्षणम् ॥
सातत्यं ब्रह्म चैतद्वै पुरा दृष्टं स्वयम्भुवा ।

१ (ख) ऋतमित्यभिमन्त्रितम् ।

एवं सम्मार्ज्जनं कृत्वा बाह्यशुद्ध्यर्थकारणात्।
तथाभ्यन्तरशुद्ध्यर्थं प्राणायामं समाचरेत्॥

सततमेव सातत्यं नित्यानुष्ठेयतया स्वार्थे प्रत्ययः। ब्रह्म वेदः कामस्य विषयमिदं ब्रह्म आप इत्यादि कामत इति श्रुतेः।

शङ्खः।

इत्येवमुक्त्वा कर्त्तव्यं ततः सम्मार्ज्जनं जलैः।
आपो हि ष्ठेति तिसृभिर्यथावदनुपूर्व्वशः॥
हिरण्यवर्णेति च वै[1] ऋग्भिस्तसृभिस्तथा।
शन्नो देवीति च तथा शन्न आपस्तथैव च॥
इदमापः प्रवहतां तथा मन्त्रमुदीरयेत्।

इत्येवमुक्त्वेति प्रपद्ये वरुणं देवमित्यादि मां रक्षन्तु सर्व्वतः इत्यन्तं मन्त्रकदम्बमुक्त्वेत्यर्थः।

पुनः शङ्खः।

आचम्यैवं पुरा प्रोक्ता तीर्थसम्मार्ज्जने तु ये।
मन्त्रास्तैरभिमन्त्रितं तोयं मूर्द्धि भूमौ तथा क्षिपेत्॥
क्षिप्तेन मूर्द्धि तोयेन पापमस्य प्रणश्यति।
भूमौ क्षिप्तेन हन्यन्ते त्वचिरादेव शत्रवः॥
व्याहृतीः कीर्त्तयेच्चैव तथैवाव्ययमक्षरम्।

आचम्यैवं अनन्तरोक्ताचमनकल्पेन तीर्थसम्मार्ज्जने अल्पजल-मार्ज्जने पुरा प्रोक्ता आपो हिष्ठेत्याद्याः, अव्ययमोङ्काररूपम्।

१ (ख)— वर्देदभिस्र तिसृभिस्तथा।

तथा तत्रैव—

उपस्पृशेत्तथा पश्चान्मन्त्रेणानेन मन्त्रितः[१]।
अन्तश्चरसि भूतेषु गुहायां विश्वतो मुखः।
त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम्॥

उपस्पृशेदाचामेत्।

आचम्य च ततः पश्चादादित्याभिमुखो जलम्।
उदुत्यं जातवेदेति मन्त्रेणानेन च क्षिपेत्॥
एष एव विधि प्रोक्तः सन्ध्ययोश्च द्विजातिषु।

एष एव मध्याह्नसन्ध्योक्तः।

पूर्व्वां सन्ध्यां जपेत्तिष्ठन्नासीनः पश्चिमान्तथा।
ततो जपेत् पवित्राणि पवित्रं वाऽथ शक्तितः॥
ऋषयो दीर्घसन्ध्यत्वात् दीर्घमायुरवाप्नुयुः।

पवित्राणि अघमर्षणादीनि पवित्रमित्यादीनि च शक्त्युक्तानि दीर्घसन्ध्यत्वं दीर्घकालव्याप्य दीर्घसन्ध्याकरणञ्चैतत् दीर्घायुः-कामस्य, जपेतिकर्त्तव्यताऽग्रे वक्ष्यते।

छन्दोगपरिशिष्टे कात्यायनः—

अत ऊर्द्ध्वं प्रवक्ष्यामि सन्ध्योपासनिकं विधिम्।
अनर्हः कर्म्मणां विप्रः सन्ध्याहीनो यतः स्मृतः॥
सव्ये पाणौ कुशान् कृत्वा कुर्य्यादाचमनक्रियाम्।
सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः॥

उपग्रहः बहवः कुशाः।

१ मूले धर्म्मितः।

पवित्रमधिकृत्यास्माभिः कृत्यरत्नाकर एवोक्तं तत्रैव ज्ञेयम् ।

कर्म्मान्ते[1] वारिणात्मानं परिक्षिप्य समन्ततः ।
शिरसो मार्ज्जनं कुर्य्यात् कुशैः सोदकविन्दुभिः ॥

कर्म्मान्ते पूर्व्वोक्त-कर्म्मावसाने आत्मानं सर्व्वतो वारिणा वेष्टयित्वा रक्षा कार्य्येत्यर्थः ।

प्रणवो भूर्भुवः स्वश्च सावित्री च तृतीयिका ।
अब्दैवत्यास्तृचश्चैव चतुर्थ इति मार्ज्जनम् ॥
भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः ।
महर्ज्जनस्तपः सत्यं गायत्री शिरसस्तथा[2] ॥
आपो ज्योती रसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् । इति शिरः ।
प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः ।

तथा—

एता एतां सहानेन तथैभिर्द्दशभिः सह ।
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ॥
करेणोद्धृत्य सलिलं घ्राणमासज्य तत्र च ।
जपेदनायतासुर्व्वा त्रिः सकृदाऽघमर्षणम् ॥

एताः व्याहृतीः एतां गायत्रीं अनेन शिरसा एभिः प्रणवैर्द्दशभिः सहेत्यर्थः अनायतासुर्व्वेति विकल्पात् आयतासुर्व्वेति ज्ञेयम् ।

मार्ज्जनान्तरं शङ्खः ।

उपस्पृश्य ततः पश्चान्मन्त्रेणानेन धर्म्मतः ।

१ मूले रक्षान्ते । २ (क)·शिरसा सह ।

अन्तश्चरसि भूतेषु गुहायां विश्वतो मुखः।
त्वं यज्ञस्त्वं वषट्कार आपो ज्योतीरसोऽमृतम्॥

एतच्चाचमनान्तरं कृतमपि शाखान्तरीयैरघमर्षणानन्तरमनुष्ठेयम् वाजसनेयिनान्तु द्रुपदाघमर्षणानन्तरमनुष्ठेयम्। शङ्खेनाप्येतदनन्तरं सूर्य्याञ्जलिदानोक्तेः।

अघमर्षणमुक्त्वा छन्दोगपरिशिष्टे कात्यायनः।
तथा [1]चार्कं प्रतिप्रोक्षेत् त्रिकेणाञ्जलिनाम्भसः॥
तच्चित्रमित्यृग्द्वयेनैवोपतिष्ठेद[2]नन्तरम्।

प्रतिप्रोक्षेत् क्षिपेत्। त्रिकेण प्रणव व्याहृति सावित्र्यात्मकेन। तच्चित्रमित्यृग् द्वयेनोपतिष्ठेदनन्तरं उदुत्यं जातवेदसमित्यादि चित्रन्देवानामिति च उद्वयन्तमसस्परीति च।

तथा—

सन्ध्याद्वयेऽप्युपस्थानमेतदाहुर्मनीषिणः।
[3]मध्याह्नेऽनुदये वापि विभ्राजादीच्छया जपेत्॥

विभ्राडिति विभ्राड्बृहदि इत्यर्थवाक्यं शिरःसङ्कल्पः। मन्त्रत्वात् ब्राह्मण पुरुषसूक्तस्य। इच्छयेति काम्यविषयं न तु नैत्यिकम्।

तदसंसक्तपार्ष्णिर्व्वा एकपादर्द्धपादपि।
कुर्य्यात् कृताञ्जलिर्व्वापि ऊर्द्धबाहुरथापि वा॥

तत् उपस्थानमसंसक्त-पार्ष्णिर्भूम्यामलग्नगुल्फभागः।

१ मूले उत्थायार्कं। २ क्वचित् दिवाकरम्।
३ मूले मध्येत्यस्य उपर्य्यस्य।

यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः।
भूयस्त्वं ब्रुवते तत्र कृच्छ्राच्छ्रेयो ऽव्यवाप्यते॥
तिष्ठेदोदयनात् पूर्व्वां मध्यमामपि शक्तितः।
आसीतोडूदयाच्चान्त्यां सन्ध्यां पूर्व्वं त्रिकं जपन्॥
एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम्।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते॥

आ उद्गमनादातारकोदयात् यदधिष्ठितं यदधीनम्।

सन्ध्यालोपस्य चाकर्त्ता स्नानशीलश्च यो द्विजः।
तं दोषा नोपसर्पन्ति गरुत्मन्तमिवोरगाः॥

मनुः—

उत्थायावश्यकं कृत्वा कृतशौचः समाहितः।
पूर्व्वां सन्ध्यां जपन् तिष्ठेत् काले चैवापरां चिरम्॥
ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः।

आवश्यकं मूत्रपुरीषादि-कर्म्म चिरमित्युभयोः सन्ध्ययोः सम्ब-द्धत्वं दीर्घकालत्वं दीर्घकालव्याप्तिः।

तथा।—

आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः।
शुचौ देशे जपन् जप्यमुपासीत यथाविधि॥
पूर्व्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमार्क्कदर्शनात्।
पश्चिमान्तु समासीनः सम्यगृक्षविभावनात्॥
अकारञ्च उकारञ्च मकारञ्च प्रजापतिः।
वेदत्रयं निराहत्य भूर्भुवः स्वरितीति च॥

त्रिभ्य एव च वेदेभ्यः पादं पादमदूदुहत्।
त(ऽ)दित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥
एतदक्षरमेतान्तु जपन् व्याहृतिपूर्व्विकाम्।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते॥
एतदक्षरं प्रणवं वेदपुण्येन वेदजपपुण्येन।
सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः।
महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते॥
विष्णुपुराणे—
सर्व्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः॥
विभ्रमो भयं विनैव व्याकुलता।
योगियाज्ञवल्क्यः—
सन्ध्या येन न विज्ञाता न च सन्ध्याप्युपासिता।
जीवन्नेव भवेच्छूद्रो मृतः श्वा चैव जायते॥
असमाप्तेश्चोत्सृजेद्यस्तु स विप्रः शूद्रसम्मितः।
प्रायश्चित्ती भवेच्चैव लोके भवति निन्दितः॥
मनुः—
नानुतिष्ठति यः पूर्व्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्बहिष्कार्य्यः सर्व्वस्माद्द्विजकर्म्मणः॥
दक्षः—
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु।
यदन्यत् कुरुते कर्म्म न तस्य फलभाग्भवेत्॥

बौधायनः—

अपि चात्र प्रजापतिगीतौ श्लोकावुदाहरन्ति ।

अनागतां तु ये पूर्व्वामतिक्रान्तान्तु पश्चिमाम् ।
सन्ध्यां नोपासते विप्राः कथन्ते ब्राह्मणाः स्मृताः ॥
सायं प्रातस्तथा सन्ध्यां ये नो विप्रा उपासते ।
कामं तान् धार्म्मिको राजा शूद्रकर्म्मसु योजयेत् ॥

शातातपः—

अनागतान्तु यः पूर्व्वां सादित्याञ्चैव पश्चिमाम् ।
नोपासीत द्विजः सन्ध्यां सासकौ[1] ब्राह्मणः स्मृतः ॥

अङ्गिराः—

उभे सन्ध्ये तु यो विप्रो मौनमास्ते समाश्रितः ।
दिव्यम्वर्षसहस्रन्तु ब्रह्मलोके महीयते ॥

अत्रि-शङ्ख-वशिष्ठाङ्गिरो-पैठीनसिबौधायनाः—

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥

आयतप्राणो नियतप्राणपवनः नियमश्च पूरके आकर्षणं कुम्भके धारणं रेचके त्याग इति ।

तदुक्तं योगियाज्ञवल्क्येन—

नासिकाकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते ।
कुम्भको निश्चलश्वासो नीयमानस्तु रेचकः ॥
नीलोत्पलदलश्यामं नाभिदेशे प्रतिष्ठितम् ।

१ (ख) स मक्षोऽ (क) सासको— ।

चतुर्भुजं महात्मानं पूरकेणैव चिन्तयेत्।
कुम्भकेन हृदि स्थाने ध्यायेच्च कमलासनम्॥

पूरकेणेत्यादौ तृतीया सप्तम्यर्थे।

ब्रह्माणं गौरवर्णाङ्गं चतुर्वक्त्रं पितामहम्।
रेचकेनेश्वरं विद्याल्ललाटस्थं महेश्वरम्।
शुद्धस्फटिकसङ्काशं निर्म्मलं पापनाशनम्॥

गौरमत्र रक्तपरं रक्तं प्रजापतिं ध्यायेदिति व्यासस्मृतेः।

पुनर्योगियाज्ञवल्क्यः,—

पूरक-कुम्भक-रेचकैः प्राणायामस्त्रिलक्षणो ज्ञेयः।

त्रिलक्षणस्त्रिविधः एवञ्च प्रत्येकमेव प्राणायामत्वात् प्रत्येकमेव त्रिरावृत्तमन्त्रपाठः। एतावतैव प्राणायामत्रयसिद्धिः। अतएव ततोऽन्ते शुद्ध्यते त्रिभिरित्युपसंहारः।

व्यासः,—

आदानं रोध उत्सर्गो वायोस्त्रिस्त्रिः समभ्यसेत्।
ब्रह्माणं केशवं शम्भुं ध्यायेदेताननुक्रमात्॥

त्रिस्त्रिर्नवधा अयञ्च नवधाभ्यासः पक्षान्तरम्।
त्रिविधं केचिदिच्छन्ति तथैव नवधाऽपरे॥

इति योगियाज्ञवल्क्येनाभिधानात्। अनुक्रमात् शास्त्रान्तरोक्तक्रमेण।

एतेन— विष्णुपूर्व्वकमेव ध्यानम्। ब्रह्मपूर्व्वकध्यानमिति पक्षान्तरम्। प्राणायामे कुम्भकमात्र एव मन्त्रपाठः। इत्याद्यसत्पक्षास्तु शिष्टापरिगृहीतत्वादेवोपेक्षिताः।

प्राणायामोत्तरमाचमनेषु च प्रातःसूर्य्यश्चेत्यादिमन्त्रः। मध्याह्ने आप इति मन्त्रः। सायं अग्निश्चेत्यादि मन्त्रः॥

तद्यथा मैत्रायणीय गृह्यपरिशिष्टम्—

प्रातः सूर्य्यश्च मेत्युक्त्वा सायमग्निश्च मेति च।
आपः पुनन्तु मध्याह्ने कुर्य्यादाचमनन्तथा॥

पूरक-कुम्भक-रेचकैर्म्मिलित्वा एक एव विनियोक्तव्यः। आचम्याग्निश्च मा मन्युश्चेति सायमपः पीत्वा सूर्य्यश्च मा मन्युश्चेति प्रात इति बौधायनवाक्यञ्च वाजसनेयिनां नियताचार इति।

वृहस्पतिः,—

वद्धासनं संनियम्य[1] स्नात्वाचार्य्यादिकन्तथा।
सन्निमीलितदृङ्मौनी प्राणायामं समभ्यसेत्॥

स्वमात्मानम्।

शङ्खः,—आदौ देवतामार्षं छन्दश्च संस्मरेत्।

अथास्याः सविता देवता ऋषिर्विश्वामित्रो गायत्री छन्दः। ॐकारस्य प्रणवो व्याख्यातः।

ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं इति महाव्याहृतयः।

आपोज्योती रसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् इति शीर्षम्।

दक्षः—

सविता देवता यस्या मुखमग्निस्त्रिपाद् स्थितः।
विश्वामित्रऋषिश्छन्दो गायत्री सा विशिष्यते॥

१ (ग) नियम्यास्तून्।

योगियाज्ञवल्क्यः,—

प्राणस्यायमनं कृत्वा आचामेत् प्रयतोऽपि सन्।
आन्तरं ख्रियते यस्मात्तस्मादाचमनं स्मृतम्॥

छन्दोगानान्तु,—

अहश्च-रात्रिश्चादित्यश्च मा पुनातु स्वाहेति प्रातः। मध्याह्ने आपः पुनन्त्विति। सायं रात्रिश्च मा वरुणश्च मा पुनातु स्वाहेति गोभिल एव प्रमाणम्। सकलच्छन्दोगसम्प्रदायश्च।

कात्यायनः,—

पुष्पाण्यम्बुमिश्राणि ऊर्द्ध्वमुत्क्षिप्योर्द्ध्वबाहुः सूर्य्यमुदीक्षेत्। उदुत्यं उद्वयन्तं चित्रं तच्चक्षुरिति गायत्र्या च यथाशक्ति।

योगियाज्ञवल्क्यः,—

प्रणवो भूर्भुवः स्वः स्वाङ्गानि हृदयादयः।

गायत्र्यावाहने पुनर्योगियाज्ञवल्क्यः,—

आवाह्य यजमानेन तेजोसीति विधानतः।
तत्रावाह्य जपित्वा च नमस्कृत्य विसर्ज्जयेत्॥

गायत्रीमधिकृत्य शातपथश्रुतिः।

गायत्र्यस्येकपदी द्विपदी त्रिपदीत्यादि।

अत्रैव विनियोगखण्डे बौधायनः। सावदोमित्यस्य मन्त्रस्य विनियोगकार्य्यता दर्शिता।

व्यासः—

आवाहयेत्तु गायत्रीं सर्व्वपापप्रणाशिनीम्।
आगच्छ वरदे देवि त्र्यक्षरे ब्रह्मवादिनि॥

गायत्री छन्दसां मातर्जपे मे सन्निधीभव।
गायन्तं त्रायते यस्मात् गायत्री त्वं ततः स्मृता॥

छन्दोगानां विसर्ज्जनमन्त्रः।

ॐ उत्तरे शिखरे जाते भूम्यां पर्व्वतवासिनि।
ब्रह्मणा समनुज्ञाते गच्छ देवि यथासुखम्॥

॥ इति गृहस्थरत्नाकरे सन्ध्योपासनतरङ्गः॥

---

## अथ जपविधिः।

तत्र योगियाज्ञवल्क्यः,—

जपस्येह विधिं वक्ष्ये यथाकालं विधानतः।
जलान्ते वाग्न्यगारे वा जले देवालयेऽपि वा॥
गवां गोष्ठे पुण्यतीर्थे सिद्धक्षेत्रेऽथवा गृहे।
गृहे त्वेकगुणं जप्यं नद्यान्तु त्रिगुणं स्मृतम्॥
गवां गोष्ठे शतगुणमग्न्यागारे शताधिकम्।
सिद्धक्षेत्रेषु तीर्थेषु देवतायाश्च सन्निधौ॥
[1][सहस्रं शतकोटीनमनन्तं विष्णुसन्निधौ।]
तिष्ठंश्चेद्वीक्षमाणोऽर्क्कं जपं कुर्य्यात् समाहितः॥
अन्यथा प्राङ्मुखः कुर्य्याद्वक्ष्यमाणक्रमेण तु।
प्रागग्रेषु कुशेष्वेवमासीनस्त्वासने शुभे॥
नात्युच्छ्रिते(च्चै)र्नातिनीचैर्दर्भपाणिः सुसंयतः।
स्फटिकेन्द्राक्ष-रुद्राक्ष-पुत्रजीवसमुद्भवैः॥

१ (ख) पुस्तके [ ] चिह्नित पङ्क्तिर्नास्ति।

अक्षमाला तु कर्त्तव्या उत्तमा ह्युत्तरोत्तरा ।
कौश्यादिका भवेद्वृद्धिरक्षमाला विशेषतः ॥
जपस्य क्रियमाणस्य तस्मात् श्रेष्ठा परापरा ।
अभावे त्वक्षमालायाः कुशग्रन्थ्याऽथ पाणिना ॥
जप एवं हि कर्त्तव्य एकाग्रमनसैव हि ॥

इन्द्राक्षः आरुकमिति पारिजातः । कौश्यादिकेत्यादि-शब्देनार्बुदादिसंख्याग्रहणम् ।

शङ्खः,—

कुशवृष्यामासीनः कुशोत्तरीयवान् कुशपवित्रपाणिरुदङ्मुखः [१]पूर्व्वाभिमुखो वाऽक्षमालामादाय देवतां ध्यायन् जपं कुर्य्यात् ॥

सुवर्णमणिमुक्तास्फटिक-पद्माक्षेन्द्राक्ष-पुत्रञ्जीवकानामन्यतमा-दक्षमालां कुर्य्यात् । कुशग्रन्थिकृतां वामहस्तोपयामैर्वा गणयेत् ॥

देवतां ध्यायन्निति देवताध्यानस्य जपाङ्ग[२]विधानेन यत्र न देवताविशेषविधिः तत्रापि मन्त्रप्रकाश्या देवता ध्येया, वृषी खल्पमासनं हस्तोपयामः अङ्गुलिग्रन्थिः ।

नरसिंहपुराणे,—

त्रिविधो जपयज्ञः स्यात् तस्य भेदं निबोधत ।
वाचिकश्च उपांशुश्च मानसश्च त्रिधा मतः ।
त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः ॥
यदुच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः ।
मन्त्रमुच्चारयेद्व्यक्तं जपयज्ञः स वाचिकः ॥

---

१ (ख) सूर्य्याभिमुखो वा । २ (ख) जपाङ्गतया ।

शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ च चालयेत् ।
किञ्चिच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः ॥
धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात् पदम् ।
शब्दार्थचिन्तनाभ्यासः स उक्तो मानसो जपः ॥

एवञ्च त्रिविधस्य जपस्य विधानात् ।

नोच्चैर्जप्य बुधः कुर्य्यात् सावित्र्यास्तु विशेषतः ।

इति शङ्खोक्तनिषेधोऽन्यफलाभिप्रायः ।

ध्यायेत मनसा मन्त्रं जिह्वोष्ठौ न विचालयेत् ।
न कम्पयेच्छिरोग्रीवं दन्तं नैव प्रकाशयेत् ॥

इति योगियाज्ञवल्क्योक्तं मानसजपविषयं मन्तव्यम् ।

योगियाज्ञवल्क्यः,—

न चङ्क्रमन्न विहसन्न पार्श्वमवलोकयन् ।
नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ॥
न पदा पादमाक्रम्य न चैव हि तथा करौ ।
न वा समाहितमना न च संश्रावयन् जपेत् ॥
प्रच्छन्नानि च दानानि ज्ञानञ्च निरहङ्कृतम् ।
जप्यानि च सुगुप्तानि एषां फलमनन्तकम् ॥
उपांशुजपशक्तस्य शंस्याच्छतगुणो भवेत् ।
सहस्रं मानसः प्रोक्तो यस्माद्ध्यानसमो हि सः ॥

शंस्यादुच्चैः पठनीयादिति कल्पतरुः ।

न क्लिन्नवासा क्लिन्नाङ्गो जपादीनाचरेद्बुधः ।
वस्त्रनिश्च्योतनं प्रेताः परिवार्य्य पिबन्ति हि ॥

अतादृते नार्द्रवासा नैकवासाः समाचरेत्।
न जीर्णेन न नीलेन परिक्लिष्टेन वा जपेत्॥
परिवार्य्य वेष्टयित्वा क्लिष्टेन मलिनेन च।
यक्ष-राक्षस-भूतानि सिद्धविद्याधरा गणाः॥
हरन्ति प्रसभं यस्मात् तस्माद्गुप्तं समाचरेत्।
जपकाले न भाषेत व्रतहोमादिकेषु च॥
एतेष्वेवावसक्तान्तु यद्यागच्छेद्द्विजोत्तमः।
अभिवाद्य ततो विप्रं योगक्षेमञ्च कारयेत्[1]॥
स्त्री-शूद्र-पतितांश्चैव रासभञ्च रजस्वलाम्।
जपकाले न भाषेत जपहोमादिकेषु च॥
तूष्णीमासीत तु जपंश्चाण्डालपतितादिकान्।
दृष्ट्वा तान् वार्य्युपस्पृश्याभाष्य स्नात्वा पुनर्जपेत्॥
आचम्य प्रयतो नित्यं जपेदशुचिदर्शने।

चङ्क्रमणं चलनं अपाश्रितः कुड्यादाविति शेषः।
न चैव हि तथा करौ आक्रमेदित्यनुषङ्गः। करौ पदा आक्रम्येति शेषः। इति कल्पतरुः। एतेष्वेव जपहोमादिषु अवसक्तं प्रवृत्तम्।

वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः।
तं ह्यस्याहुः परं धर्ममुपधर्मोऽन्य उच्यते॥

वेदमेवेत्यावश्यकतायां एवकारः फलाधिक्याभिप्रायको वा परमो धर्म इत्युपसंहृतेः। अतो न जपान्तरनिषेधः।

१ (ख) कीर्त्तयेत्।

अत्रिः,—

सर्व्ववेदपवित्राणि वक्ष्याम्यहमतःपरम्।
येषां जपैश्च होमैश्च पूयन्ते तमसा[1]वृताः॥
अघमर्षणं देवव्रतः शुद्धवत्यस्तरत्समाः।
कुष्माण्ड्यः पावमान्यश्च शुक्रा सावित्र्यमेव च॥
विमलं शिरः सङ्कल्पं विवर्णं रोहितं ततः।
भारुण्डानि च सामानि गायत्र्यं भैरवन्तथा॥
शतरुद्रियमथर्व्वशिरस्त्रिसुपर्णं महाव्रतम्।
अभीपक्षाः पदस्तोमाः सामानि व्याहृतीस्तथा॥
अब्लिङ्गा बार्हस्पत्यश्च वाक्सूक्तं मध्वृचस्तथा।
गोसूक्तञ्चाश्वसूक्तञ्च इन्द्रसूक्ते च सामनी॥
त्रीण्याज्यदोहानि रथन्तरञ्च
अग्निव्रतं वामदेव्यं हृहञ्च।
एतानि जप्तानि पुनन्ति जन्तुम्
जातिस्मरत्वं लभते य इच्छेत्॥

देवव्रतः देवव्रतस्यैनस इत्यादिमन्त्रः। शुक्रा[2] सावित्र्यं शुक्र-प्रकाशिका जातवेदस इत्यादि ऋक्। विमलशब्दो हंसः शुचिषदित्यादि। शिरः सङ्कल्पः— यज्जाग्रत इत्यादि षडृचः। भारुण्डानि यत्ते कृष्ण इत्येकविंशति सामानि। शतरुद्रियं नमस्ते रुद्रमन्यवे इत्येकादशानुवाकाः।

---

[1] मूले कल्मषाहताः। [2] ख-दुर्गा दुर्गाप्रकाशिका।

त्रिसुपर्णं ब्रह्मसेतुमित्यनुवाकत्रयं तैत्तिरीयश्रुतौ प्रसिद्धम्।
महाव्रतं राजनं साम अभिषङ्गा पुरोज्योति वो नुम[1] इत्यादि-सामत्रयं। षट्स्तोमाः सामचतुष्कं। सामानि व्याहृतीस्तथेति व्याहृतिसामानीत्यर्थः। अव्लिङ्गा आणो हिष्ठेत्येवमादयः। बार्हस्पत्यं गणानान्त्वामित्यादि ऋक्। वाक्सूक्तं प्रथमं वाच्येऽग्नि-मित्यादि। मध्वृचः-मधुवाता इत्यादि तिस्रः। गोसूक्ताश्वसूक्ते सामनी यदित्राहं यथाऽन्नमित्यस्यां ऋचि प्रसिद्धे। इन्द्रसूक्ते सामनी इति एताविन्द्रैस्तु वामेत्यस्यामृचि प्रसिद्धे। अत्रि-स्मृतौ चैतान्यधिकानि।

योगियाज्ञवल्क्यः—

अथोपतिष्ठेदादित्यं मूर्द्ध्नि पुष्पान्वितं जलम्।
प्रक्षिप्योद्वयमुदुत्यं चित्रं तच्चक्षुरित्यपि॥
हंसः शुचिषदेतानि शुभानि पावनानि च।
एतज्जपेदूर्द्ध्वबाहुः सूर्य्यमीक्ष्य समाहितः॥
गायत्र्या च यथाशक्ति चोपस्थाय दिवाकरम्।
विभ्राडित्यनुवाकेन सूक्तेन पुरुषस्य च॥
शिरःसङ्कल्पेन तथा मण्डलब्राह्मणेन च।
दिवाकीर्त्त्यैश्च सौरैश्च मन्त्रैरन्यैश्च शक्तितः॥
अपयज्ञो हि कर्त्तव्यः सर्व्वदेवप्रणीतकैः।
पवित्रैर्विविधैश्चान्यैर्गुह्योपनिषदा तथा॥

१ (ग) ज्योतिरोन्नम।
२ (क) गुह्योपनिषदा।

अध्यात्मविद्या विविधा जप्तव्या जपसिद्धये।
प्रदक्षिणं नमस्कृत्य समावृत्योपविश्य च॥
दर्भेषु दर्भपाणिः स्यात् प्राङ्मुखः प्राञ्जलिः स्थितः।
अध्यायैस्तु यथाशक्ति ब्रह्मयज्ञं समाचरेत्॥

विभ्राड़ित्यादयः सप्तदश ऋचः। पुरुषसूक्तं सहस्रशीर्षेत्यादि षोड़शर्च्चः। शिरःसङ्कल्पो यज्जाग्रतो दूरमित्यादि। मण्डलब्राह्मणं तदेतन्मण्डलं तपतीत्यादि त्रयोविंशतिकण्डिकाः।

दिवाकीर्त्त्या ऋचस्त्वाचमित्याद्यास्तारोऽध्याया इति पारिजातः। अध्येतिमन्त्रदाये दिवापठनीयैः शतरुद्रादिभिरिति कल्पतरुः।

अन्यैरिति सौरैर्मन्त्रैर्मित्रस्येत्याद्यैः। पवित्रैः यद्देवा इत्याद्यैः। गुह्यमप्रकाश्यं जीवब्रह्मणोरैक्यं तत्प्रकाशको वेदभागो गुह्योपनिषदः।

बौधायनः,—

अप आचम्य दर्भेष्वासीनो दर्भान् धारयमाणः सावित्रीं सहस्रकृत्व आवर्त्तयेत्। शतकृत्वोऽपरिमितकृत्वो वा दशावराम्। इत्यनेन दशत ऊर्द्ध्वं शतादर्व्वागपरिमितत्वम्।

मनुः,—

ॐकारपूर्व्विकास्तिस्रो महाव्याहृतयोऽव्ययाः।
त्रिपदा चैव गायत्री विज्ञेया ब्रह्मणो मुखम्॥
योऽधीतेऽहन्यहन्येतास्त्रीणि वर्षाण्यतन्द्रितः।
स ब्रह्म परमभ्येति वायुभूतः खमूर्त्तिमान्॥

एता व्याहृतिसहिता गायत्रीः, वायुभूतो वायुवत्कामप्रक्रियः।

स्वमूर्त्तिमान् इन्द्रियाश्रय एतेन जीवस्यैव ब्रह्म परमभ्येतीत्यर्थः ।
यद्वा स्वमूर्त्तिमान् ज्ञानादिविशेषगुणशून्य इत्यर्थः ।

तथा,— एकाक्षरं परं ब्रह्म प्राणायामः परन्तपः ।
सावित्र्यास्तु परं नास्ति मौनात् सत्यं विशिष्यते ॥
क्षरन्ति सर्व्वा वैदिक्यो जुहोति-यजति-क्रियाः ।
अक्षरन्त्वक्षरं ज्ञेयं ब्रह्मा चैव प्रजापतिः ॥

अक्षरन्ति विनाशिन्यो भवन्ति अक्षरमोंकारः तस्य मोक्षफल न क्षरतीत्यक्षरं प्रजापतित्वञ्च प्रजाप्रतिपादकत्वेन ॐकारस्य बोध्यम् ॥ अक्षरत्वं ब्रह्मत्वम् ।

यमः— ऋषयः ऊचुः—
किम्बै परमकं ब्रह्म किम्बै परमकन्तपः ।
उपवासात् परं किम्बै किम्बै मौनाद्विशिष्यते ॥

यम उवाच—
ॐकारः परमं ब्रह्म प्राणायामः परन्तपः ।
सावित्र्यास्तु परं नास्ति मौनात् सत्यं विशिष्यते ॥

अङ्गिरा—
प्रणवाद्यास्तथा वेदाः प्रणवे पर्य्यवस्थिताः ।
वाङ्मयं परमं सर्व्वमभ्यसेत् प्रणवन्ततः ॥
प्रणवे नित्ययुक्तस्य व्याहृतीषु च सप्तसु ।
त्रिपदायान्तु गायत्र्यां न भयं विद्यते क्वचित् ॥

शङ्खः— सावित्रीजप्यनिरतः स्वर्गमाप्नोति मानवः ।
सावित्रीजप्यनिरतो मोक्षोपायञ्च विन्दति ॥

तस्मात्सर्व्वप्रयत्नेन स्नातः प्रयतमानसः।

गायत्रीन्तु जपेद्भक्त्या सर्व्वकल्मषनाशिनीम्॥

मोक्षोपायस्तत्त्वबोधः।

याज्ञवल्क्यः—

वेदा अथ पुराणानि सेतिहासानि शक्तितः।

जपयज्ञार्थसिद्ध्यर्थं विद्याञ्चाध्यात्मिकीञ्जपेत्॥

मनुः—

जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः।

कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते॥

मित्र आदित्यः तद्देवताका ऋक् मैत्री सावित्री तत्प्रधानो ब्राह्मणो नित्यं सावित्रीजप्यनिरतः, अतो मैत्रः।

वशिष्ठः—

यथाग्निर्वायुना धूतो हविषा चैव दीप्यते।

एवं जप्यपरो नित्यं मन्त्रयुक्तः सदा द्विजः॥

अत्र च समस्तवेदाध्ययनवता आदावारभ्य वेदपाठेन स्वाध्यायः करणीयः। एकदेशाध्यायिना पुरुषसूक्तादिपाठेन सावित्रीमात्राध्यायिना पुराणपाठेनेति व्यवस्थेति पारिजातः।

याज्ञवल्क्यः—

शाकयावकभैक्ष्याणि पयोमूलफलानि च।

दधि सर्पिस्तथा ह्यापः प्रशस्ताः ह्युत्तरोत्तरं॥

चरवो ह्युपवासश्च भैक्ष्यं नक्तव्रतानि च।

एतान्यनुव्रतान्याहुः शस्तानि जपकर्म्मणि॥

अनश्राविताम्तरा ईषदसिद्ध ओदनस्तुरिह पूर्व्ववाक्ये उपात्तस्याग्रिमवाक्ये भैक्ष्यस्योपादानमुत्कर्षबोधनार्थम् । बिसं मृणालम् । हविष्यान्नानि यवादीनि । अनुव्रतानि जप-व्रतस्याङ्गानि । (काम्य)नैमित्तिकजपविधिविषयश्चैतत् । नित्यजपे पञ्चयज्ञावशिष्टभोजनविध्यनुरोधात् । अत्र शाकादीनां विकल्पः ।

भैक्ष्यविशेषेण जपारम्भे एकादश्युपवासोऽपि न कर्त्तव्य इति प्रकाशकारमतमनादेयम् । न ह्यत्र रागप्राप्तभोजनं विधीयते । अपि तु नियम्यते ततश्च जपप्रवृत्तो यदि भुङ्क्ते तदा शाकादिक-मेव । न तु भुङ्क्त एवेत्यर्थ इति भोजनस्याविधानात् ।

नरसिंहपुराणे,—

दर्भेषु दर्भपाणिः सन् प्राङ्मुखः सुसमाहितः ।
प्राणायामन्तु कुर्व्वीत यथाशक्तिमतन्द्रितः ॥
जपेदहरहः स्नात्वा सावित्रीं जपते द्विजः ।
अथ पुष्पाञ्जलिन्दत्वा भानवे ऊर्द्धवाहुकः ॥
उदुत्यञ्च जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि ।
प्रदक्षिणमुपावृत्य नमस्कृत्य ततः प्रभुम् ॥
पित्वर्षिगणदेवादीनद्भिः सन्तर्पयेत्ततः ।

॥ इति गृहस्थरत्नाकरे जपतरङ्गः ॥

---

# अथ तर्पणविधिः।

तत्र विष्णुः,—

स्नातश्चार्द्रवासा देवर्षिपितृतर्पणमम्भःस्थ एव कुर्य्यात्। परिवर्त्तितवासास्त्वेत्तीर्थतीरमुत्तीर्य्य।

याज्ञवल्क्यः—

स्नात्वा देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा।

देवान् ब्राह्मणादीन् अर्च्चयेत्तल्लिङ्गैर्मन्त्रैः पुष्पाक्षतादिभिः। पितॄंश्च श्राद्धेन।

शातातपः,—

तर्पणन्तु शुचिः कुर्य्यात् प्रत्यहं स्नातको द्विजः।
देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्॥

शुचिर्मन्त्रस्नानादिनाऽपि। प्रत्यहमिति वचनान्नित्याधिकारः।

विष्णुपुराणे,—

शुचिवस्त्रधरः स्नातो देवर्षिपितृतर्पणम्।
तेषामेव हि तीर्थेन कुर्व्वीत सुसमाहितः॥

तेषां देवपितॄणाम्।

छन्दोगपरिशिष्टे कात्यायनः,—

यवाद्भिस्तर्पयेद्देवान् सतिलाद्भिः पितॄनपि।
नामान्ते तर्पयामीति आदावोमिति च ब्रुवन्॥

ब्रह्माणं विष्णुं रुद्रं प्रजापतिं देवान् छन्दांसि वेदान् ऋषीन् पुराणानाचार्य्यान् गन्धर्व्वानितराचार्य्यान् सम्वत्सरं सावयवं देवी-रप्सरसो देवानुगान् नागान् सागरान् पर्व्वतान् सरितो नगान्

दिव्यान् मनुष्यान् यक्षान् रक्षांसि पिशाचान् सुपर्णान् भूतानि पशून् वनस्पतीन् ओषधीर्भूतग्रामं चतुर्विधमित्युपवीती। प्राचीनावीती यमं यमपुरुषं कव्यवालं नलं सोमं यममर्य्यमनन्तथा अग्निष्वात्तान् बर्हिषदः सक्षत् सक्षत्। अथ स्वान् पितॄन् मातामहादीनिति प्रतिपुरुषमभ्यर्चेत्। ज्येष्ठभ्रातृ-श्वशुरपितृव्यमातुलांश्च मातृपितृवंश्यांश्च। ये चान्ये मत्त उदकमर्हन्ति तांस्तर्पयामि इत्ययमवसानेऽञ्जलिः।

अथ श्लोकाः।

छायां यथेच्छेच्छरदातपार्त्तः
पयः पिपासुः क्षुधितोऽन्नमन्नम्।
बालो जनित्रीं जननीञ्च बालं
योषित् पुमांसं पुरुषश्च योषाम्॥
तथा भूतानि सर्व्वाणि स्थावराणि चराणि च।
विप्रादुदकमिच्छन्ति सर्व्वेऽभ्युदयकाङ्क्षिणः॥
तस्मात् सदैव कर्त्तव्यमकुर्व्वन् महतैनसा।
युज्यते ब्राह्मणः कुर्व्वन् विश्वमेतद्विभर्त्ति हि॥

पुराणानिति तु आचार्य्यविशेषणं, प्रतिपुरुषमभ्यर्चेदित्यनेन पित्रादीनां त्रयाणां मातामहादीनां त्रयाणामुदकाञ्जलिरावर्त्तते इत्युक्तम्।

जपानन्तरं योगियाज्ञवल्क्यः—

तत्र सन्तर्पयेद्देवानृषीन्देवगणांस्तथा।
ब्रह्माणन्तर्पयेत् पूर्व्वं विष्णुं रुद्रं प्रजापतिम्॥
देवांश्छन्दांसि वेदांश्च ऋषींश्चैव तपोधनान्।

आचार्य्यांश्चैव गन्धर्व्वानाचार्य्यानितरांस्तथा ॥
तथा देवानुगान्नागान् सागरान् पर्व्वतांस्तथा।
सम्वत्सरं सावयवं देवीरप्सरसस्तथा ॥
सरितोऽथ मनुष्यांश्च यक्षान्रक्षांसि चैव हि।
पिशाचांश्च सुपर्णांश्च भूतान्यथ पशूंस्तथा ॥
वनस्पतीनोषधीश्च भूतग्रामं चतुर्व्विधम्।
अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ॥
तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना।
आवाह्य पूर्व्ववन्मन्त्रैरास्तीर्य्य च कुशान् शुभान् ॥
प्रागग्रेषु सुरान् सम्यक् दक्षिणाग्रेषु वै पितॄन्।
सव्यं जानु ततोऽन्वाच्य पाणिभ्यां दक्षिणामुखः ॥
तन्लिङ्गैस्तर्पयेन्मन्त्रैः सर्व्वान् पितृगणांस्तथा।
मातामहांश्च सततं श्रद्धया तर्पयेद्बुधः।
प्राचीनावीत्युदकन्तु प्रसिञ्चेद्वै तिलान्वितम् ॥
यद्युद्धृतं प्रसिञ्चेत तिलान् संमिश्रयेज्जले।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥
दक्षिणे पितृतीर्थेन जलं सिञ्चेद्यथाविधि।
दक्षिणेनैव गृह्णीयात् पितृतीर्थसमीपतः ॥
तिलानामप्यलाभे तु सुवर्णरजतान्वितम्।
तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वाऽप्यथ ॥
कव्यवाडं नलं सोमं यममर्य्यमणन्तथा।
अग्निष्वात्तान् सोमपांश्च तथा वर्हिषदः पितॄन् ॥

यदि स्याज्जीवपितृक एतान् दिव्यान् पितॄंस्तथा।
येभ्यो वापि पिता दद्यात्तेभ्यो वापि प्रदापयेत्॥
एतांश्च वक्ष्यमाणांश्च प्रमीतपितृको द्विजः।
वसून्रुद्रांस्तथा दिव्यान् नमस्कारस्वधान्वितान्॥
एते सर्व्वस्य पितर एष्वायत्ताश्च मानुषाः।
आचार्य्यान् पितृसव्वांश्च पितृप्रभृतिनामतः॥
मन्त्रैश्च देयमुदकं पितॄणां प्रीतिवर्द्धनैः।
उदीरतामङ्गिरसस्त्वायन्त्वित्यूर्ज्जमित्यपि॥
पितृभ्य इति ये चेह मधुवाता इति त्र्यृचं।
पितॄन् ध्यायन् प्रसिञ्चेद्वै जपेन्मन्त्रान् यथाक्रमम्॥
तृप्यध्वमिति च त्रिर्व्वै ततः प्राञ्जलिना ततः।
नमो व इति जप्त्वा वै ततो मातामहान् सर्व्वान्॥
तर्पयेदानृशंस्यार्थं धर्म्मं परममास्थितः।
माता मातृस्वसा चैव मातुलानी पितृस्वसा॥
दुहिता च स्वसा चैव स्त्रियश्लिङ्गज्ञातिवान्धवाः।
नामतस्तु स्वधाकारैस्तर्प्याः स्युरनुपूर्व्वशः॥
सवर्णेभ्यो जलन्दद्यान्नान्यवर्णे कदाचन।
पूर्व्वं स्वपितरस्तर्प्याः पश्चादन्यांश्च तर्पयेत्॥
नास्तिक्यभावाद्यश्चापि न तर्पयति वै सुतः।
पिबन्ति देहनिस्रावं पितरोऽस्य जलार्थिनः॥

अन्वारम्भेन पश्चात्सव्येन पूर्व्ववन्मन्त्रैः याज्ञवल्क्यसंहितायां श्राद्धप्रकरणलिखितैर्व्विश्वेदेवा स आगत, उशन्तस्त्वा इत्यादि-

मन्त्रैः, तल्लिङ्गैः उदीरतामङ्गिर इत्यादिभिः पितृप्रकाशकैः। छन्दोगातिरिक्तपरमेतत् ॥

शङ्खः। स्नातः कृतजपोऽन्तर्ज्जानुरुदङ्मुखस्य तीर्थेन दिव्येन देवानुदकेन तर्पयेत्।

अन्तर्ज्जानुरिह जानुनोरन्तःकृतहस्तः। चकारः प्राङ्मुखतां समुच्चिनोति।

पद्मपुराणे—

ब्रह्माणन्तर्पयेत् पूर्व्वं विष्णुं रुद्रं प्रजापतिम्।
देवा यक्षास्तथा नागा गन्धर्व्वाप्सरसोऽसुराः ॥
क्रूराः सर्पाः सुपर्णाश्च तरवो [1]जृम्भगाः खगाः।
विद्याधरा जलाधारास्तथैवाकाशगामिनः ॥
[2]निराहाराश्च ये जीवाः पापे धर्म्मे रताश्च ये।
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥
कृतोपवीती देवेभ्यो नीवीती च भवेत्ततः।
मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा ॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ॥
सर्व्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा।
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥
प्रचेतसं वशिष्ठञ्च भृगुं नारदमेव च।
देवान् ब्रह्मऋषीन् सर्व्वान् तर्पयेदक्षतोदकैः ॥

१ (ग) जम्भगाः। २ (ख) पुस्तके निराधाराश्च।

अपसव्यन्ततः कृत्वा सव्यं जानु च भूतले ।
अग्निष्वात्तांस्तथा सौम्यान् हविष्मन्तस्तथोष्मपान् ॥
सुकालिनो बर्हिषदः तथा चैवाज्यपान् पुनः ।
तर्पयेच्च पितॄन् भक्त्या सतिलोदकचन्दनैः ॥
दर्भपाणिस्तु विधिना प्रेतांस्तान् तर्पयेत् पुनः ।
पित्रादीन्नामगोत्रेण तथा मातामहानपि ॥
सन्तर्प्य भक्त्या विधिवदिमम्मन्त्रमुदीरयेत् ।
ये ऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ॥
ते तृप्तिमखिलां यान्तु ये चास्मत्तोयकाङ्क्षिणः[१] ।

अत्र देवास्तृप्यन्तामित्यादिवाक्यैर्देवादीनान्तर्पणम्विधाय देवा-यक्षास्तथा नागा इत्यादि मन्त्रस्मरणङ्कुर्य्यान्नतु मन्त्रपाठः । स्नाने ध्यानमात्र, विनापि, यथा— वाऽनेन मन्त्रेण देवादितर्पणन्तथान्य-वाक्याऽस्मरणात् ॥

निवीती च भवेत्तत इति वचनात् ऋषितर्पणे नीवीतमिति भ्रमो हेयः । नीवीतस्य मनुष्यधर्म्मत्वेनैव तत्र तत्रोक्तेः ।

केचित् पुनः—अथ नीवीती ऋषींस्तर्पयामीति बौधायन-दर्शनात् मरीच्यादितर्पणेऽपि नीवीतमेवाहुः । तर्पयेदक्षतोदकै-रित्यत्राक्षतपदं यवपरं यवाद्भिस्तर्पयेदिति परिशिष्टदर्शनात् । अतो देव-ऋषितर्पणे यवा नियताः । पितृतर्पणे तु तिलोदकमिति तत्र तत्राभिधानात् तिला नियताः । तिलानामप्यलाभे तु सुवर्णरजतान्वितमित्यभिधानात्तिलाभावेऽपि तर्पणम्भवत्येव ।

१ (क) (ख) ये चास्मत्तोऽभिवाञ्छति ।

कात्यायनः,—

ब्रह्माणं तर्पयेत् पूर्व्वं विष्णुं रुद्रं प्रजापतिम् ।
देवांश्छन्दांसि वेदांश्च ऋषींश्चैव तपोधनान् ॥
आचार्य्यांश्चैव गन्धर्व्वानाचार्य्यानितरांस्तथा ।
सम्वत्सरं सावयवं देवीरप्सरसस्तथा ॥
तथा देवानुगान्नागान् सागरान् पर्व्वतांस्तथा ।
सरितोऽथ मनुष्यांश्च यक्षान्रक्षांसि चैव हि ॥
पिशाचांश्चैव भूतानि तथा चैव पशूनपि ।
वनस्पतींश्चौषधीश्च भूतग्रामश्चतुर्व्विधम् ॥

तृप्यतामित्योङ्कारपूर्व्वकम् । तथा नीवीती मनुष्यान् ।

सनकञ्च सनन्दञ्च तृतीयञ्च सनातनम् ।
कपिलञ्चासुरिञ्चैव वोढ़ुं पञ्चशिखन्तथा ॥

ततोऽपसव्यं तिलमिश्रम् ।

कव्यवालं नलं सोमं यमसर्य्यमणन्तथा ॥

अग्निष्वात्तान् सोमपान् वर्हिषदश्च यमांश्च के ।

यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्व्वभूतक्षयाय च ॥
औडुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
एकैकस्य तिलैर्म्मिश्रांस्त्रीं स्त्रीन्दद्याज्जलाञ्जलीन् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥
जीवितपितृकोऽप्येतांस्तर्पयेन्न तथेतरः ॥

—उदीरतामङ्गिरस आयन्तु न ऊर्ज्जमिति।
पितृभ्य इति ये चेह मधुवाता इति त्र्यृचम्।
जपन् प्रसिञ्चेत्तृप्यध्वमिति त्रिः नमो व इत्युक्ता॥

मातामहाचार्य्यगुरुशिष्यबान्धवा अतर्पिता देहाद्रुधिरं पिबन्ति। अत्र पाठक्रमेणैव पूर्व्वत्वे लब्धे पूर्व्वमित्युक्तेरेकैकमेव ब्रह्मादीनां तर्पणं एवञ्च प्रत्येकमेव तृप्यतामित्योङ्कारपूर्व्वं सम्बध्यते।

पुराणानिति इतराचार्य्यविशेषणं सावयवं इति सम्बत्सर-विशेषणं। यथा रात्र्यादयः (?)। चतुर्व्विधमिति भूतग्रामविशेषणं साकाङ्क्षत्वात्। ततो नीवीतीत्यभिधानात् पूर्व्वमौत्सर्गिकमुप-वीतित्वं ब्रह्माद्यानुपवीती तर्पयेदिति योगियाज्ञवल्क्यवचनात्। अत्र देवतर्पणानन्तरं ब्रह्मऋषितर्पणमित्यन्ये।

देवतर्पणानन्तरं तर्पणमित्यनुवृत्तौ—
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्।
प्रचेतसं वशिष्ठञ्च भृगु नारदमेव च॥

इति याज्ञवल्क्यवाक्यादिदं कल्पान्तरमेवेत्यन्ये। कव्यवाडो नल इत्येक एव देवतेति कल्पतरुः। तच्च कव्यवाडादयो दिव्या यमा इति गोभिलवचनाद् व्यक्तं, अतएव कव्यवाडं नलमिति कामधेनौ पाठः। एतान् दिव्यान् पितॄन् कव्यवाडादीन्। इतरः प्रमृतपितृकः। जीवत्पितृकस्यापि पितामहादितर्पणं पितृपातित्यादिपक्षे।

येभ्यो वापि पिता दद्यात् तेभ्यो वापि प्रदापयेत्।

इति योगियाज्ञवल्क्यवचनात्।

अत्र पित्रादितर्पणे जलाञ्जलित्रयं यमतर्पणे तथा दर्शनात्।

एवञ्च दिव्यपितृतर्पणेऽप्यञ्जलित्रयं तद्धर्म्मकत्वात् । एकैकस्येति तत्रापि सम्बन्धाद्ब्रह्मादितर्पणे मनुष्यतर्पणे चावृत्तौ मानाभावादेक एवाञ्जलिः । केचित्तु विष्णुपुराणकल्पे—

त्रिरपः प्रीणनार्थाय देवानामपवर्ज्जयेत् ।

इति दर्शनाद्देवतर्पणेऽप्यञ्जलित्रयमेवाहुः । तन्न

पितृवन्मातृमातामहानिति प्रतिपुरुषमभ्यसेत् ।

इति छन्दोगपरिशिष्टे षट्पुरुषमात्रेष्वावृत्तिदर्शनादिति पारिजातः ।

वस्तुतस्तु कल्पान्तरतैव तस्य स्त्रीतर्पणपक्षेऽपि एक एवाञ्जलिः । त्रींस्त्रीञ्जलाञ्जलीनित्यादि—यमोक्तञ्च षट्पुरुषमात्रविषयम् । उदीरतामङ्गिरस इत्यादिमन्त्रनवकस्य पित्रादित्रिकाञ्जलिनवके सम्बन्धः । जपेन्मन्त्रान् यथाक्रमानिति योगियाज्ञवल्क्यवचनात् ।

प्रत्येकाञ्जलीनां देयत्वान्मन्त्राणामपि तथैव प्रकाशनशक्तेः । सर्व्वत्र च सर्व्वान्वये चावृत्तिप्रसङ्गात् । एकैकमन्त्रपाठानन्तर-मेकैकाञ्जलिदानं मन्त्रान्ते कर्म्मसन्निपातनयात् ।

अतएव जपन्निति वर्त्तमानसामीप्यात् न तु मन्त्रपाठकाल एव सेकः, गोत्राद्युच्चारणस्यावयवत्वात् । न च मन्त्रात् प्रागेव वाक्यमिति युक्तम् ।

यत्त्वाहुः— वाक्यमात्रेण तर्पणमादौ उदीरतामित्यादिमन्त्रैस्तु सेकमात्रं पाठकाल एव स्तोत्रगतवदृष्टानुमितिः । तदपि न कर्म्मान्तरकल्पनापत्तेः । मन्त्रैर्देयमुदकमिति बोधाच्च ।

तृप्यध्वमिति त्रिरिति पित्रादित्रयमिति मिलितमुद्दिश्य

तृप्यध्वमित्यनेन वारत्रयमुदकं देयमित्यर्थः। न तु पाठमात्रमेतददृष्टार्थत्वापत्तेः प्रसिञ्चेदित्यन्वयाच्च मातामहादित्रये तु नम व इत्युक्त्याभिधानादेकवारमेव मन्त्रमुच्चार्य्य तर्पणम्।

प्रसिञ्चेदिति श्रवणाज्जलसेकमात्रं तर्पणं न पितॄनुद्दिश्य त्याग इति भ्रमो ज्ञेयः।

नाम-गोत्र-स्वधाकारैस्तर्प्याः स्युरनुपूर्व्वशः।

इति योगियाज्ञवल्क्यात् त्यागस्यैवावगमात्। एवन्देवादितर्पणेऽपि त्याग एव तुल्यतया निर्द्देशात्।

अत्र च देवतर्पणे—ईदृशं वाक्यं। ॐ ब्रह्मा तृप्यतामित्येवं प्रतिदेवं कर्त्तव्यं बहुवचनान्तश्रुतदेवादिसम्बन्धे चार्थाद्बहुवचनम्।

मनुष्यतर्पणे तु ॐ सनकस्तृप्यतामित्येवं वाक्यं दिव्यपितृतर्पणे तु ॐ कव्यवाडनलस्तृप्यतामिदं जलं तस्मै स्वधा नम इत्येवं वाक्यम्।

तर्पयेन्नमस्कारस्वधान्वितमिति याज्ञवल्क्यवचनात्। पितृतर्पणे तु ॐ अमुकगोत्रः पिता अमुकशर्म्मा तृप्यतामिदं जलं तस्मै स्वधा इति वाक्यं। अत्रामुकगोत्रः अस्मत्पिता इति कश्चित्। तन्न। प्रयोगे क्रियमाणे ऽस्मच्छब्दप्रयोगे मानाभावः पितृपदस्य सम्बन्धिरूपत्वादेव[1] तल्लाभः।

गोभिलः,—

नमो ब्रह्मणे, नमो ब्राह्मणेभ्यो नम ऋषिभ्यो नम आचार्य्येभ्यो नमो देवेभ्यो नमो वायवे च, नमो वैश्रवणाय चोपजाय च। अग्निः प्रजापतिर्विश्वेदेवाः ॐकारो वषट्कारो महा-

[1] (ख) सम्बन्धिशब्दादेव।

व्याहृतयो गायत्री सावित्री सरस्वती ब्रह्मा वेदा देवा ऋषयः छन्दांसि आचार्य्यो यज्ञोऽध्ययनं । द्यावापृथिवी अन्तरीक्षाहो-रात्राणि समुद्रा नद्यो गिरयः क्षेत्राण्योषधयो वनस्पतयो नागा वनानि वसवो रुद्रा आदित्याः सिद्धास्साध्या नक्षत्राणि ग्रहा भूतानि च पिशाचा यक्षा रक्षांसि गन्धर्व्वास्साप्सरसस्तृप्यास्त्वेवमादयः स्वस्ति कुर्व्वन्तु तर्पिताः ।

वाणायनिः[1] शाख्यमुनिर्व्यासोऽथ भागुरिस्तथा ।
गौधुण्डिर्गौधुनरिश्च भगवानौपवन्यवः ॥
करोटिर्मशको गार्ग्यो वार्षगण्डस्तथैव च[2] ।
कुथुमिः शालिहोत्रश्च जैमिनिश्च त्रयोदश ।
एते च सामगाचार्य्याः स्वस्तिकुर्व्वन्तु तर्पिताः ।
शटिर्मालविः कालरविः[3] माण्डोरश्च वृषाणकः ।

रुरुकिश्चाथ समवाङ्करगस्त्यो वषट्शिरा[4] ऋक्षश्चैव । दशैते प्रवचनकर्त्तारः स्वस्तिकुर्व्वन्तु तर्पिताः ।

अथापसव्येन पाणिना । वाणायणी शठी कव्यवालादयो दिव्या यमाः । स्वधा नमोऽन्तेन त्रीन् पितृतस्त्रीन् मातृतः तत्पत्नीश्च पितृतर्पणं । सनकादयश्च नीवीतीति मनुष्यधर्म्मः ।

यद्यपि विष्णुपुराणे ऋषितर्पणे न प्राचीनावीतित्वं विहितं तथापि वाणायण्यादितर्पणे गोभिलमते प्राचीनावीतित्वरूपपितृ-धर्म्म-एव प्रतिभाति । अतएव दक्षिणामुखत्वमपि तत् । वाणा-

१ (क) रवायणीः । २ (ग) च ते दश ।
३ (ख) कालवरिः । ४ (ग) वंशशिराः ।

यच्चादितर्पणे पित्रादिविधिरेव । एतच्च तर्पणं गायत्रीजपतः प्राक् छन्दोगानामेव द्रष्टव्यम् ।

यदाहुः,—

आप्लवने च तु संप्राप्ते गायत्रीजपतः पुरा ।
तर्पणं कुर्व्वतः पश्चात् स्नानमेव वृथा भवेत् ॥

नामगोत्रस्वधाकारैस्तर्प्या इत्यनुवृत्तौ—

योगियाज्ञवल्क्यः,—

माता मातृस्वसा चैव मातुलानी पितृस्वसा ।
दुहिता च स्वसा चैव शिष्यर्त्विग्ज्ञातिबान्धवाः ॥

विष्णुपुराणे,—

त्रिरपः प्रीणनार्थाय देवानामपवर्ज्जयेत् ।
ऋषीणाञ्च यथान्यायं सकृच्चापि प्रजापतेः ॥
पितॄणां प्रीणनार्थाय त्रिरपः पृथिवीपते ।
पितामहेभ्यश्च तथा प्रीणयेत् प्रपितामहान् ॥
मातामहाय तत्पित्रे तत्पित्रे च समाहितः ।
दद्यात् पित्रेण तीर्थेन काम्यं चान्यच्छृणुष्व मे ॥
मात्रे प्रमात्रे तन्मात्रे गुरुपत्न्यै तदा नृप ।
गुरवे मातुलादीनां मित्रस्निग्धाय भूभुजे ॥
इदञ्चापि जपे दद्युरुदयासमये नृप ।
उपकाराय भूतानां कृतदेवादितर्पणः ॥
देवासुरास्तथा नागा यक्षा गन्धर्व्वराक्षसाः ।
पिशाचा गुह्यकाः सिद्धाः कुष्माण्डास्तरवः खगाः ॥

जलेचरा भूमिचरा वाय्वाहाराश्च जन्तवः।
प्रीतिमेते प्रयान्त्वाशु मद्दत्तेनाम्बुना सदा॥
नरकेषु समस्तेषु यातनासु च ये स्थिताः।
तेषामाप्यायनायैतद्दीयते सलिलं मया॥
ये ऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः।
ते तृप्तिमखिलां यान्तु ये चास्मत्तोयकाङ्क्षिणः॥

साचादितर्पणे काम्यत्वाभिधानं फलविशेषकथनार्थं नित्यता तु स्मृत्यनुसारात्।

योगियाज्ञवल्क्यः,—

दत्त्वा जलाञ्जलीन् सप्त कृष्णपक्षे चतुर्द्दशीम्।
धर्म्मराजं समुद्दिश्य सर्व्वपापैः प्रमुच्यते॥
अनर्क्काभ्युदिते काले कृष्णपक्षे चतुर्द्दशीम्।
स्नातः संतर्प्य तु यमं सर्व्वपापैः प्रमुच्यते॥
यत्र कुत्र च नद्यां हि स्नात्वा कृष्णचतुर्द्दशीम्।
सन्तर्प्य धर्म्मराजानं मुच्यते सर्व्वकिल्बिषैः॥

योगियाज्ञवल्क्यः,—

सवर्णेभ्यो जलन्देयं नान्यवर्णे कदाचन।

पारस्करः,—

ब्राह्मणेन न कर्त्तव्यं शूद्रस्यैवौर्द्ध्वदैहिकम्।
शूद्रेण ब्राह्मणस्यापि विना पारशवात् क्वचित्॥

और्द्ध्वदैहिकमिति सामान्यनिर्द्देशात् श्राद्धादिपरिग्रहोऽपि।
पारशवो ब्राह्मणाच्छूद्रायामुत्पन्नः।

भूमौ यदापो दीयन्ते दाता चैव जले स्थितः।

*वृथा तद्दीयते तोयं नोपतिष्ठति कस्यचित् ॥*

एतेन जलस्थो जल एव तर्पणजलं क्षिपेत् ॥ स्थलस्थस्तु स्थल एव तर्पणजलं क्षिपेत् ॥

तथाहि शङ्खः,—

नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना ।
नोपतिष्ठति तत्तोयं यन्न भूमौ प्रदीयते ॥

बौधायनमते तु स्थलस्थेनापि तर्पणजलं जल एव प्रक्षेप्तव्यम् । वासःपरिधानानन्तरं यतः पञ्चभिर्ब्रह्मयज्ञैरद्भिरेवाप्सु यथोत्तरं देवान् पितॄन् तर्पयन्तीत्यपामेव तर्पणजलप्रक्षेपाधिकारात् ।

प्रकाशे तु—जलसमीपस्थेन तर्पणजलं जल एव प्रक्षिपेत् । उद्धृतजलेन तु स्थले तर्पणजलप्रक्षेपः । तद्विषयमेव प्रागग्रेषु स्वधा इत्युक्तमिति स्थापितम् । तन्न ।

उदके नोदकं कुर्य्यात् पितृभ्यश्च कदाचन ।
उत्तीर्य्य च शुचौ देशे कुर्य्यादुदकतर्पणम् ॥ इति

शङ्खेन जलस्थतर्पणं वदता नोदकेष्विति पुनरुदकनिषेधस्तीरस्थस्यापि जलप्रक्षेप इति । [तन्मते स्थलस्थेन[1] सर्व्वत्र स्थल एव जलप्रक्षेपः । बौधायनमतेन तु स्थलस्थेन जल एव जलप्रक्षेप इति ।] विकल्प एवात्र भाति, शाखिभेदाद्वा मतद्वयं ज्ञेयमिति केचित् ।

सुमन्तुः,—

आकाशे तु क्षिपेद्वारि जलस्थो दक्षिणामुखः ।

१ (ग) पुस्तके [ ] चिह्नितांशः पतितः ।

(योगियाज्ञवल्क्यः,—

यदा शुचि जलं वा स्याद्‌दके देवताः पितॄन्।)

आकाशमिह जलोपरिभागः॥

कार्ष्णाजिनिः,—

देवतानां पितॄणाञ्च जले दद्याज्जलाञ्जलिम्।

असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलिम्॥

योगियाज्ञवल्क्यः,—

यदा ऽशुचिजलं[1] वा स्याद्‌दके देवताः पितॄन्।

तर्पयेच्च यथाकाममप्सु सर्व्वं प्रतिष्ठितम्॥

उशनाः,—

न वेष्टितशिरा न कृष्णकाषायवासा देवपितृकार्य्यं कुर्यात्।

शङ्खः,—

नेष्टिकाचिते पितॄंस्तर्पयेत्। वापीतड़ागोदपानेषु सप्त पञ्च त्रीन् वा पिण्डानुद्धृत्य पितॄंस्तर्पयेत्।

अयञ्च पिण्डोद्धारोऽसामर्थ्यादिना—आप्लवनस्नानाभावेऽपि तर्पणं कुर्व्वता प्राक्कार्य्यस्तर्पणस्याङ्गत्वात्। आप्लवनस्नानपक्षे तु तदङ्गत्वादेव प्राकृतत्वात् प्रसङ्गन्यायात् तर्पणाङ्गतया पुनर्न कार्य्यः। यथासङ्ख्यञ्च।

पितृतर्पणे योगियाज्ञवल्क्यः,—

प्राचीनावीत्युदकं प्रसिञ्चेद्वै तिलान्वितम्।

यद्युद्धृतं प्रसिञ्चेत्तु तिलान् वै मिश्रयेज्जले।

१ (ख) अशुचिस्थलं।

अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥

यद्युद्धृतोदकेन तर्पणन्तदा जलपात्र एव तिलप्रक्षेपः, जलाशयस्थजलेनैव तु तर्पणे वामहस्तेन तिलग्रहणमित्यर्थः ।

तथा,— दक्षिणे पितृतीर्थेन जलं सिञ्चेद्यथाविधि ।

दक्षिणेनैव गृह्णीयात् पितृतीर्थसमीपतः ॥

दक्षिणे करे ।

कार्ष्णाजिनिः,—

नाभिमात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः ।

आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम् ॥

यमः,—

त्रींस्त्रीन् जलाञ्जलिं दद्यादुच्चैरुच्चतरं ततः ।

गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥

पित्रादिषट्कजलाञ्जलयः क्रमेण वर्द्धनीयाः । जलमध्य इति पक्षप्राप्तानुवादः ।

मरीचिः,—

मुक्तहस्ताच्च दातव्यं मुद्रान्तत्र न दर्शयेत् ।

वामहस्ते तिला ग्राह्या मुक्त्वा हस्तन्तु दक्षिणम् ॥

मुक्तहस्तं प्रसारितहस्तं यथा स्यात्तथा दातव्यं मुद्रान्तत्र— न तर्ज्जन्यङ्गुष्ठमुद्रया तीर्थावरोधं कुर्य्यादित्यर्थः । मुक्त्वा हस्तन्तु दक्षिणं इति दक्षिणेन तिला न ग्राह्या इत्युक्तम् ।

तिलानामप्यलाभे तु हिरण्यरजतान्वितम् ।

तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः ॥

रजते मनसा यायात् सुवर्णे हस्तनिःसृतम् ।
तिलेषु च चणं गच्छेत्तासेषु द्विमुहूर्त्ततः ॥
दर्भे सप्तमुहूर्त्तन्तु मन्त्रयुक्तन्तदक्षयम् ।

रजते हस्तसम्बन्धे रूप्ये एवं सुवर्णादिष्वपि मनसा ददानि चिन्तामात्रेण यायात् पितॄनिति शेषः। अत्र पूर्व्वपूर्व्वाभावे उत्तरोत्तरविधिरिति भ्रमो वाक्यान्तरविरोधात्र शक्यः। तिला-दीनान्तु समुदितानामभावे क्रमेणैकैकशोऽप्युपादानं कार्य्यमिति दर्शनार्थमिदम्।

एवञ्च।

विना रूप्यसुवर्णेन विना ताम्रतिलैस्तथा ।
विना दर्भैश्च मन्त्रैश्च पितॄणां नोपतिष्ठते ॥

इति शङ्खवचनं रूप्यादीनां सर्व्वेषामभावे न त्वेकदेशाभावेऽपि।

शङ्खः,—

सौवर्णेन तु पात्रेण राजतेनौडुम्बरेण च खड्गपात्रेण शङ्कुना वाप्युदकं पितृतीर्थं स्पृशन्दद्यात्।

शङ्कुः सुवर्णकीलकः। एतच्च वचनं सति सम्भवे।

तथा,—

हैमेन सह यद्दत्तं क्षीरेण मधुना तथा ।
तदप्यक्षयतां याति पितॄणान्तु तिलोदकम् ॥

पितृगीतासु मनुः,—

अपि नः स कुले यायात् यो नो दद्याज्जलाञ्जलीन् ।
नदीषु बहुतोयासु शीतलासु विशेषतः ॥

स्नानानन्तरं शङ्खः,—

उदकस्याप्रदानाद्धि स्नानशाटीन्न पीड़येत् ।

योगियाज्ञवल्क्यः,—

यावद्देवानृषींश्चैव पितृंश्चैव न तर्पयेत् ।

तावन्न पीड़येद्वस्त्रं येन स्नातो न वोदकैः ॥

न वोदकैर्वस्त्रोदकैर्न तर्पयेत् । तावन्न पीड़येद्वस्त्रमितिसम्बन्धः ।

निष्पीड़यति यः पूर्व्वं स्नानवस्त्रन्तु तर्पणात् ।

निराशाः पितरस्तस्य यान्ति देवाः महर्षिभिः ॥

पराशरः,—

जलमध्ये तु यः कश्चिद्ब्राह्मणो ज्ञानदुर्व्वलः ।

निष्पीड़यति तद्वस्त्रं स्नानन्तस्य वृथा भवेत् ॥

योगियाज्ञवल्क्यः,—

वस्त्रनिष्पीड़ितं तोयं स्नातस्योच्छिष्टभागिनाम् ।

भागधेयं श्रुतिः प्राह तस्मान्निष्पीड़येत् स्थले ॥

अन्नप्रकरवत्तस्य अपसव्येन पीड़नम् ।

पीड़यित्वा ततः पश्चाज्जपं कुर्य्यात् सुविस्तरम् ॥

एतेनोच्छिष्टभागिभ्यो बुद्धिस्थीकृत्य भूमौ वस्त्रनिष्पीड़नोदकं दातव्यम् ॥ अन्नप्रकरवत् श्राद्धोच्छिष्टान्नविकरवत् ।

कपिष्ठोभिलः,—

ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।

ते तृप्यन्तु[1] मया दत्तं वस्त्रनिष्पीड़नोदकम् ॥

१ (ग) पिवन्तु ।

वशिष्ठ,—

स्नानशाट्यान्तु दातव्या मृदस्तिस्रो विशुद्धये।

इत्यन्तरोक्ततर्पणान्यतिरिक्ततया न लिखितानि।

॥ इति गृहस्थरत्नाकरे तर्पणतरङ्गः ॥

---

## अथ तर्पणोत्तरकर्म्म ॥

तत्र विष्णुपुराणे,—

आचम्य च ततो दद्यात् सूर्य्याय सलिलाञ्जलिम्।

(ॐ) नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे।

जगत्सवित्रे शुचये सवित्रे कर्म्मदायिने॥

ततो गृहार्च्चनं कुर्य्यादभीष्टसुरपूजनम्।

जलाभिषेकपुष्पाणां धूपादीनां निवेदनैः॥

प्रक्षाल्य तीरदेशन्तु गत्वा स्वधर्म्ममाचरेत्।

स्वधर्म्मः स्वकीयाश्रमधर्म्मः।

तथा,—

स्रवन्त्यादिषु चाचम्य सोपानत्को ह्यसंस्पृशन्।

आगतः सोदपात्रन्तु यत्नेन शुचिरेव सः॥

तेनोदकेन द्रव्याणि प्रोक्ष्याचम्य पुनर्गृहे।

कर्म्माणि तु प्रकुर्व्वीत नित्यं वै यानि कानि च॥

पात्रादिरहितं तोयमुद्धृतं सव्यपाणिना।

न तेन प्रोक्षणं कुर्य्यात् वस्त्रनिष्पीडनेन च॥

सौवर्णं राजतं ताम्रं मुख्यं पात्रं प्रकीर्त्तितम् ।
तदभावे स्मृतं पात्रं स्रवते यत्र धारितम् ॥

असंस्पृशन् अशुच्यादीनिति शेषः। प्रोक्षणं गृहस्थितपुष्पादीनां यत्र धारितं नारिकेलादिपात्रम् ।

शातातपः,—

बहिर्नद्यादिस्नानान्तः सोदकः किञ्चिदस्पृशन् ।
रथ्यागतोपि यत्नेन शुचिरेवेह मानवः ॥

अस्पृशन् यत्नेनेति शेषः ।

नाधोवस्त्रैकदेशेन शुद्ध्यर्थमप आहरेत् ।
यद्यानीतन्तु सव्येन प्रोक्षयेद्दक्षिणेन तु ॥

नाधोवस्त्रैकदेशेन इतरजलपात्राभावेऽपि नाधोवस्त्रानीतेन तोयेन प्रक्षालयेत् ॥

लघुहारीतः,—

स्नानं कृत्वा तु ये केचित् पुष्पं चिन्वन्ति मानवाः[१] ।
देवतास्तन्न गृह्णन्ति भस्मीभवति काष्ठवत् ॥

एतत्तु द्वितीयस्नानाभिप्रायम् ।

पद्मपुराणे,—

आचम्य विधिवत् सम्यगालिखेत् पद्ममग्रतः ।
साक्षताभिः सपुष्पाभिः सतिलारुणचन्दनैः ॥
अर्घ्यपात्रं प्रयत्नेन सूर्य्यनामानुकीर्त्तनैः ॥
नमस्ते विष्णुरूपाय नमस्ते ब्रह्मरूपिणे ।

१ (ख) वै द्विजाः ।

सहस्ररश्मये नित्यं नमस्ते सर्व्वतेजसे।
नमस्ते रुद्रवपुषे नमस्ते भक्तवत्सल!।
पद्मनाभ नमस्तेऽस्तु कुण्डलाङ्गदभूषित॥
नमस्ते सर्व्वलोकेश! सुप्तानामपि बुध्यसे।
सुकृतं दुष्कृतञ्चैव सर्व्वम्पश्यसि सर्व्वदा॥
सर्व्वदेव नमस्तेऽस्तु प्रसीद मम भास्कर!।
दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते॥
एवं सूर्य्यंनमस्कृत्य त्रिः कृत्वा च प्रदक्षिणम्।
द्विजं गां काञ्चनं स्पृष्ट्वा ततो विष्णुगृहं व्रजेत्॥
आश्रयस्थं ततः पूज्य प्रतिमाञ्चापि पूजयेत्॥

अक्षतशब्दो आमतण्डुले॥

हलायुधेन तु पूज्येति स्थाने स्नाप्येति लिखित्वा स्नानं कारयित्वा इति व्याख्यातम्।

ब्रह्मयज्ञानन्तरं नरसिंहपुराण-ब्रह्मपुराणयोः,—

ततोऽर्घ्यं भानवे दद्यात् तिलपुष्पजलान्वितम्।
उत्थाप्य मूर्द्धपर्य्यन्तं हंसः शुचिषदित्यपि॥
जलदेवं नमस्कृत्य ततो गृहगतः पुनः।
विधिना पुरुषसूक्तेन ततो विष्णुं समर्च्चयेत्॥
वैश्वदेवन्ततः कुर्य्याद्बलिकर्म्म यथाविधि।

पुरुषसूक्तविधिश्च पुराणान्तरादवगन्तव्यः पूजाप्रकरणे।

॥ इति गृहस्थरत्नाकरे तर्पणोत्तरकर्म्मतरङ्गः॥

---

## अथ पञ्चमहायज्ञाः

तत्र दक्षः,—

पञ्चमे च तथा भागे संविभागो यथार्हतः ।
पितृदेवमनुष्याणां कीटानाञ्चोपदिश्यते ॥

संविभज्यतेऽन्नमस्मिन्निति संविभागः । कीटग्रहणमिह भूताना-मुपलक्षणाय ।

व्यासः,—

वैवाहिकेऽग्नौ कुर्व्वीत पाकयज्ञानशेषतः ।
आपद्यपि हि कष्टायां पञ्चयज्ञान्न हापयेत् ॥
स्वर्गापवर्गयोः प्राप्तिर्महायज्ञैः प्रचक्षते ।

वैवाहिकोऽग्निरावसथ्यः । एतच्च सत्यावसथ्याग्नौ तथाचाग्रे वक्ष्यते ।

मनुः,— पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च वध्यते यास्तु वाहयन् ॥

सूना प्राणिवधस्थानम् । उपस्करः सम्मार्ज्जनीप्रभृति गृहोप-करणम् । वध्यते हिंसोत्पादितदुरितेन स वध्यते । वाहयन् व्यापारयन् ।

तासां क्रमेण सर्व्वासां निष्कृत्यर्थं महर्षिभिः ।
पृथक्क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ॥

अनेन तत्पापक्षयाय पञ्चयज्ञा इत्युक्तम् ।

तथा,—

अहुतञ्च हुतञ्चैव तथा प्राहुतमेव च ।

ब्राह्मं हुतं प्राशितञ्च पञ्चयज्ञान् प्रचक्षते ॥
जपः हुतोऽहुतो होमः प्रहुतो भौतिको बलिः।
ब्राह्मं हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम्।
स्वाध्यायेनार्च्चयेतर्षीन् होमैर्द्देवान् यथाविधि ॥
पितॄन् श्राद्धैश्च नृनन्नैर्भूतानि बलिकर्म्मणा।
पञ्चैतान् यो महायज्ञान्न हापयति शक्तितः ॥
स गृहेऽपि वसन्नित्यं शूनादोषैर्न लिप्यते।

छन्दोगपरिशिष्टे कात्यायनः,

पञ्चानामपि सत्राणां महतामुच्यते विधिः।
यैरिष्ट्वा सततं विप्रः प्राप्नुयाद्ब्रह्म शाश्वतम् ॥
देव-भूत-पितृ-ब्रह्म-मनुष्याणामनुक्रमात्।
महासत्राणि जानीयात त एव हि महामखाः[1] ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
दैवो होमो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥
[2][ श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो बलिरथापि वा।
यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स उच्यते ॥
स चार्व्वाक् तर्पणात् कार्य्यः पश्चाद्वा प्रातराहुतेः।
वैश्वदेवावसाने वा नान्यत्रेति निमित्तकात् ॥

श्राद्धमत्र नित्यश्राद्धम्। पित्र्यो बलिर्भूतबलिदानानन्तरं
...तिजणो मध्याह्नस्नानानन्तरं दर्भेष्वासीन इत्यादिनोक्तः पवित्र-

१ (क) (ख) पुस्तके पित्र्यो बलिरथापि वा।
२ [ ] चिह्नितांशः (ख) चिह्नित पुस्तके नास्ति।

मन्त्रजपः। निमित्तमेव निमित्तकमिति। निमित्तकादनन्तरोक्तात् ब्रह्मयज्ञकालत्रयादन्यत्र ब्राह्मयज्ञेन कुर्य्यादित्यर्थः।

अत्र च तर्पणश्राद्ध-पितृयज्ञबलिदानानां पितृयज्ञत्वे यथा-सम्भवमधिकारिभेदेन पुनस्तुल्यविकल्पः॥]

हारीतः,—

यद्देवेभ्यो जुहोति देवलोकं तेनाभिजयति। पितृभ्यः पितृलोकं। तेन यः स्वाध्यायमधीते ऋषिलोकं। यत् भूतेभ्यो बलिं हरति भूतलोकं तेन।

शङ्खलिखितौ,—

पञ्च महायज्ञाग्निर्व्वपेदापचशाकोदकेभ्यः।

बौधायनः,—

अहरहर्द्देवेभ्यः स्वाहा कुर्य्यादाकाष्ठात्तथैनं(तं) देवं यज्ञं समाप्नोति। अहरहः स्वधा कुर्य्यादोदपात्रात्तथैनं(तं) पितृयज्ञं समाप्नोति। अहरहर्भूतेभ्यो बलिं हरेदापचपुष्पेभ्योऽथैनं(तं) भूतयज्ञं समाप्नोति। अहरहर्ब्राह्मणेभ्योऽन्नं दद्यादामूल-फल-शाकेभ्योऽथैनं मनुष्ययज्ञं समाप्नोति। अहरहः स्वाध्यायं कुर्य्यादा-प्रणवात्तथैनं ब्रह्मयज्ञं समाप्नोति।

मनुः,— ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्व्वदा।
नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत्॥

यद्यपि व्यासादिभिरावसथ्याग्नौ पञ्च महायज्ञा उक्ताः।

तथापि,—

लौकिके वैदिके वापि हुतोत्सृष्टे जले क्षितौ।

वैश्वदेवञ्च कुर्व्वीत पञ्चसूनापनुत्तये ॥

इति शातातपवचनेनाधारान्तरस्यापि विहितत्वात्। सत्याव-सथ्याग्नौ तच। अन्यथाऽन्यचापि पञ्च महायज्ञाः कार्य्या इति परमार्थः।

लौकिके पाकसाधने वैदिके आवसथ्याग्नौ कृतोत्सृष्टे अन्नेन होमं विधाय त्यक्के अनन्तरोक्ताग्नित्रयासम्भवे जले तदसम्भवे भूमौ।

छन्दोगपरिशिष्टे कात्यायनः,—

सायं प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म्म च।

अनश्नताऽपि सततमन्यथा किल्बिषी भवेत् ॥

अङ्गिराः,—

शालाग्नौ वा पचेदन्नं लौकिके वापि नित्यशः।

यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते ॥

शालाग्निरावसथ्याग्निः। तेन साग्निना आवसथ्याग्नौ होमः कार्य्यः। निरग्निना अग्नौ यदि होमः क्रियते तदा लौकिके।

याज्ञवल्क्यः,—

कर्म्म स्मार्त्तं विवाहाग्नौ कुर्व्वीत प्रत्यहं गृही।

होमं शालाहृते वापि श्रौतं वैतानिकाग्निषु ॥

वैतानिकाग्निषु आहवनीयाग्निषु।

व्यासः,— वैश्वदेवं प्रकुर्व्वीत स्वशाखाविहितन्ततः।

संस्कृतान्नैर्विधेस्तु हविष्यव्यञ्जनान्वितैः ॥

तैरेवान्नैर्बलिन्दद्यात् शेषमाप्लाव्य वारिणा।

कृतापसव्यः स्वधया सर्व्वन्दक्षिणतो हरेत्।

सुरार्च्चनं ततः कुर्य्याद्गन्धमाल्यैः सुगन्धिभिः ॥

अत्र च पौराणिके विधौ स्वशाखाश्रयणं वचनवलात्।

छन्दोगपरिशिष्टे कात्यायनः,—

हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः।

माषकोद्रवगौरादीन् सर्व्वालाभेऽपि वर्ज्जयेत् ॥

व्रीहयः कलमादयः। गौरोऽत्र सितसर्षपः।

शङ्खलिखितौ,—

अत ऊर्द्धन्देवयज्ञः सर्व्वेषामुपदिश्यते।

आश्रमधर्म्माविरोधे प्रतिनियतानामोषधीनां कोद्रवचणकमाषमसूरकुलत्थोद्दालकवर्ज्जं निरूपणीयम्। उद्दालको वकुर इति प्रसिद्धः।

आपस्तम्बः,—

न क्षारलवणहोमो विद्यते[2]।

तथा परान्नसंसृष्टस्य च। अहविष्यस्य च होम उदीचीनमुदग्निभागभवमुष्णं भस्मापोह्य हूयते। तद्धुतमहुतं चाग्नौ भवति न स्त्री जुहुयात् नानुपेतः।

क्षारलवणमूषरलवणं। परान्नसंसृष्टमन्यान्नमिश्रं। अहविष्य माषादि। यदि तु क्षारलवणमेव सम्पद्यते तदा उदीचीनमुदग्निभागभवमुष्णं भस्मापोह्य तस्मिन्नग्नौ जुहुयादित्यर्थः। न स्त्री जुहुयात् इति मार्ग्ये: प्रवासे ऋत्विगसन्निधाने सति प्रसक्तस्य निषेधः। निरग्निस्तु स्वकर्त्तृक एव वैश्वदेवः। अनुपेत: अनुपनीतः।

१ (ख) धङ्कवारः। २ (ग) विधीयते।

वशिष्ठः,—

वैश्वदेवं सायं प्रातर्गृह्येऽग्नौ जुहुयात्। गृहदेवताभ्यो बलिं हरेत्। श्रोत्रियाय दत्त्वा ब्रह्मचारिणे चानन्तरं पितृभ्यो दद्यात्ततोऽतिथीन् भोजयेत्।

वैश्वदेवं विश्वदेवताकमन्नम्।

छन्दोगपरिशिष्टे कात्यायनः,—

भूतप्रवचने पत्नी यद्यसन्निहिता भवेत्।
रजोयोगादिना तत्र कथं कुर्व्वन्ति याज्ञिकाः॥
महानसेऽन्नं या कुर्य्यात् सवर्णा तां प्रवाचयेत्।
प्रणवाद्यपि वा कुर्य्यात् कात्यायनवचो यथा॥

भूतप्रवचनमिह सिद्धेऽन्ने स्वामिना भूतमिति वाचनं, रजोयोगादिना तस्या असन्निधाने अन्या या पाककर्त्री सवर्णा तां वाचयेत्। तथापि भूतमिति यदि वक्तुं न शक्यते तदा अन्यदप्योङ्कारादिसम्मतिप्रतिपादकं किञ्चित् कुर्य्यादित्यर्थः।

मनुः,—

विश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्व्वकम्।
आभ्यः कुर्य्याद्देवताभ्यो ब्राह्मणो होममन्वहम्॥
अग्नेः सोमस्य चैवाग्नौ(दौ) तयोश्चैव समस्तयोः।
विश्वेषाञ्चैव देवानां धन्वन्तरय एव च॥
कुह्वै[1] चैवानुमत्यै च प्रजापतय एव च।
सह द्यावापृथिव्योश्च तथा स्विष्टकृते ततः॥

१ मूले कुहं।

समस्तयोरग्नीषोमाभ्यां सह द्यावापृथिव्योः। द्यावापृथिव्यामेकं कर्त्तव्यम्।

विष्णुः,—

अथाग्निं परिसमुह्य पर्य्युक्ष्य परिस्तीर्य्य परिसमाधाय सर्व्वतः पाकादग्रमुद्धृत्य जुहुयात्। वासुदेवाय सङ्कर्षणायानिरुद्धाय पुरुषाय सत्यायाच्युताय। वासुदेवायाग्नये सोमाय मित्राय वरुणायेन्द्रायेन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यः प्रजापतये अनुमत्यै धन्वन्तरये वास्तोष्पतये स्विष्टिकृते इति।

शातातपः,—

भूतयज्ञं तथा श्राद्धं नित्यञ्चातिथिपूजनम्।
क्रमेणानेन कर्त्तव्यं स्वाध्यायाध्ययनन्तथा॥

अयञ्च शाखाविशेषविषयो भूतयज्ञादिक्रम इति ज्ञेयम्।

याज्ञवल्क्यः,—

देवेभ्यस्तु हुतादन्नात् शेषाद्भूतबलिं हरेत्।
अयो भूमौ श्वचाण्डाल-देयमन्नं प्रमुञ्चति॥
स्वाध्यायं सततं कुर्य्यान्न पचेदन्नमात्मने।

आत्मने केवलात्मने।

एवं सम्यक् हविर्हुत्वा सर्व्वदिक्षु प्रदक्षिणः।
इन्द्रान्तकाप्पतीन्दुभ्यः सानुगेभ्यो बलिं हरेत्॥
मरुद्भ्य इति तु द्वारि विष्णवेऽद्भ्यश्च इत्यपि।
वनस्पतिभ्य इत्येवं मुषलो दूषणं हरेत्॥

तच्छीर्षके श्रिये कुर्य्यात् तथा काल्यै[1] तु पादतः।
ब्रह्म-वास्तोष्पतिभ्याञ्च वास्तुमध्ये बलिं हरेत्॥
विश्वेभ्यश्चैव देवेभ्यो बलिमाकाश उत्क्षिपेत्।
दिवाचरेभ्यो भूतेभ्यो नक्तञ्चरेभ्य एव च॥
पृष्ठे वास्तुनि कुर्व्वीत बलिं सर्व्वानुभूतये।
पृथिव्यै बलिशेषन्तु सर्व्वदक्षिणतो हरेत्॥
शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम्।
वायसानां कृमीणाञ्च शनकैर्व्विकिरेद्भुवि।
एवं यः सर्व्वभूतानि ब्राह्मणो नित्यमर्हति॥
स गच्छेत् परमं स्थानं तेजोमूर्त्तिः पथोज्ज्वला।
सायं त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत्॥
वैश्वदेवं विना नैतत् सायं प्रातर्व्विधीयते।

एवमिति देवयज्ञप्रकारेण तच्छीर्षकं गृहस्थशय्याशिरःप्रदेशः। वास्तुपुरुषशिरःप्रदेशो वा। पादतः गृहस्थस्यैवात्मशय्यापाददेशे ब्रह्मवास्तोष्पतिभ्यामिति एवमिति बलिदानप्रदेशः। पृष्ठे वास्तुनि पश्चाद्गृहे मूत्रोच्चारकरणस्थान इत्यन्वयः। मूत्रोच्चाररहित इति पारिजातः।

सर्व्वानुभूतये सर्व्वानुभूतदेवतायै पथोज्ज्वला उज्ज्वलपथा शनकैर्यथा नोपघातः कथमपि भवति। वायसादीनाञ्चोपकाराय बलिः क्रियमाणः तत्र देशे दातव्यो यत्र तेषामुपयोगः सम्भवति। उत्क्षिपतीत्यनेन श्वादीनामपि बलिदाने अनादरो न कर्त्तव्य

१ (ग) भद्रकाल्यै।

इत्युक्तं। सायन्त्विति इदञ्च सायं सिद्धेनान्नेन पत्न्या अमन्त्रकं बलिं यजमान-तत्पुत्रादीनामसन्निधाने हरेत् दद्यात्।

गोतमः,—

अग्नावग्निर्धन्वन्तरिर्व्विश्वेदेवाः प्रजापतिः। [स्विष्टकृदिति होमाः।] दिग्देवताभ्यश्च यथास्वं द्वारि मरुद्भ्यो गृहे देवताभ्यः प्रविश्य ब्रह्मणे मध्ये अद्भ्य उदकुम्भे आकाशायेत्यन्तरिक्षे नक्तञ्चरेभ्यश्च सायम्।

अग्नाविति वचनादयं कल्पो जले क्षितौ न कार्य्यः। पारिजातेऽप्येवम्।

दिग्देवताभ्यश्च यथास्वं यथा यासां देवतानां या दिक् तस्यां ताभ्यो दद्यात् इत्यर्थः। दिग्देवताभ्यश्चेति चकारात् तत्पुरुषेभ्योऽपि। प्रविश्य गृहमिति शेषः। सायन्तु नक्तञ्चरेभ्य इत्यधिकम्।

छन्दोगपरिशिष्टे कात्यायनः,—

> अग्न्यादिर्गौतमेनोक्तो होमः शाकल एव च।
> अनाहिताग्निरप्येवमुच्यते बलिभिः सह॥

अग्न्यादिः—अग्निर्धान्वन्तरिर्व्विश्वेदेवाः प्रजापतिः स्विष्टकृदिति गौतमोक्तः। शाकलः काष्ठशकलसाध्यो ज्योतिष्टोमोहोमः, देवकृतस्यैनसोऽवयजनमसीत्यादिमन्त्रकः। अनाहिताग्नेः श्रौतस्मार्त्ताग्निरहितस्य।

पारस्करः,—

वैश्वदेवादन्नात् पर्य्युक्ष्य स्वाहाकारैर्जुहुयात्। ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतये इति। भूतगृह्येभ्यो मणिके त्रीन्

पर्ज्जन्यायाद्भ्यः पृथिव्यै। धात्रे विधात्रे च द्वार्य्ययोः। प्रतिदिशं वायवे दिशाञ्च। मध्ये त्रीन् ब्रह्मणे अन्तरिक्षाय सूर्य्याय विश्वेभ्यो भूतेभ्यस्तेषामुत्तरतः। उषसे भूतानां पतये परं। पितृभ्यः स्वधा नम इति दक्षिणतः। पात्रं निर्णिज्योत्तरापरस्यां दिशि निनयेत् यक्ष्मैतत्ते इति।

उत्तरतः इति विश्वेदेवात्। विश्वेदेवा देवता इति बलि-सम्बन्धिन अन्ये च देवता यद्यपि देवतान्तरमपि तथाप्येकदेशेन व्याहारः[१]। अतएव होमेऽप्यत्र वैश्वदेवोक्तिः, अस्माद्भूत्येति शेषः। पर्य्यग्निमग्निं प्रकृतत्वात्। अनुमतय इति इतिकारो होमसमाप्तौ त्रीन् बलीन् भूतगृह्येभ्य इति अस्य विवरणं पर्ज्जन्यायेति।

द्वार्य्ययोः—द्वारवामदक्षिणप्रदेशयोः। प्रतिदिशम् आमामेव चकारात् प्रतिदिशमिति सम्बध्यते। मध्ये गृहस्यैव ब्रह्मण इत्यादि-त्रयं त्रीणीत्यत्र देवताभिप्रायकं तेषां ब्रह्मादिबलीनां उत्तरदिशं गृहस्य पूर्व्वदक्षिणपश्चिमोत्तरदिक्षु उत्तरं परं अन्तिमं तेन विश्वेदेवादिबलयः उत्तरस्यां दिशि देया इति उत्तरापरा वायवी-दिक् सार्ग्नेरेव।

अन्यादिर्गौतमेनोक्तो होमः शाकल एव च।
अनाहिताग्नेरप्येष उच्यते बलिभिः सह॥

इति वाक्येन निरग्नेः प्रकारान्तरविधानात्। तन्निरग्नि-र्माजसनेयिनां स्वगृह्योक्तैव देवता सामान्यविध्यन्तराभावात्॥

१ (ग) व्यवहारः।

विष्णुपुराणे,—

अपूर्व्वमग्निहोत्रस्य कुर्य्यात् प्राक् ब्रह्मणे ततः।
प्रजापतिं समुद्दिश्य दद्यादाहुतिमादरात्॥
गृह्याभ्यः कश्यपायाथ ततोऽनुमतये क्रमात्।
तच्छेषं मणिके पृथ्वी पर्ज्जन्याद्भ्यः क्षिपेत्ततः॥
द्वारे धातुर्व्विधातुश्च मध्ये च ब्रह्मणः क्षिपेत्।
गृहस्य पुरुषव्याघ्र दिग्देवानाञ्च मे शृणु।
इन्द्राय धर्म्मराजाय वरुणाय तथेन्दवे।
प्राच्यां दिशि बुधो दद्याद्धुतशेषात्मकं बलिम्॥
आत्मोत्तरे दिग्विभागे धन्वन्तरिबलिं बुधः।
निर्व्वपेद्वैश्वदेवञ्च कर्म्म कुर्य्यादतःपरम्॥
वायव्ये वायवे दिक्षु समस्तासु ततो दिशाम्।
ब्रह्मणे चान्तरिक्षाय भानवे च क्षिपेद्बलिम्॥
विश्वेदेवान् विश्वभूतान् तथा विश्वपतीन् पितॄन्।
यक्ष्माणाञ्च समुद्दिश्य बलिन्दद्यान्नरेश्वर॥

मार्कण्डेयपुराणे,—

सम्पूजयेत्ततो वह्निं दद्यात्तेनाहुतीः क्रमात्॥
प्रथमां ब्रह्मणे दद्यात् प्रजानां पतये ततः।
तृतीयाञ्चैव गृह्याभ्यः कश्यपाय तथापरम्॥
ततोऽनुमतये दत्त्वा दद्याद्गृहबलिन्ततः।
पूर्व्वाख्यातं मया यत्तु नित्यं कर्म्म क्रियाविधौ॥
वैश्वदेवन्ततः कुर्य्याद्बलयस्तत्र मे शृणु।

यथास्थानं विभागन्तु देवानुद्दिश्य वै पृथक् ॥
पर्ज्जन्याद्भ्यो धरित्रीणां दद्यात्तु मणिके[1]त्रयम् ।
वायवे प्रतिदिग्भ्यश्च प्राच्यादिषु ततः क्रमात् ॥
ब्रह्मणे चान्तरिक्षाय सूर्य्याय च यथाक्रमम् ।
विश्वेभ्यश्चैव देवेभ्यो विश्वभूतेभ्य एव च ॥
उषसे भूतपतये दद्याच्चोत्तरतस्ततः ।
स्वधा नम इत्युक्त्वा च पितृभ्यश्चापि दक्षिणे ॥
कृत्वापसव्यं वायव्यां यक्ष्मैतत्तेऽवनेजनम् ।
अन्नावशेषमिश्रं वै तोयन्दद्याद्यथाविधि ॥
ततस्तोयमुपादाय तेषामाचमनाय वै ।
स्थलेषु निःक्षिपेत् प्राज्ञो नाम्ना चोद्दिश्य देवताः ॥

याज्ञवल्क्यः,—

देवेभ्यस्तु हुतादन्नाच्छेषं भूतबलिं हरेत् ।
अन्नं भूमौ श्वचाण्डालवायसेभ्यो बलिं हरेत् ॥

—श्वादिबलीनां पृथक् निर्देशात् भूतयज्ञवहिर्भावः ।

आपस्तम्बः,—

बलीनान्तस्य तस्य देशस्य[2] संस्कारः, हस्तेन परिमृज्यावोक्ष्य[3] न्युप्य पश्चात् परिषेचनं । तस्य तस्य प्रत्येकं परिमार्ज्जनम् ।

अवोक्ष्य सिक्त्वा न्युप्य बलिन्दत्त्वा परिषेचनं बलेरुपरि सेकः ।

१ (ग) मणिक —
२ मूले देश ।
३ (ग) अवेक्ष्य ।

बलीनुक्ता छन्दोगपरिशिष्टे कात्यायनः,—

पिण्डवच्च पश्चिमा प्रतिपत्तिः।

पिण्डवदग्न्यादिप्रक्षेपेण पश्चिमा अन्तिमा। यत्तु पश्चिमा-प्रत्तिपत्तिः पितृबलिप्रतिपत्तिरिति व्याख्यातम्। तन्न। अन्य-बलेरपि प्रतिपत्त्यपेक्षासम्भवात्।

यथा,—

अमुष्मै नम इत्येवं बलिदानं विधीयते।
बलिदानविधानार्थं नमस्कारः कृतो यतः॥
स्वाहाकार-वषट्कार-नमस्कारा दिवौकसाम्।
स्वधाकारः पितृणाञ्च हन्तकारो नृणां कृतः॥
स्वधाकारेण निर्व्वपेत् पित्र्यं बलिमतःपरम्।
तमप्येके नमस्कारैः कुर्व्वते नेति गोतमः॥

नक्षावरा बलयो भवन्ति महामार्ज्जारश्रवणप्रमाणात्। एकत्र चेदविकृता भवन्ति द्रवसंस्कारायैके इति शाखान्तराभिप्रायम्। अतएव वाजसनेयिनां गृह्ये स्वधा नम इति नमस्कारोऽपि पठितः। नेति गोतम इति छन्दोगमभिप्रेत्य। अवराद्धा जनाः। तेन विड़ालकर्णप्रमाणान्यूना बलयो न कार्य्या इत्यर्थः। एकत्र चेति नानास्थानकबलिदानासम्भवात् एकस्मिन्नेव स्थाने यदा बलयस्तदा अविकृताः परस्परसन्निहिता। अन्योन्यसंयुक्ताश्च कार्य्या इत्यर्थः।

यच्चादिबल्यनन्तरं विष्णुपुराणे,—

ततोऽन्यमन्नमादाय भूमिभागे शुचौ पुनः।
दद्यादशेषभूतेभ्यो स्वेच्छया तत् समाहितः॥

देवा मनुष्याः पशवो वयांसि
सिद्धाः सयक्षोरगदैत्यसङ्घाः।
प्रेताः पिशाचास्तरवः समस्ता
ये चान्नमिच्छन्ति मया प्रदत्तम्॥
पिपीलिकाः कीटपतङ्गकाद्या
बुभुक्षिताः कर्म्मनिबन्धबद्धाः[१]।
प्रयान्तु ते तृप्तिमिदं मयाऽन्नं
तेभ्यो विसृष्टं सुखिनो भवन्तु॥
येषां न माता न पिता न बन्धु-
र्नैवान्नसिद्धिर्न तथान्नमस्ति।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत्
ते यान्तु तृप्तिं मुदिता भवन्तु॥
भूतानि सर्व्वाणि तथान्नमेतत्
अहञ्च विष्णुर्न यतोऽन्यदस्ति।
तस्मादहं भूतनिकायभूत-
मन्नं प्रयच्छामि भवाय तेषाम्॥
चतुर्द्दशो भूतगणो य एष
तत्र स्थिता येऽखिलभूतसङ्घाः।
तृप्त्यर्थमन्नं हि मया विसृष्टं
तेषामिदन्ते मुदिता भवन्तु॥
इत्युच्चार्य्य नरो दद्यादन्नं श्रद्धासमन्वितः।

१ (ग) बद्धाः।

भूरि भूतोपकाराय गृही सर्व्वाश्रयो यतः ॥
श्वचाण्डालविहङ्गानां श्वपचां पापरोगिणाम् ।
वायसानां क्रमीणाञ्च शनकैर्निक्षिपेद्भुवि ॥

इदञ्च काम्यबलिदानं सर्व्वशाखिसाधारणं सङ्कोचे माना-
भावात् ।

मनुः,— शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम् ।
वायसानां क्रमीणाञ्च शनकैर्निक्षिपेद्भुवि[१] ॥
ऐन्द्रवारुणवायव्याः सौम्या वै नैर्ऋतास्तथा ।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम् ॥
श्वानौ द्वौ श्यावशवलौ वैवस्वतकुलोद्भवौ ।
ताभ्यां पिण्डं प्रदास्यामि स्यातामेतावहिंसकौ ॥
दत्त्वानेन विधानेन बलिं पश्चादुपस्पृशेत् ।
कृत्वैतद्बलिकर्म्मैवमतिथिं पूर्व्वमाशयेत् ।
भिक्षाञ्च भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे ॥
यत् पुण्यफलमाप्नोति गां दत्त्वा विधिवद्गुरोः ।
तत् पुण्यफलमाप्नोति भिक्षान्दत्त्वा तु भिक्षवे ॥
भिक्षामप्युदपात्रं वा सत्कृत्य विधिपूर्व्वकम् ।
वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत् ॥

छन्दोगपरिशिष्टे कात्यायनः,—
सायंप्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म्म च ।
अनश्नताऽपि सततमन्यथा किल्बिषी भवेत् ॥

१ निर्वपेत् ।

सायमिति पुनः पाके।

पुनः पाकमुपादाय सायमप्यवनीपते।

वैश्वदेवनिमित्तन्तु पत्न्या सार्द्धं बलिं हरेत् ॥

तत्रापि श्वपचादिभ्यस्तथैवान्नविसर्ज्जनमिति विष्णुपुराणात्।

बलिदानानन्तरं वशिष्ठ,—

श्रोत्रियाय दत्त्वा ब्रह्मचारिणे चानन्तरं पितृभ्यो दद्यात्।

पितृभ्यो दानं श्राद्धमिह। एतच्च तस्मिन् काले श्रोत्रियब्रह्म-चारिणोरुपस्थितौ अनुपस्थितौ वा बलिदानानन्तरमेव श्राद्धम्।

श्राद्धमित्यनुवृत्तौ शातातपः,—

यथाशक्त्याभिरूपाणां ब्राह्मणानाञ्च भोजनम्।

अपराह्णे तु सर्व्वत्र नित्यमेवं प्रकीर्त्तितम् ॥

अभिरूपाणां कुलादिसम्पन्नानाम्। अपराह्णे वैश्वदेवक्रिया-समाप्तौ ॥

मनुः,— दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा।

पयोमूलफलैर्व्वापि पितृभ्यः प्रीतिमावहन्[1] ॥

अन्नाद्यमन्नं तदभावे पयोमूलफलानि तदभावे उदकमिति व्यवस्थित-विकल्पः।

तथा,—

[2]अप्येकमाशयेत् विप्रं पित्र्यर्थं पाञ्चयाज्ञिकम्।

नचैवात्राशयेत् कञ्चिद्वैश्वदेवं प्रतिद्विजम् ॥

---

१ (ख) आहरेत्।

२ (क) एकमेवाशयेत् ...... विश्वदेवं।

छन्दोगपरिशिष्टे कात्यायनः,—

अप्येकमाशयेद्विप्रं पितृयज्ञार्थसिद्धये।

अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा॥

अप्युद्धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि।

पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजः॥

पितृभ्य इदमुक्तेति स्वधाकारञ्च कारयेत्॥

अदैवं विश्वदेववर्ज्जितम्। पितृभ्य इदमुक्तेति मिलितदेवताव श्राद्धे इति केचित्।

दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणे।

स्वेच्छया पुरुषो दद्यात् विभवे सत्यवारितम्॥

नरसिंहपुराणे,—

भिक्षाञ्च भिक्षवे दद्यात् परिव्राड्ब्रह्मचारिणे।

प्रकल्पितान्नादुद्धृत्य सर्व्वव्यञ्जनसंयुताम्॥

अकृते वैश्वदेवे तु भिक्षार्थं गृहमागते।

उद्धृत्य वैश्वदेवान्नं भिक्षां दत्वा विसर्ज्जयेत्॥

मत्स्यपुराणे,—

नित्यन्तावत् प्रवक्ष्यामि अर्घ्यावाहनवर्ज्जितम्।

अदैवन्तद्विजानीयात् पार्व्वणं पर्व्वसु स्मृतम्॥

लघुहारीतः,—

नित्यश्राद्धमदैवं स्यादर्घ्यावाहनवर्ज्जितम्।

पद्मपुराणे,—

यः पात्रपूरणीं भिक्षां यतिभ्यः संप्रयच्छति।

विमुक्तः सर्व्वपापेभ्यो नासौ दुर्गतिमाप्नुयात् ॥

मार्कण्डेयपुराणे,—

ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयम्।

अग्रं चतुष्टयं प्राहुर्हन्तकारं द्विजोत्तमाः! ॥

पद्मपुराणे,—

एकं वेदानुगं विप्रं भोजयेच्छ्रद्धयान्वितः।

तद्भुक्ता च भवेत् कोटिर्विप्राणान्नात्र संशयः ॥

विष्णुपुराणे,—

भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा।

अदत्त्वा च न भोक्तव्यं यथाविभवमात्मनः ॥

महाभारते,—

ग्रासमुष्टिं परगवे सात्रं दद्यात्तु सर्व्वदा।

अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति ॥

पद्मपुराणे,—

सौरभेय्यः सर्व्वहिताः पवित्राः पुण्यराशयः।

प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ॥

दद्यादनेन मन्त्रेण गवां ग्रासं सदैव हि।

गवां कण्डूयनं ग्रासं ग्रासमाह्निकमेव वा ॥

दत्त्वा भवेन्महापुण्यं गोप्रदानसमं नृणाम्।

भविष्यपुराणे,—

तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम्।

कपिलाशतदानस्य फलं विद्यान्न संशयः ॥

पञ्चभूते शिवे पुण्ये पवित्रे सूर्य्यसम्भवे ।
प्रतीच्छेदं मया दत्तं सौरभेयि नमोऽस्तु ते ॥

गवाह्निकं गवा यद्दिनेनान्नं भुज्यते ।

बलिदानानन्तरं ब्रह्मपुराणे,—

ततो गोदोहमात्रं वै कालन्तिष्ठद्गृहाङ्गणे ।
अतिथिग्रहणार्थाय तदूर्द्ध्वं वा यथेच्छया ॥
अतिथिं तत्र सम्प्राप्तं पूजयेत् स्वागतादिना ।
हिरण्यगर्भबुद्ध्या तं मन्येताभ्यागतं गृहम् ॥

॥ इति गृहस्थरत्नाकरे वैश्वदेवादिपञ्च-महायज्ञतरङ्गः ॥

---

## अथातिथिपूजा ।

तत्र [1]बलिदानानन्तरं वशिष्ठः,—

ततोऽतिथीन् भोजयेत् । श्रेयांसं श्रेयांसमानुपूर्व्व्येण ।

श्रेयांसं कुलादिभिरतिशयितम् । आनुपूर्व्व्येण यो यो यस्मादुत्कृष्टः । तं तं प्रथमं भोजयेदित्यर्थः ।

मनुः,—

सम्प्राप्ताय त्वतिथये प्रदद्यादासनोदके ।
अन्नञ्चैव यथाशक्ति सत्कृत्य विधिपूर्व्वकम् ॥

---

१ (ख) पिठ — ।

अग्निं हुत्वा विधानेन यत् पुण्यफलमाप्यते ।
तेन तुल्यं विशिष्टं वा ब्राह्मणे तर्पिते फलम् ॥

मन्त्रकर्म्मविपर्य्यायादिविशिष्टाद्दुतादपि ।
तत्फलं नाप्यते कर्त्तुरिदमश्रद्धया कृतम् ॥

शिलान(द)प्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः ।
सर्व्वं सुकृतमादत्ते ब्राह्मणोऽनर्च्चितो वसन् ॥

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥

सम्प्राप्ताय विना निमन्त्रणं स्वयमागताय । उदकं चरण-क्षालनाद्युपयुक्तं, विधिपूर्व्वकं अतिथिपूजाविध्यनुसारेण। शिलात् क्षेत्र-पतितशस्यशेषात् । उञ्छतः उच्चिन्वत इत्यर्थः । अनेन दरिद्रोऽप्यतिथिपूजां कुर्य्यादित्यर्थः । सूनृता प्रियसत्या ।

हारीतः,—

सर्व्वा अस्य देवता गृहानभ्यागच्छन्ति यस्यैवं विद्वान् ब्राह्मणो गृहानभ्येति तमनभ्युपतिष्ठतः प्राणदेवता अपक्रामन्ति । तस्मै यदाह स्वागतमिति गृहदेवता तेन प्रीणाति । यच्चासनादिभिरभ्य-र्च्चयत्यतिथिं यज्ञस्य तेन प्रीणाति । यत् पाद्यादिभिरभिषेचनं कुरुते पितॄन् प्रीणाति तेन । यदन्नेनाभिपूजयति प्रजापतिस्तेन प्रीणाति । यदेनं यान्तमनुयान्तीति श्रेयस्यं ब्रह्मवर्च्चसं तेन सर्व्वान् कामानवाप्नोति ।

अनभ्युपतिष्ठतः अभ्युत्थानमकुर्व्वतः ।

शङ्खलिखितौ,—

श्रोत्रियो वेदव्रती यतिधर्म्मा नैष्ठिकः समानवृत्तिर्य्योऽन्यो-ऽभ्यागच्छेत्तस्मिन् काले तमर्च्चयित्वा अश्नीयात्।

श्रोत्रियोऽत्र वेदानामेकशाखामधीत्य श्रोत्रियो भवति इत्यापस्तम्बवचनविषयः। वेदव्रती उपकुर्व्वाणकः। यतिधर्म्मा यतिः। नैष्ठिको ब्रह्मचारी। समानवृत्तिस्तुल्यजीवनहेतुः।

यथा प्रणीतस्याप्रणीतस्याग्निर्दैवतमेवं हि विद्वांश्चाविद्वांश्च ब्राह्मणः पूज्य एव सर्व्वेषाम्।

प्रणीतोऽत्र संस्कृताग्निः। तथा वयो-वर्ण-विद्या-तपः-सम्पन्नाय पाद्यमर्घ्यमाचमनीयमन्नविशेषांश्चैतस्मै शक्तितो दद्यात्।

सहासीत प्रदोषेऽनुज्ञाप्य शयीत पूर्व्वं प्रतिबुध्येत प्रस्थितमनु-व्रजेत्। समेत्य न्यायतो निवर्त्तेत। आराम-सभा-प्रपा-तड़ाग-देव-गृह-महाद्रुम-नदीनामन्यतरस्मिन् प्रदक्षिणं कुर्य्याद्वाचमुत्सृज्य पुनर्द्दर्शनायेति।

अन्नविशेषान् भोज्यविशेषादीन्। पुनर्द्दर्शनायेति पुनर्द्दर्शनाय वाचमुत्सृजेदित्यर्थः।

अभ्यागतानुवृत्तौ वशिष्ठः।

तं भोजयित्वोपासीत। यान्तमनुव्रजेदानुज्ञानाद्वा।

गोतमः,—

श्रोत्रियस्य तु पाद्यमर्घ्यमन्नविशेषांश्च कारयेत्। नित्यं सत्कारविशिष्टं शाध्यतोऽन्नपानमविद्ये साधुवृत्ते। विपरीते तृणोदके

भूमिः स्वागतमन्ततः पूजनमन्ननानभ्यासश्च कारयेत्। पचेन्नित्यं वा सत्कारविशिष्टमन्नम्।

विशेषपाकासामर्थ्ये नित्यपच्यमानमेवान्नं सत्कारपूर्व्वकं देयम्। मध्यतः मध्यविधादरेण अविद्ये विद्याशून्ये विपरीते असाधुचरिते अनभ्यासोऽनतिक्रमः।

आपस्तम्बः,— ब्राह्मणायानधीयानायासनमन्नमिति देयम्। न प्रत्युत्तिष्ठेत्। अभिवादनायैवोत्तिष्ठेदभिवाद्यश्चेत्। राजन्य-वैश्यौ च। शूद्रमभ्यागतं कर्म्मणि नियुञ्ज्यात्। अथास्मै दद्यात्। दासा वा राजकुलादाहृत्यातिथिवच्छूद्रं पूजयेयुः।

अभिवाद्यो वयोबाहुल्यादिना राजन्य-वैश्यौ च प्रति नोत्तिष्ठेदिति सम्बन्धः। राजकुलात् निजस्वामिगृहात्।

शङ्ख-लिखितौ,— न ब्राह्मणोऽतिथिर्ब्राह्मणस्य श्रोत्रियाय गुणवते आतिथ्यम्। राजन्य-वैश्याभ्यां मित्रवत्। शूद्रस्यानृशंस्यार्थम्।

न ब्राह्मणोऽतिथिर्ब्राह्मणस्य प्रणामादिना सम्भाव्यः। अपि तु श्रोत्रियाय तथाविधमातिथ्यं कार्य्यमन्येषां मित्रवदन्नमात्रम। आनृशंस्यार्थं दयाजन्यफलार्थम।

मनुः,—

[1]ब्राह्मणस्य त्वनतिथिर्गृहे राजन्य उच्यते।
वैश्य-शूद्रौ सखा चैव ज्ञातयो गुरुरेव च॥
यदि त्वतिथिधर्म्मेण क्षत्रियो गृहमाव्रजेत्।
भुक्तवत्सु च विप्रेषु कामं तमपि भोजयेत्॥

[1] (क) (ख) पुस्तकद्वये न ब्राह्मणस्य त्वतिथिः।

वैश्य-शूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्म्मिणौ ।
भोजयेत् सह भृत्यैस्तावानृशंस्यं प्रयोजयन्[१] ॥

कुटुम्बमिह गृहस्थः ।

बलिदानानन्तरं बौधायनः,—

ब्राह्मणक्षत्रियवैश्यशूद्रानागतान् यथाशक्त्या पूजयेत् । यदि बहूनां न शक्नुयात् तदा एकस्मै गुणवते दद्यात् । यो वा प्रथममभ्यागतः स्यात् ।

मनुः,—

आसनावसथौ शय्यामनुव्रज्यामुपासनम् ।
उत्तमेषूत्तमं कुर्य्यात् हीने हीनं समे समम् ॥

वशिष्ठः,—

अथापि ब्राह्मणाय वा राजन्याय वा अभ्यागताय वा महोक्षं महाजं वा पचेत् । एवमस्यातिथ्यं कुर्व्वन्तीति ।

अत्र यद्यपि अतिथिहप्त्यर्थं गोवधविधिः श्रूयते तथापि—

दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः ।
गोत्रान्मातृसपिण्डाद्वा विवाहो गोवधस्तथा ॥
नराश्वमेधौ मद्यञ्च कलौ वर्ज्ज्यं द्विजातिभिः ।

. इति ब्रह्मपुराणान्निषेधः ।

मनुः,— अप्रणोद्योऽतिथिः सायं[२] सूर्य्योढ़ो गृहमेधिनाम् ।
कालो प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत् ।

---

१ (ख) (ग) पुस्तके—सत्कृत्य च तावानृशंस्यप्रयोजनात् ।
२ (ख) प्राप्त ... ... — मेधिना ।

न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत्।
धन्यं[1] यशस्यमायुष्यं स्वर्ग्यञ्चातिथिभो(पू)जनम्॥

अप्रणोद्योऽप्रत्याख्येयः सूर्य्योढः, सूर्य्येणास्तमयतां प्रापितः कालो वैश्वदेवान्तः। अकालस्तदन्यः।

शातातपः,—

जन्मनैव महाभागो ब्राह्मणो नाम जायते।
नमस्यः सर्व्वभूतानां वर्णश्रेष्ठः पिता गुरुः॥
नान्येषां पूजनीयोऽन्यस्त्रिषु लोकेषु कश्चन।
तपो-विद्याविशेषेण पूजयन्ति परस्परम्॥
अन्योन्यं गुरवो विप्रा अन्योन्यातिथयस्तथा।
अन्योन्यमुपकुर्व्वन्ति तारयन्ति तरन्ति च॥

विष्णुः,—स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा।
नैवाप्नोति गृही लोकान् यथा चातिथिपूजनात्॥

विष्णुपुराणे,—

धाता प्रजापतिः शक्रो वह्निर्वसुगणोऽर्य्यमा।
प्रविश्यातिथिमेते वै भुञ्जतेऽथ नरेश्वर!॥
तस्मादतिथिपूजायां यतेत सततन्नरः।
न केवलमघं भुङ्क्ते मद्यं भुङ्क्तेऽतिथिं विना॥

शातातपः,—

प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा।
वैश्वदेवे तु संप्राप्ते सोऽतिथिः स्वर्गसंक्रमः॥

१ (ग) धर्म्यं।

नदीसंक्रमवत् स्वर्गप्राप्तिहेतुः ।

तथा,—

[ भिक्षां वा पुष्कलां वापि हन्तकारमथापि वा ।
अन्नाभावे सदा दद्यात् - - - - ] ॥
ग्रासमात्रा भवेद्भिक्षा पुष्कलं तु चतुर्गुणम् ।
पुष्कलानि तु चत्वारि हन्तकारं विदुर्बुधाः ॥

याज्ञवल्क्यः,—

अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः ।

अध्वनीनः सततमध्वगामी ।

गोतमः,—

असमानग्रामीणोऽतिथिरेकरात्रिकः ।

एकरात्रिकः एकरात्रं वासशीलः ।

मनुः,—

एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ।
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥

यमः,—

व्रती यतिरेकरात्रं निवसन्नुच्यतेऽतिथिः ।

आपस्तम्बः,—

अग्निरिव ज्वलन्नतिथिः स्वधर्मयुक्तं कुटुम्बिनमभ्यागच्छति स्वधर्मपुरस्कारो नान्यप्रयोजनः ।

स्वधर्मयुक्तं स्वधर्माचारभाजनं, स्वधर्मपुरस्कारो धर्मार्थमटनशीलः; नान्यप्रयोजनः अन्नमात्राग्रयाटनशीलः ।

यमः,—

तिथिपर्व्वोत्सवाः सर्व्वे त्यक्ता येन महात्मना।
सोऽतिथिः सर्व्वभूतानां शेषानभ्यागतान् विदुः॥

पर्व्वाणि अमावस्यादीनि एतदन्याः प्रतिपदादयस्तिथयः। उत्सवाः विषुवादयः, अन्नप्राप्तिहेतवो धर्म्मपुरस्कारेण येन त्यक्ताः सोऽतिथिरित्यन्वयः।

शातातपः,—

अचिन्तितमनाहूतं देश-काल उपस्थितम्।
अतिथिन्तं विजानीयान्नातिथिः पूर्व्वमागतः॥
क्षुधार्त्तस्तृषितः श्रान्तो दूराद्ध्वन आगतः।
तं पूजयेत् प्रयत्नेन सोऽतिथिः स्वर्गसंक्रमः॥

देशो भार्य्याग्निसन्निहितः। कालो वैश्वदेवान्तादिः।

मनुः,—

नैकग्रामीणमतिथिं विप्रं साङ्गतिकन्तथा।
उपस्थितं गृहे विद्यात् भार्य्या यत्राग्नयोऽपि वा॥

एकग्रामीणोऽप्येकग्रामवासी, साङ्गतिकः-चित्रपरीहासादिभिः सर्व्वैः सह सङ्गतो भवति। गृहे निवासस्थाने भार्य्या यत्राग्नयोऽपि वेति न केवलं गृहे अतिथिरपि तु प्रोषितस्यापि ग्रामान्तरे यत्र भार्य्या अग्निर्वा तत्रापीत्यर्थः॥

यमः,—

अतिथिं पूजयेद्यस्तु श्रान्तञ्चादृष्टपूर्व्वकम्।
सदृशं गोशतं तेन दत्तं स्यादिति मे मतिः॥

न पृच्छेद्गोत्रचरणं स्वदेशं नाम वा कुलम्।
अध्वनोऽभ्यागतं विप्रं भोजनार्थमुपस्थितम्॥

देशं नाम कुलं विद्यां पृष्ट्वा योऽर्थं प्रयच्छति।
न स तत् फलमाप्नोति दत्त्वा स्वर्गं न गच्छति॥

चरणः स्वशाखा॥

देवलः,—

न पृच्छेद्गोत्रचरणं स्वाध्यायं जन्म चैव हि।
चित्तन्तु भावयेत्तस्मिन् व्यासः स्वयमुपागतः॥

व्यासः स्वयमुपागत इति तस्मिन्नतिथौ बुद्धिं कुर्य्यादित्यर्थः।

यमः,—

देशं गोत्रं कुलं विद्यामन्नार्थी यो निवेदयेत्।
वैवस्वतेषु धर्म्मेषु वान्ताशी स निरुच्यते॥

बृहस्पतिः,—

आगतस्यासनं दद्यात् श्रान्तस्य शयनन्तथा।
तृषितस्य च पानीयं क्षुधितस्य च भोजनम्॥

चक्षुर्दद्यान्मनो दद्याद्वाचन्दद्याच्च सूनृताम्।
एवं साधारणो धर्म्मश्चातुर्व्वर्ण्योऽब्रवीन्मनुः॥

प्रीयते स्वागतेनाग्निरासनेन शतक्रतुः।
पितरः पादशौचेन भोजनेन प्रजापतिः॥

विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी।
तावत् पुष्करपात्रेण पिबन्ति पितरो जलम्॥

यस्याध्वखिन्नाः पथिकाः गृहमायान्ति कर्षिताः।
पूज्यन्ते तृणभूम्याद्यैः[1] पितरस्तेन पुत्रिणः॥

कर्षिताः अतिपीड़िताः।

दक्षः,—

[2]सुधावस्तूनि वक्ष्यामि विशिष्टे गृहमागते।
मनश्चक्षुर्मुखं वाचं सौम्यं दद्याच्चतुष्टयम्॥
अभ्युत्थानमिहागच्छ पूर्व्वालापः प्रियान्वितः।
उपासनमनुव्रज्या कार्य्याण्येतानि यत्नतः॥
ईषद्दवस्तूनि चान्यानि भूमिरापस्तृणानि च।
पादशौचं तथाभ्यङ्गमाश्रयः शयनन्तथा॥
किञ्चिद्दाचौ यथाशक्ति न च्यासाश्नन् गृहे वसेत्।
मृज्जलं चार्थिने देयमेतान्यपि सतां गृहे॥

ईषद्दस्तूनि अप्रयत्नसाध्यानि उपासनमन्तिके।

यत्यधिकारे पुनर्दक्षः,—

तपो जपैः कृशीभूतो व्याधितोऽवमथार्हकः।
[3]वृद्धो ग्रहगृहीतश्च यश्चान्यो विकलेन्द्रियः॥
नीरुजश्च युवा चैव [भिक्षुर्नावसथार्हकः[4]।
सन्दूषयति तत्स्थानं वृद्धः पीड़यतीति च॥
नीरुजश्च युवा चैव] ब्रह्मचर्य्याद्विनश्यति।
ब्रह्मचर्य्याद्विनष्टश्च कुलं गोत्रञ्च नाशयेत्॥

---

१ (ग) भूम्याद्यैः। २ मूले सुधावस्तूनि।
३ (ग) बद्धः। ४ (ग) [ ] चिह्नितांशः पतितः।

वसत्यावसथे भिक्षुर्मैथुनं यदि सेवते।
तस्यावसथनाथस्य मूलान्यपि निकृन्तति॥
आश्रमे च यतिर्यस्य विश्राम्यति मुहूर्त्तकम्।
किन्तस्यानेन धर्म्मेण कृतकृत्यो हि स स्मृतः॥
जन्मप्रभृति यत् पापं गृहस्थेन तु यत्कृतम्।
निर्म्मार्ज्जयति तत् सर्व्वमेकरात्रोषितो यतिः॥

आवसथार्हकोऽत्र गृहे वासयितुमुचितः। वृद्धोऽत्तमः। पक्षगृहीतो भृताद्यभिभूतः।

यमः,—

नाग्निहोत्रेण दानेन नोपवासोपलेपनैः।
देवताः परितुष्यन्ति यथा चातिथिपूजनैः॥
अतिथिः पूजितो येन ध्यायेत मनसा शुभम्।
न तत् क्रतु-शतैर्व्वापि तुल्यमाहुर्म्मनीषिणः॥
आसनं पादशौचञ्च दीपमन्नं प्रतिश्रयम्।
दद्यादेतानि यः पञ्च सर्व्वज्ञः सर्व्वदक्षिणः॥
अन्नदः प्राणदो ज्ञेयो रूपदो वस्त्रदः स्मृतः।
स हि सर्व्वप्रदो नाम यो ददाति प्रतिश्रयम्॥
गृहस्थैरपि यद्भुक्तं स्नातकैर्व्वेदपारगैः।
यतिनाऽपि च यद्भुक्तं तच्छ्रेयो नेतरैस्तथा॥
यत् किञ्चित् कुरुते ध्यायी दातुरर्द्धं प्रयच्छति।
तस्मात् महत्फलं दानं ध्यायिने स्नातके तथा॥

अश्वमेध-सहस्रेण राजसूय-शतेन च।
पुण्डरीक-सहस्रेण योगिष्वावसथो वरः॥
श्रान्तायादृष्टपूर्व्वाय विप्रायाध्वनि वर्त्तिने।
ददाति योऽन्नमक्लिष्टं स यज्ञैः सर्व्वदक्षिणः॥

प्रतिश्रयो वासगृहं। श्रेयः प्रशस्ततरं। इतरैर्य्ययोक्त-गृहस्था-दन्यैः, पुण्डरीको यागविशेषः[1]। अक्लिष्टमुत्कृष्टम्।

अतिथये दद्यादित्यनुवृत्तौ विष्णुः,—

प्रतिश्रयं तथा शय्यां पादाभ्यङ्गं प्रदीपकम्।
प्रत्येक-दानेनाप्नोति गोप्रदानसमं फलम्॥

यमः,—

येषामनश्नन्नतिथिर्व्विप्राणां वा व्रजेद्गृहात्।
ते वै खरत्वमुष्ट्रत्वमश्वत्वमुपपेदिरे॥
यस्य चैव वसेद्विप्रो गृहे कश्चिदभोजितः।
न तस्य देवाः पितरो हव्यं कव्यञ्च भुञ्जते॥
अतिथिर्य्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते।
सुकृतन्तस्य यत् किञ्चित् सर्व्वमादाय गच्छति॥
अतिथिर्य्येन वै ग्रामे भिक्षमाणः प्रयत्नतः।
शेते निरशनस्तेन ब्रह्महत्या विधीयते॥
अपि शाकं पचानस्य शिलोञ्छेनापि जीवतः।
स्वदेशे परदेशे वा नातिथिर्व्विमना भवेत्॥

---

[1] (ख) योगविशेषः।

अग्नयोऽतिथिमिच्छन्ति सोऽतिथिः स्वर्गमिच्छति ।
स्वर्गोऽप्यौच्छति दातारं सम्यक् सुकृतकारिणम् ॥

पराशरः,—

अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।
न तस्य पितरोऽश्नन्ति दशवर्षाणि पञ्च च ॥
अग्निहोत्रं जरत्कन्या दारे च पशुबन्धनम् ।
अतिथिर्वैश्वदेवान्ते निर्द्दहत्यवमानतः ॥

जरज्जरायुक्ता दारे पशुबन्धनं स्वकाले यवसोदकाद्यदाने सति ।

मनुः,—

वैश्वदेवे तु निर्वृत्ते यदन्योऽतिथिराव्रजेत् ।
तस्यैवान्नं यथाशक्ति प्रपद्यान्न बलिं हरेत् ॥

वैश्वदेवे वैश्वदेवान्नपाके, निर्वृत्ते कृतप्रयोजने निःशेष इति यावत् । अतिथिरतिथिलक्षणोपेतः । बलिं हरेदिति मनुष्ययज्ञव्यतिरिक्त-पाकयज्ञोपलक्षणम् ।

विष्णुपुराणे,—

पथिकाश्च ह्यनाहारा ये च सायं गृहागताः ।
तेषां गृहस्थः सर्व्वेषां प्रतिष्ठा योनिरेव च ॥

प्रतिष्ठा आश्रयः । योनि अन्नादिदानेन जीवनहेतुः ।

दिनेऽतिथौ च विमुखे गते यत् पातकं नृणाम् ।
तदेवाष्टगुणं पुंसां सूर्य्योढे विमुखे गते ॥

आपस्तम्बः,—

एकरात्रञ्चेदतिथीन् वासयति पार्थिवान् लोकानभिजयति

द्वितीयेनान्तरीक्षान् तृतीयेन दिव्यान्। चतुर्थेन परतो-लोकानपरिमिताभिरपरिमितान् लोकानभिजयतीति विज्ञायते।

मनुः,—

इतरानपि सख्यादीन् सम्प्रीत्या गृहमागतान्।
प्रकृत्याऽन्नं यथाशक्ति भोजयेत् सह भार्य्यया॥

आदिशब्देन सम्बन्धिबान्धवादीनामुपादानं, प्रकृत्य प्रकर्षेण सत्कृत्य सह भार्य्यया गृहस्थस्तान् भोजयेदित्यर्थः। एवञ्च भार्य्यायाः परिवेशनादावन्वयः।

याज्ञवल्क्यः,—

भोजयेत् स्वागतान् काले सखि-सम्बन्धि-बान्धवान्।
अहःशेषं सहासीत शिष्टैस्[1] सह बन्धुभिः॥

काले भोजनकाले।

मनुः,—

राजर्त्विक्-स्नातकाचार्य्य-प्रिय-श्वशुर-मातुलान्।
अर्हयेन्मधुपर्क्केण परिसंवत्सरात् पुनः॥

राजाऽत्राभिषिक्तः क्षत्रियधर्म्मेण प्रजापालः।

राजा च श्रोत्रियश्चैव यज्ञकर्म्मण्युपागते।
मधुपर्क्केण सम्पूज्यो नत्वयज्ञ इति स्थितिः॥

गौतमः,—

ऋत्विगाचार्य्य-श्वशुर पितृव्य मातुलानामुपस्थाने मधुपर्क्कः संवत्सरे, पुनर्य्यज्ञविवाहयोरर्व्वाक्। राज्ञश्चश्रोत्रियस्यासनोदके।

---

१ (ख) शिष्टैरिष्टैश्च।

ऋत्विगादीनां गृहागमने सति मधुपर्केण पूजा संवत्सरे पुन-रुपस्थाने मधुपर्क इत्यर्थः । यज्ञ-विवाहयोरर्व्वागिति यज्ञ-विवाहयोरुपस्थाने संवत्सरादर्व्वागपि मधुपर्को देयः । राज्ञ इति श्रोत्रियस्य राज्ञः संवत्सरादर्व्वागपि मधुपर्को देयः । अश्रोत्रियस्य राज्ञ आसनोदक एव ।

आपस्तम्बः,

[१]मधुपर्कार्हो वेदाध्यायः । आचार्य्य ऋत्विक् स्नातको राजा च[२] धर्म्मयुक्तः । आचार्य्याय ऋत्विजे श्वशुराय राज्ञ इति परि-संवत्सरादुपतिष्ठद्भ्यो गौर्म्मधुपर्कश्च । दधि मधुसंसृष्टं मधुपर्कः । पयो वा मधुसंसृष्टम् । (अभावे उदकम्)[३] ।

वेदाध्यायोऽधीतवेदः । परिसंवत्सरात् प्रतिसंवत्सरम् ।

मनुः,—

सुवासिनीः कुमारांश्च रोगिणो गर्भिणीस्तथा ।
अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन् ॥

सुवासिनी ऊढ़ा कन्या । कुमारा बालाः ।

गोतमः,—

भोजयेत् पूर्व्वमतिथिं कुमार व्याधित सुवासिनी स्थविरान् जघन्यांश्च ।

अतिथिभोजनस्य गोतमेन बालादिभोजनात् पूर्व्वमुक्तं तदतिथेरभ्यर्हितत्वं बोधयितुं विवक्षितम् ।

१ मूले गोमधुपर्कार्हः । २ मूले वा ।
३ (क) (ख) पुस्तके चिह्नितांशो नास्ति ।

यद्वा बालादीनां भोजने पौर्व्वापर्य्यमनादेयं किन्तु दम्पत्योः शेषभोजनमिष्टम् ।

मनुः,—

अदत्वा तु य एतेभ्यः पूर्व्वं भुङ्क्ते विचक्षणः ।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः ॥

इत्येकवाक्यतया एतेष्वभुक्तवत्सु स्वयन्न भोक्तव्यमित्येवाभिमतम् ।

आपस्तम्बः—

सर्व्वान् वैश्वदेवभागिनः कुर्व्वीताश्वचाण्डालेभ्यो नानर्हद्भ्यो दद्यादित्येके ।

सर्व्वानर्थिनः वैश्वदेवभागिनः वैश्वदेवान्नभागिनः कुर्य्यात् । आश्वचाण्डालेभ्य इत्यभिविधावाङिति अनर्हद्भ्यः श्वचाण्डाल-पाषण्डेभ्यः । अनर्हतामदाने न दोषः, दाने पुण्यमिति व्यवस्था ।

नन्दिपुराणे,—

यतेर्ब्राह्मणपूर्व्वन्तु भैक्ष्यमन्नं सदा गृही ।

देवलः,—

असृतं भोजयेद्विप्रं स्वगृहे सति सर्पिषि ।
परत्र निरयं घोरं गृहस्थः प्रतिपद्यते ॥
मिष्टमन्नं स्वयं भुक्त्वा पश्चात् कदन्नं लघु ।
ब्राह्मणं भोजयेन्मूर्खो निरये चिरमाविशेत् ॥

मार्कण्डेयपुराणे—

कुटुम्बिनो भोजनीयाः सामर्थ्याद्विभवे सति ।
सीदता यत् कृतं तेन तत् पापं स समश्नुते ॥

स्वसामर्थ्यभोज्यतुल्यं भोज्यम् ।

यमः,—

अपचन्तमतिक्रम्य पचन्तं यस्तु भोजयेत् ।
सुविकाणां अजेद्योनिं वर्षाणामधिकं शतम् ॥
एवं यः सर्व्वभूतानि ब्राह्मणो नित्यमर्च्चति ।
स याति परमं स्थानं तेजोमूर्त्तिः पथार्ज्जुना ॥

परमं स्थानं परमं पदं पथार्ज्जुना ऋजुना वर्त्मना ।
न तु जन्मपरम्पराक्रमेण ।

वशिष्ठः,—

गृहेष्वभ्यागतं मर्हयेद्यथाशक्ति चान्नेन सर्व्वभूतानि गृहस्थः ।
मर्हयेत् पूजयेत् ।

गृहस्थ एव यजते गृहस्थस्तप्यते तपः ।
चतुर्णामाश्रमाणाञ्च गृहस्थस्तु विशिष्यते ॥

पैठीनसिः,—

सर्व्व एव गृहस्थमूलास्तदुपजीविनः ।
गृहस्थस्यैव पूजादिकर्त्तृत्वात् ।

वसिष्ठः,—

यथा मातरमाश्रित्य सर्व्वे जीवन्ति जन्तवः ।
एवं गृहस्थमाश्रित्य सर्व्वे जीवन्ति भिक्षुकाः[१] ॥

मनुः,—

यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् ।
गृहस्थेरेव धार्य्यन्ते तस्माज्ज्येष्ठाश्रमी[२] गृही ॥

---

१ मूले—भिक्षवः । २ (ख) ज्यष्ठाश्रमो गृही ।

तथा,—

गृहस्थोऽपि क्रियायुक्तो न गृहेण गृही भवेत्।
न चैव पुत्रदारेण स्वकर्म्मपरिवर्ज्जितः॥

क्रियाः पञ्चयज्ञाद्याः। स्वकर्म्म पञ्चयज्ञात्मकम्।

तथा,—

अस्नात्वा चाप्यहुत्वा च अदत्वा ये च भुञ्जते।
देवादीनामृणी भूत्वा नरकन्ते व्रजन्त्यधः॥

भविष्यपुराणे,—

अकृत्वा वैश्वदेवन्तु ये भुञ्जन्ते बुधाः खग!।
तथा विना तु साह्येण मृगयोनिं व्रजन्ति ते॥

विना साह्येण अतिथ्यातिथ्यादिरहितेन।

आपस्तम्बः,—

यस्याग्नौ न हूयते यस्याग्रं न दीयते। न तद्भोक्तव्यम्।

वय्याजस्य।

जावालः,—

अस्नाताशी मलं भुङ्क्ते अजपी पूय-शोणितम्।
अदत्त्वा तु कृमिं भुङ्क्ते अदत्वा विषभोजनम्॥

यमः,—

अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्।
इन्द्रियप्रीतिजननं वृथापाकं विवर्ज्जयेत्॥

बौधायनः,—

न चैव कश्चिददत्वा भुञ्जीत।
अथाप्यत्राजगीतौ श्लोकौ उदाहरन्ति।

यो मामदत्वा पितृदेवताभ्यो
भृत्यातिथीनां सुहृज्जनस्य ।
सम्पन्नमश्नन् विषमत्ति मोहात्
तमद्म्यहन्तस्य च मृत्युरस्मि ॥
हुताग्निहोत्रः कृतवैश्वदेवो
[१]पूज्यातिथीन् भृत्यजनावशिष्टम् ।
तुष्टः शुचिः श्रद्दधदत्ति यो मां
तस्यामृतं स्यां स च मां भुनक्ति ॥

भोजयेदित्यनुवृत्तौ—

वशिष्ठः,—

स्वगृह्याः कुमारीबालवृद्धतरुणप्रजाताः, ततोऽपरान् गृह्यान् । श्वचाण्डालपतितवायसेभ्यो भूमौ निर्व्वपेत् । शूद्रायोच्छिष्टमनुच्छिष्टं वा दद्यात् । शेषं दम्पती भुञ्जीयाताम् । सर्व्वोपयोगे तु पुनः पाकः कार्य्यः ।

तरुणप्रजाता नवप्रसूता, गृह्या गृहभवाः परिचारकाः । उच्छिष्टानुच्छिष्टदानविकल्पः आश्रितानाश्रितशूद्रविषयः सद्सच्छूद्रविषयो वा बोद्धव्यः । सर्व्वोपयोगे सर्व्वस्यान्नस्य उपयोगे आतिथ्यादिना । [२][ सर्व्वस्यान्नस्यातिथिभिर्भोजने कृते यदाऽन्यत् प्रयोजनमस्ति तदा पुनः पाकः कार्य्यो न पुनर्वैश्वदेवादि कार्य्यमिति कल्पतरुः ] ।

१ (ख) (ग)—मुक्ताऽतिथिः ।
२ (ख) पुस्तके [ ] चिह्नितांशो नास्ति ।

याज्ञवल्क्यः,—

बालसुवासिनीवृद्धगर्भिण्यातुरकन्यकाः।

सम्भोज्याऽतिथिभृत्यांश्च दम्पत्योः शेषभोजनम्॥

एते दम्पत्योरवश्यं भर्त्तव्याः।

भार्य्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियापरः।

नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्॥

भार्य्या स्वीया, श्राद्धक्रिया श्राद्धकरणं नमस्कारेण नम इति मन्त्रेण।

पराशरः,—

षट्कर्म्माभिरतो नित्यं देवतातिथिपूजकः।

हुतशेषन्तु भुञ्जानो ब्राह्मणो नावसीदति॥

षट्कर्म्माणि यज्ञादीनि।

॥ इति गृहस्थरत्नाकरेऽतिथिपूजातरङ्गः॥

पञ्च महायज्ञाः समाप्ताः॥

---

## अथ भोजनविधिः।

तत्र दक्षः,—

पञ्चमे च तथा भागे संविभागो यथार्हतः।

देव-पितृ-मनुष्याणां कीटानाञ्चोपदिश्यते॥

संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत्।

संविभागो विभज्य प्रतिपत्तिः।

मनुः,—

विघसाशी भवेन्नित्यं नित्यञ्चामृतभोजनः ।

विघसं भुक्तशेषन्तु यज्ञशेषमथामृतम् ॥

अमृतममृतवत्तृप्तिकरं पवित्रञ्च ।

देवलः,—

स्नात्वा प्रक्षाल्य पादौ तु सम्यक्स्वालङ्कृतः शुचिः ।

पञ्चयज्ञावशिष्टञ्च यो भुङ्क्ते सोऽमृताशनः ॥

उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य यत्नतः ।

प्राङ्मुखोऽन्नानि भुञ्जीत शुचिः पीठमवस्थितः ॥

बौधायनः,—

प्रक्षालितपाणिपादोऽप आचम्य शुचौ संवृते देशे अन्नमुपहृतमुपसंगृह्य———कामक्रोध-लोभमोहानपहृत्य सर्व्वाभिरङ्गुलीभिः शब्दमकुर्व्वन् प्राश्नीयात् । न पिण्डशेषं पात्र्यामुत्सृजेत् । मांस-मत्स्य-तिल-मधुसंसृष्टं प्राश्याप उपस्पृश्याग्निमुपस्पृशेत् ।

संवृते वस्त्रादिना आवृते देशे उपविश्येति शेषः । उपहृतमुपनीतं उपसंगृह्य निकटस्थे पात्रे समादरेण सम्यक् गृहीत्वा शब्दमकुर्व्वन् भक्षणे क्रियमाणे शीत्कारादिकमनाचरन्मौनस्यैवात्र विधानात् ।

पिण्डशेषमशितं गृहीताऽन्नस्य शेषं पात्र्यां भोजनस्य ।

शङ्खः,—

चतुष्कोणं द्विजातीनां त्रिकोणं क्षत्रियस्य तु ।

मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् ॥

ब्रह्मपुराणे,—

आचमनस्य तु यो दर्भात् पङ्क्तिमध्यमुपस्पृशेत् ।
विप्रेन्द्रो जनभूमिश्च अप्रक्षालितपाणिमान् ॥
स सर्व्वेषान्तु यत्पापं तद्भुङ्क्ते नराधमः ।
तस्मादचिरमुपस्पृश्य आचान्तः प्रविशेद्गृहम् ॥
उपलिप्ते समे स्थाने शुचौ शुद्धासनान्विते ।
चतुरस्रं त्रिकोणञ्च वर्त्तुलञ्चार्द्धचन्द्रकम् ॥
कर्त्तव्यमानुपूर्व्व्येण ब्राह्मणादिषु मण्डलम् ।
ब्रह्मरुद्रेन्द्रचन्द्रार्का वसवो मण्डलान्तरात् ॥
निवेदितं नरैरन्नं यस्माद्गृह्णन्ति नान्यथा ।
अकृत्वा मण्डलं ये तु भुञ्जतेऽधमयोनयः ॥
तेषान्तु यक्षरक्षांसि हरन्त्यन्नस्य तद्बलात् ।
पात्रेष्वन्नानुरूपेषु पुत्रभृत्यानुजैः सह ॥
भूम्यां पात्रं प्रतिष्ठाप्य मौनेनान्नन्तु भक्षयेत् ।
पवित्रपाणिः प्रथमं लभेत्तत्त्वाघमर्षणम् ॥

अन्नानुरूपेषु धनानुरूपेषु अघमर्षणं अघमर्षणजं पुण्यम् ।

व्यासः,—

भूमौ पात्रं प्रतिष्ठाप्य यो भुङ्क्ते वाग्यतः शुचिः ।
भोजने भोजने चैव त्रिरात्रफलमश्नुते ॥

मनुः,—

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः ॥

आयुष्यं आयुषे हितमेवं यशस्यं, श्रियं ऋतं वाञ्छन्निति शेषः । ऋतं सत्यं यज्ञं वा ।

हारीतः,—

नोदङ्मुखः शयनासने वाश्नीयात् ।

*न कार्ष्णायसे न मृत्पात्रे न भिन्नावकीर्णे ।*

कार्ष्णायसे लौहपात्रे । मृत्पात्रे मृत्तिकाघटितभाजने । भिन्ने विघटिते । अवकीर्णे दुष्टभोजनाद्यपवित्रीकृते । नोदङ्मुख इति तु निषेध ऋतमवाञ्छताम् ।

वामनपुराणे,—

भुञ्जीत नैवेह च दक्षिणामुखो

न च प्रतीचीमभि भोजनीयम् ।

अयमपि प्रत्यङ्मुखनिषेधो निष्कामविषयः । सकामस्य तन्मुख-भोजनविधानात् । दक्षिणामुखभोजननिषेधस्तु जीवन्मातृविषयः ।

पुष्टिकामाधिकारे—

वाग्यतो दक्षिणामुखो भुञ्जीत । अनायुष्यन्त्वस्य भोजनं मातुरित्युपदिशन्ति ।

इत्यापस्तम्बवाक्यात् ।

विष्णुपुराणे,—

नैकवस्त्रधरो नार्द्रपाणिपादो नरेश्वर ।

विशुद्धवदनः प्रीतो भुञ्जीत न विदिङ्मुखः ॥

प्राङ्मुखोदङ्मुखो वापि न चैवान्यमना नरः ।

विदिङ्मुखः आग्नेयकोणादिमुखः, प्राङ्मुख उदङ्मुखो वेत्यत्र भुञ्जीतेत्यन्वयः । वाकारस्तानाम्नायाम् ।

यमः,—

प्राङ्मुखोऽन्नानि भुञ्जीत पञ्चार्द्रो वाग्यतः शुचिः।

भुञ्जीत चार्द्रपादस्तु नार्द्रपादः स्वपेन्निशि॥

आर्द्रपादस्तु भुञ्जानः शतं वर्षाणि जीवति।

*पञ्चार्द्रेति करद्वय-चरणद्वय-वदनार्द्रः। पुनरार्द्रपाद इत्यभि-धानं पादार्द्रतायामादरद्योतनार्थम्।*

विष्णुपुराणे,—

स्नातो यथावत् कृत्वा तु देवर्षिपितृतर्पणम्।

प्रशस्तरत्नपाणिस्तु भुञ्जीत प्रयतो गृही।

कृतजापो हुते चाग्नौ शुद्धवस्त्रधरो नृपः।

प्रशस्तरत्नानि गारुडादीनि कृतजापो देवताद्यर्थं कृतनिर्व्वापः।

मनुः,—

सायम्प्रातर्मनुष्याणामशनन्देवनिर्म्मितम्।

नान्तरा भोजनं कार्य्यमग्निहोत्रसमो विधिः॥

सायम्प्रातःशब्दावत्र रात्रि-दिनपरौ।

तथा छन्दोगपरिशिष्टे कात्यायनः,—

मुनिभिर्द्दिरशनं प्रोक्तं विप्राणां मर्त्त्यवासिनाम् (नित्यम्)।

अहनि तथा तमस्विन्यां सार्द्धप्रहरयामान्तः।

नान्तरा भोजनं कार्य्यमग्निहोत्रसमो विधिः॥

अहःशब्दोऽत्र दृष्टानुसारात् पञ्चमार्द्धभागपरः। तमस्विनी रात्रिः, सार्द्धप्रहरयामान्तः सार्द्धप्रहरमध्ये।

मनुः,—

पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ।

दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्व्वशः ॥

पूजितं ह्यशनं नित्यं बलमूर्जञ्च यच्छति ।

अपूजितन्तु तद्भुक्तमुभयं नाशयेदिति ॥

ब्रह्मपुराणे,—

अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः ।

अस्माकं नित्यमेतदस्त्विति भक्त्या प्रवन्देत ।

अन्नं विष्णुं स्वयं प्राह नित्यमेव जनार्द्दनः ॥

यो मान्ददाति प्राणाय भुञ्जानः शास्त्रविद्द्विजः ।

प्राणान्नं मां सदा ध्यायेत् स मां संपूजयेत् सदा ॥

वामेन पाणिना पात्रं गृहीत्वा भुवि संस्थितम् ।

तेजोऽसीति जपंस्तच्च प्रणमेदमृतञ्च तत् ॥

मार्कण्डेयपुराणे,—

उपघातादृते दोषं नान्नस्योदीरयेद्बुधः ॥

उपघातोऽत्र श्वपाकादिस्पर्शः ।

लघुशातातपः,—

परिधानमापोऽशानं पूर्व्वमाच्छादनं परम् ।

भवत्यनग्नमन्नं[1] हि सोत्तरीयं तथाऽमृतम् ॥

पूर्व्वं यदापोऽशानं तत् परिधानं तेन तदन्नमनग्नं भवत्यमृतञ्च ।

---

१ (ग) अनग्नं ।

याज्ञवल्क्यः,—

आपोऽशानेनोपरिष्टा[1]दधस्तादश्नता तथा।

अनग्नममृतञ्चैव कार्य्यमन्नं द्विजन्मना॥

ब्रह्मपुराणे,—

आपोऽशानञ्च गृह्णीयात् सर्व्वतीर्थमयञ्च यत्।

अमृतोपस्तरणमसीति विष्णोरन्नमयस्य च॥

हस्तेन लङ्घयेत्पात्रं सोदकेन कदाचन।

दम्भाद्यो लङ्घयेद्भुञ्जन् तेनान्नं निहतं भवेत्॥

हतस्यान्नमभक्ष्यत्वं तस्य याति दुरात्मनः।

पञ्चग्रासञ्च भुक्त्वादौ कश्चिद्वेश्मनि सङ्कटे॥

पात्रमुद्धृत्य शेषन्तु भक्षयेत् साङ्कराद्भयात्।

पित्र्ये कर्म्मणि भुञ्जानो भूमौ पात्रं न चालयेत्॥

तथा,—

प्राणेभ्यस्त्वथ पञ्चभ्यः स्वाहाप्रणव-संयुताः।

पञ्चाहुतीस्तु जुहुयात् प्रलयाग्निनिभेषु च॥

प्राणेभ्यः प्राणादिभ्यः—ब्रह्मपुराणे वक्ष्यमाणेभ्यः। स्वाहा-प्रणव-संयुताः प्रणवाद्याः स्वाहान्ताः॥

विष्णुपुराणे,—

प्राणे तृप्ते तु तृप्यन्ते नित्यं भुक्त्वार्कचक्षुषः।

व्याने तृप्ते तु तृप्यन्ते श्रोत्रे द्वे ककुभस्तथा॥

---

१ मूले आपोऽशानेनोपरिष्टात्। अधस्तादश्नता तथा।

अपाने तृप्ते तृप्यन्ते बुद्धिर्वाग्विभव[1]स्तथा ।
समाने तृप्ते तृप्यन्ते मनः पर्ज्जन्यविद्युतः ॥
उदाने तृप्ते तृप्यन्ते वाय्वाकाशौ च सर्व्वदा ।
तृप्तेषु तेषु तृप्तं स्यात् जगत् सदसदात्मकम् ॥
प्रजावान् ब्रह्मचारी स्यात् पञ्चभिर्वर्द्धते च सः ।
प्राणाग्निहोत्रविद्विप्रो दाता च स्यात् समृद्धिमान् ॥
भुक्त्वाऽमृताऽपिधानार्थं पिबेत्तोयं सकृत् सकृत् ।
येनान्नं न भवेन्नग्नं जीवद्भूतं जगत्त्रये ॥
एवं भुञ्जन् सदा विप्रो ज्ञातिप्राधान्यमाप्नुयात् ॥

हारीतः,—

अथ ब्राह्मणानां भोजनविधिं वक्ष्याम्यहं — स्नातोऽहतवासा शुक्लवासाः शुचिः पवित्रात्मा प्राङ्मुख-आसीनः पाणी प्रक्षाल्य दशहोतारं निगद्य इन्द्रं गच्छ स्वाहा इति, ध्यायेदव्यक्तं पुरुषम् । ततोऽसौ त्वमाह्रियमाणमभिमन्त्रयेत् । द्यौस्त्वा ददात्विति नीयमानं । भूस्त्वा प्रतिगृह्णात्विति प्रतिगृह्याग्निरस्मिजन्मना जातवेदो घृतं चक्षुरमृतं मत्वासन् ॥

अर्क्कः त्रिधाभूजसो विमानोऽजस्रो घर्म्मो
हविरस्मिनाहरस्मि प्रथमजो ऋतस्य पूर्व्वं देवेभ्यो
ऽमृतस्य नाम यो मां ददाति इत् देवमावदिदमन्नं
मदर्थमसौत्वमभिमन्त्रयेत् ।

---

१ (ग) पुस्तके वाग्भूमयस्तथा ।

अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः।
त्वं यज्ञस्त्वं वषट्कारः त्वं विष्णोः परमं पदम्॥

आपो ज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम्।

अमृतोपस्तरणमसीत्यपः प्राश्य प्राणाय स्वाहेत्येकैकया चाहुत्या सर्व्वान् प्राणान् प्रीणाति। समस्तानपि पिबेदथ।

अथ मैत्रायणेर्मतम्—

आयुषे स्वाहेति दर्शिताः प्राणाहुतीरायुष्कामं भुञ्जीतेत्येवं ह्याह। यथाकाममश्नुते अन्तश्चरसीत्यभिधाय इदममृतयोनौ सत्ये ज्योतिश्चति परमात्मनि स्वाहेति प्राणाद्यात्मानम्।

तेन प्राणाय स्वाहेति हृदयदेशमालभ्य जपति प्राणानां ग्रन्थिरसि इति प्राणदेशं विष्णोर्जठरमसीति नाभिदेशम्।

देवानामसि श्रेष्ठ उग्रस्त्वं पितरो हृयामृतत्वमसभ्यं रुद्रे तदस्तु हुतं तव स्वाहेति।

पुनरपि हृदयदेशमालभ्य साविचीखानुभाव्य सिरापो रसानां बहूनां रसभुक् समस्तान्नपाककर्म्मभिः प्रीयतां विश्वभुगिति ध्यायेद्-व्यक्तं पुरुषम्। मूत्रपुरीषे रथ्यामाक्रम्य स्वग्रामस्थान्तः पुनराचामेत्।

एवञ्च यो ब्राह्मणो भुङ्क्ते स पुण्यतमो भवति पङ्क्तिपावनो भवत्युभयतः पञ्चाग्निं तर्पयति देवांश्च तर्पयति पितॄंश्च तर्पयति मनुष्यांश्च तर्पयति भोज्यस्यान्नं पुनाति ब्रह्मणः सायुज्यं गच्छत्येवं ह्याहेति। दशहोता चित्तस्रुक् चित्तमाज्यमित्यादिको मन्त्रः।

इन्द्र गच्छ स्वाहेति मन्त्रान्तेन चित्तस्रुगित्यादि दश-होतृमन्त्रा दर्शिताः।

एवमन्नमनुस्मार्य्य अव्यक्तं पुरुषं जगत्कारिणं प्राणानित्यनेन प्राणादि-वायुपञ्चकग्रहणमाहुतिपदमनामिकाङ्गुष्ठमात्रग्राह्यान्न-परिग्रहार्थ ।

तथा छन्दोगोपनिषदि वाक्यकारः,—

समं प्रथमाहुतिमित्याहुति धर्म्मप्राप्ति लोकगृहीतैरिति एतच्च वृद्धद्रविड़विवरणकारेण विवृतम् ।

लोकता निर्द्दिश्यतेऽनामिकाङ्गुष्ठेन यावद्गृह्यते तावत्कृतस्तद्-गृहीतैस्तथा ह्याहुतिर्ग्रह्यमाणा दृश्यते इति जयस्वामी ।

चिप्रामाहुतिं निगिरेत् । न दन्तभिन्नां कुर्य्यात् । अपरदेश आहुतयः आयुषे स्वाहेत्यादयः । काम्या यथाकाममित्यादेरय-मर्थः । शेषाहुतिषु निगिरणनियमो नास्ति अन्तश्चरसीत्यभि-धार्य्य अन्तश्चरसीत्यादिनामृताभिस्तरणमसीत्युदिताम्तेनाभिघार्य्य जुहोति अप इति शेषः ।

सावित्रीं चिरस्मार्य्य आपोरमनामित्यादिमन्त्रेण अव्यक्तं पुरुषं ध्यायेत् । एवम्भूतेतिकर्त्तव्यताके भोजने वैश्वानरविद्याविदो ब्रह्म-विदोऽधिकारः । इत्युपनिषद्देदिनः ।

अयमर्थः प्राणा ह्यात्माते अन्नमित्यनुवादेन द्योत्यते ।

बौधायनः,—

अथ शालीनयायावराणामात्मयाजिनां प्राणाहुतीर्व्याख्या-स्यामः । सर्व्वावश्यकावसाने संमृष्टोपलिप्ते देशे प्राङ्मुख उपविश्य तद्भूतमाह्रियमाणं भूर्भुवःस्वरोमित्युपस्थाय वाचं यच्छेत् । न्यस्तमन्नं महाव्याहृतिभिः प्रदक्षिणमुदकञ्च परिषिच्य सव्येन पाणिना

विमुञ्चन्नमृतोपस्तरणमसीति पुरस्तादपः पीत्वा पञ्चान्नेन प्राणाहुतीर्जुहोति।

प्राणे निविष्टोऽमृतं जुहोमि, शिवो माविशा प्रदाहाय प्राणाय स्वाहा।

अपाने निविष्टोऽमृतं जुहोमि शिवो माविशा प्रदाहाय अपानाय स्वाहा।

व्याने निविष्टोऽमृतं जुहोमि शिवो माविशा प्रदाहाय व्यानाय स्वाहा।

उदाने निविष्टोऽमृतं जुहोमि शिवो माविशा प्रदाहाय उदानाय स्वाहा।

समाने निविष्टोऽमृतं जुहोमि शिवो माविशा प्रदाहाय समानाय स्वाहा।

इति पञ्चान्नेन प्राणाहुतीर्हुत्वा—तूष्णीम्भूय प्रतयेत् प्रजापतिं मनसा ध्यायेत्।

अथाप्युदाहरन्ति।

आसीनः प्राङ्मुखोऽश्नीयात् वाग्यतोऽन्नमकुत्सयन्।
अस्कन्दयंस्तन्मनाश्च भुक्त्वा चाग्निमुपस्पृशेत्॥

सर्व्वभक्ष्यापूप-फल-कन्द-मूल-मांसानां दन्तैर्नावद्येत्। नातिसुहितोऽमृतापिधानमसीत्यपः पीत्वाऽऽचान्तो हृदयदेशमभिमृशति। प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनान्नेनाप्यायस्वेति। पुनराचम्य दक्षिणे पादाङ्गुष्ठे पाणिं निस्रावयति।

अङ्गुष्ठमात्रः पुरुषः स्वाङ्गुष्ठञ्च समाश्रितः।
ईशः सर्व्वस्य जगतः प्रभुः प्रीणातु विश्वभुक्॥ इति।

इति कृतानुमन्त्रणग्रहणमूर्द्धहस्तः समाचरेत्।

अ्रद्धायां प्राणे निविश्यामृतं हुतं शिवो माविश प्राणमन्नेनाप्यायस्व।

अ्रद्धायां अपाने निविश्यामृतं हुतं शिवो माविश अपानमन्नेनाप्यायस्व।

अ्रद्धायां व्याने निविश्यामृतं हुतं शिवो माविश व्यानमन्नेनाप्यायस्व।

अ्रद्धायामुदाने निविश्यामृतं हुतं शिवो माविश उदानमन्नेनाप्यायस्व।

अ्रद्धायां समाने निविश्यामृतं हुतं शिवो माविश समानमन्नेनाप्यायस्व।

इति पञ्चभिर्ब्रह्मणि स आत्मा अमृतत्वायेत्युत्तरेणात्मनि योजयेत्। सर्व्वंच क्रतुयाजिनामात्मयाजी विशिष्यत इति।

अथाप्युदाहरन्ति।

यथा तुलमैषीकमग्नौ प्रोतन्तुयते। (एवं सर्व्वाणि पापानि दह्यन्ते ह्यात्मयाजिनः।)

केवलाघो भवति केवलादी मोघमन्नं विन्दत इति। स एवमेव अहरहः सायं प्रातर्जुहुयादद्भिर्वा सायमिति। मूलं।

शालिनो गृहवासशीलाः गृहस्थाः। यायावरा नित्यमटनस्वभावाः साग्निगृहस्थभेदाः। आत्मयाजिनो अग्निमेव परमात्मबुद्ध्या य उपासते। आवश्यकं स्नानादि-पञ्चयज्ञान्तं। संमृष्टं मार्ज्ज्यादिसंशोधितं। उपलिप्तं गोमयापाभ्यां ?। उद्धृतमन्नमिति शेषः।

उपस्थाय तत्सम्मुखतया नम्रीभूय वाचं यच्छेत्। न्यस्तं पात्रकृतं प्रदक्षिणमन्नमुदकमित्युदकेन प्रदक्षिणमन्नं सर्व्वतः परिषिच्येत्यर्थः। पञ्च प्राणाहुतीः प्रथमं वाचं यच्छेत्युक्तेः पुनस्तूष्णींग्रहणं पञ्चाहुत्यनन्तरमपि वाङ्नियमलाभाय। स्कन्दयन् अन्नमविकिरन्।

अग्निमुपस्पृशेदित्यनेन शालीनादीनां त्रयाणां तिलादि-संसृष्टाभक्षणीयान्नभक्षणेऽपि कृतेऽग्नेरुपस्पर्शनं नित्यवदङ्गमित्युक्तम्।

कन्दानि शूरणादीनि। मूलानि मूलकादीनि। भक्ष्य-पदादेवापूपादिलाभे तेषां पुनर्ग्रहणं दोषाधिक्याय। दन्तैर्नावद्येत् दन्तैः खण्डयित्वा न भक्षयेत्।

सर्व्वभक्ष्येत्यादिषु कर्म्मण्येवार्षत्वात् षष्ठी। पञ्चभिरिति प्रकृतत्वादनन्तरोक्तमन्त्रैः, ब्रह्मणि म आत्मा अमृतत्वायेति, अनेन मन्त्रेणाक्षरेण परब्रह्मणा आत्मानं जीवं योजयेत्। एकत्वेन ध्यायेदित्यर्थः। अद्भिर्वा सायमिति सायं भोजनासम्भवेऽद्भिरेव प्राणाहुत्यादि सर्व्वं कुर्य्यादित्यर्थः।

तथा,—

गृहस्थो ब्रह्मचारी वा योऽनश्नंस्तु तपश्चरेत्।
प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः॥

अन्यत्र प्रायश्चित्तात् प्रायश्चित्ते तदेव विधानम्।

अथाप्युदाहरन्ति।

अन्तरा प्रातराशञ्च सायमाशन्तथैव च।
सदोपवासी भवति यो न भुंक्ते कदाचन॥

प्राणाग्निहोत्रमन्त्रांश्च निरुद्धे भोजने जपेत् ।
त्रेताग्निहोत्रमन्त्रांस्तु[1] द्रव्यालाभे तथा जपेत् ॥
स एवमेवाचरंस्तु ब्रह्मभूयाय कल्पते ।

गृहस्थोऽनाहिताग्निरनश्नन्नुपवासं कुर्व्वन्नवकीर्णी प्रायश्चित्तार्हः। अन्यत्र प्रायश्चित्तात् उपवासात्मकादुपवासयुक्तप्रायश्चित्तादन्यत्र अत्रैव हेतुः। प्रायश्चित्ते तु तदेव विधानमनशनमेव विशेषविहितमिति तेन यत्राहिताग्न्युद्देशेनोपवासविधिः तत्रैव तेन उपवासः कार्य्य इति ।

एवं ब्रह्मचारिणोऽपि अन्तरा प्रातराशमित्यादि-अन्तरा मध्ये प्रातराशो भोजनम्। उपवासी उपवासफलभाक्। निरुद्धे भोजने इच्छायां सत्यामसाध्यसम्भवाद्भोजननिवृत्तौ, द्रव्यालाभेऽग्निहोत्रहवनीयद्रव्यालाभे। त्रयोऽग्नयः त्रेता गार्हपत्याहवनीयदक्षिणाग्नयः।

पुष्टिकामाधिकारे आपस्तम्बः,—

औदुम्बरश्चमसः सुवर्णनाभः प्रशस्तः। न चान्येनापि भोक्तव्यम्। यावद्ग्रासं सन्नयन्नवस्कन्दयन्नापजहीत। अथवा अपजहीत। कृत्स्नं ग्रासं ग्रसीत[2] सहाङ्गुष्ठम्। न च मुखशब्दं कुर्य्यात्। पाणिञ्च[3] नावधूनुयात्। आचम्य चोर्द्ध्वौ पाणी धारयेदाप्रोदकीभावात्। [4]अतोऽग्निमुपस्पृशेत्। दिवा च न भुञ्जीतान्यत्र फलमूलेभ्यः। स्थालीपाकानुदेश्यानि च वर्ज्जयेत्। सोत्तराच्छादनश्चैव यज्ञोपवीती भुञ्जीत। इति।

---

१ (ग) मन्त्रार्थान्। २ (क) (ख) ग्रसेत्। ३ (ख) (ग) पाणिना। ४ मूले ततः।

औदुम्बरमश्वत्थमयं पात्रं, सुवर्णनाभत्वञ्चास्य मध्यनिहित सुवर्णत्वं, न चान्येनापीत्यनेनात्यन्तनिकटैः पुत्रादिभिरपि न तत्र भोक्तव्यमित्युक्तम्। यावद्ग्रासं यावद्ग्रासयितुं शक्यते नापजहीत सव्येन पाणिना पात्रं न त्यजेत्। अथवाऽपजहीतेत्यत्रञ्च पात्र-ग्रहणाऽग्रहणे विकल्पः षोड़शिग्रहणाऽग्रहणवद्व्यवस्थितः।

अत्र कपर्द्दिना-यदि प्रथमं पात्रस्य धारणमुपक्रान्तं तदा धारणमेव। अथाधारणमुपक्रान्तं अधारणमेव कार्य्यमित्युक्तम्।

आप्रोदकीभावात् यावत्प्रचुरजलमग्नत्वम्। एतच्चाग्न्युपस्पर्शनं तिलमांसादि-संसृष्टान्नभोजनविषयम्। दिवा न भुञ्जीत पुनरिति शेषः। स्थालीपाकोऽत्र पश्वादिचरुः। उद्देश्यानि दैवपित्र्यर्थं स्वयमुद्देश्यविषयीकृतानि।

यज्ञोपवीतीत्यपि सोत्तरवस्त्राच्छादनः। सोपरिवस्त्र एव भुञ्जीत नोत्तरीयवासोव्यतिरेकेण भोजनकाले सूत्रादिना कार्य्यमिति कपर्द्दिभाष्यम्।

वशिष्ठः,—

प्राङ्मुखोऽन्नानि भुञ्जीत। तूष्णीं साङ्गुष्ठं कृत्स्नं ग्रासं ग्रसेत च मुखशब्दं कुर्य्यात्।

अन्नमिति सिद्धान्नं तेन ताम्बूलादिभक्षणे प्राङ्मुखादिनियमो नास्तीति लभ्यते। तूष्णींग्रहणादवभाषणविरहे सिद्धे पुनर्मुख-शब्दनिषेधः फुत्कारादिध्वनिनिवृत्तये।

मनुः,— न भुञ्जीतोद्धृतस्नेहं नातिसौहित्यमाचरेत्।
नातिप्रगे नातिसायं न सायं प्रातराशितः॥

उद्धृतस्नेहं सक्थ्वादि, अतिप्रगे अतिनवोदितसूर्य्ये अतिसायं सूर्य्यास्तमनकाले । प्रातराश्चितः प्रातराहारहृप्तः ।

न तृतीयमथाश्नीयान्न चापथ्यं कदाचन ।

विष्णुपुराणे,—

अश्नीयात्तन्मना भूत्वा पूर्व्वन्तं मधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्ततः ॥
प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये तु कठिनाशनः ।
अन्ते पुनर्द्रवाशी च बलारोग्यन्न मुञ्चति ॥

ब्रह्मपुराणे,—

कुर्य्यात् क्षीरान्तमाहारं न च पश्चात् पिवेद्दधि[१] ।
जठरं पूरयेदर्द्धं अन्नैर्भागं जलेन च ॥
वायोः सञ्चरणार्थञ्च चतुर्थमवशेषयेत् ।

देवलः,—न भुञ्जीताहृतं नित्यं गृहस्थो भोजनं स्वयम् ।
पवित्रमथ हृद्यञ्च सर्पिराङ्करघापहम् ॥

आपस्तम्बः,—

न नावि भुञ्जीत तथा प्रासादे कृतभूमौ भुञ्जीत ।

नावि आसीन इति शेषः । प्रासादे प्रासादस्योपरीत्यर्थः । कृतभूमौ मृत्तिकाप्रक्षेपसम्पादितायां भूमौ ।

ब्रह्मपुराणे,—

यस्तु पाणितले भुङ्क्ते यस्तु फूत्कारसंयुतम् ।
प्रसृताङ्गुलिभिर्यस्तु तस्य गोमांसवच्च तत् ॥

---

१ मूल पुराणे—अज्ञान्तं वा सुचिसिते ।

नाजीर्णे भोजनं कुर्य्यात् स्याच्च नातिबुभुक्षितः ।
हस्त्यश्वरथयानोष्ट्र-प्रासादस्थो न भक्षयेत् ॥
श्मशानान्तर्गतो नैव देवालयगतोऽपि वा ।
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने ॥
न सन्ध्ययोश्च न मध्याह्ने नार्द्धरात्रे कदाचन ।
नार्द्रवासा नार्द्रशिरा न चायज्ञोपवीतवान् ॥
न प्रसारितपादस्तु पादारोपितपाणिमान् ।
नावसक्थिकसंस्थश्च न च पर्य्यङ्किकास्थितः ॥
न वेष्टितशिराश्चापि नोत्सङ्गकृतभाजनः ।
नैकवस्त्रो दुष्टमध्ये सोपानत्कः सपादुकः ॥
न चर्म्मोपरिसंस्थश्च चर्म्मवेष्टितपार्श्ववान् ।
अन्नस्य जन्मकालुष्यं दुष्यक्तिश्च न कुत्सयेत् ॥
ग्रासशेषन्तु नाश्नीयात् पीतशेषं पिबेन्न तु ।
शाकमूलफलेक्ष्वादि दन्तच्छेदैर्न भक्षयेत् ॥
सर्व्वशेषाशमन्नेन विक्षिप्तं पात्रसंस्थितम् ।
बहूनां भुञ्जतां मध्ये न चाश्नीयात्त्वरान्वितः ॥
वृथा न विकिरेदन्नं नोच्छिष्टः कुत्रचित् व्रजेत् ।
न स्पृशेच्च शिरो विप्रः सोच्छिष्टेनैव पाणिना ॥
तिलकल्कं जलं क्षीरं दधि क्षौद्रं घृतानि च ।
न त्यजेदर्द्धजग्धानि शक्तूंश्चाथ कदाचन ॥

प्रसृताङ्गुलिभिः परस्परासंलग्नाङ्गुलिभिः । स्याच्च नाति-
बुभुक्षितः अतिशयितबुभुक्षया चिरमात्मानं न पीडयेदित्यर्थः ।

यानमपोह्यातिरिक्तं दोलादि। पर्य्यङ्किका मक्षिका। दुष्टाः पतितादयः। चर्म्मवेष्टितपार्श्ववान् कृतचर्माद्यादिः।

अन्नस्य जन्मकालुष्यं दुष्पक्तिञ्च न कुत्सयेत्। जन्म निन्दितदेशोत्पत्तिं कालुष्यं मालिन्यं दुष्पक्तिर्मन्दपाकः। पीतशेषं जलपात्र एवावशिष्टम्। दन्तच्छेदैर्दन्तैश्छित्वा छित्वा। अन्येनापूपादिना तेन पात्रविकीर्णमन्नमपूपादिना न वर्त्तुलीकुर्य्यादित्यर्थः। अर्द्ध-जग्धानि किञ्चिद्भुक्तानि।

महाभारते,—

पानीयं पायसं सर्पिर्मधुशेषं दधीत्यपि।
निरस्यं शेषमेतेषां न प्रदेयन्तु कस्यचित्॥

निरस्यमत्याज्यं शेषशब्दः सर्व्वत्र सम्बध्यते।

ब्रह्मपुराणे,—

अप्येकपङ्क्त्या नाश्नीयात् संवृतः स्वजनैरपि।
को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत्॥
भस्मस्तम्भ जलद्वारमार्गैः पङ्क्तिञ्च भेदयेत्।

विष्णुपुराणे,—

नासन्दीसंस्थिते पात्रे नादेशे च नरेश्वरः।
नाकाले नातिसङ्कीर्णे दत्त्वाऽग्नञ्च नरो ग्रसेत्॥
नाशेषं पुरुषोऽश्नीयात् अन्यत्र जगतीपते।
मध्वम्बु-दधि-सर्पिभ्यः सक्तुभ्यश्च विवेकवान्॥

आसन्दी वेत्रादिघटितासनविशेषः। अदेशे रथ्यादौ। अकाले सन्ध्यादौ।

मण्डः,—

सक्तवः सर्पिषाऽभ्यक्ताः शीतवारिपरिप्लुताः।

नातिसान्द्रा नचात्यच्छा मण्ड इत्यभिधीयते॥

इति चरकोक्तः।

शङ्खलिखितौ,—

न भोजनार्थी पाकशालां प्रविशेत्। न वृथापाकं पाचयेत्। न वृथापाकमश्नीयात्।

हारीतः,—

न क्रुद्धो नान्यमना नाभिभाषमाणोऽश्नीयात्। न शिशून् भर्त्सयन्। नाप्रदाय प्रेक्षमाणेभ्यो न च तदश्नीयाद्येन देवपितृमनुष्यार्थं न कुर्य्यात्। एवं ह्याह—

आत्मार्थं भोजनं यस्य रत्यर्थं यस्य मैथुनम्।

वृत्यर्थं यस्य चाधीतिर्निष्फलं तस्य जीवितम्॥

यो भुङ्क्ते वेष्टितशिरा यश्च भुङ्क्ते उदङ्मुखः।

सोपानत्कश्च यो भुङ्क्ते सर्व्वं विद्यात्तदासुरम्॥

प्रेक्षमाणेभ्यः प्रकर्षेण साकाङ्क्षमीक्षमाणेभ्यो बालादन्येभ्यः। देवपितृमनुष्यार्थमिति पञ्चयज्ञोपलक्षणम्। भुज्यत इति भोजनं भोज्यमन्नमिति यावत्।

यमः,— अश्नाति यो भृत्यगणस्य मध्ये

मिष्टान्नमेको रसगृध्नुबुद्धिः।

दीनैः कटाक्षैरभिवीक्ष्यमाणो

व्यक्तं विषं हालहलं स भुंक्ते॥

विष्णुः,—

नगो-ब्राह्मणोपरागे वाश्नीयात् । चन्द्रार्कोपरागे नाश्नीयात् । न च राजव्यसने । प्रवसितश्चाग्निहोत्री यदाग्निहोत्रं हुतं मन्येत तदाश्नीयात् । यदाहुतं मन्येत वैश्वदेवमपि । पर्व्वणि च यदा हुत मन्येत । पर्व्वणि नाश्नीयाच्चार्द्धरात्रे । न मध्याह्ने । न सन्ध्ययो-र्नार्द्रवासा नैकवासा । न नग्नः । न जलस्थः ।

नोत्कूटकः । न भिन्नासनगतः । न च शयनगतः, न च भिन्नभाजने नोत्सङ्गे न भुवि न पाणौ । लवणं यत्र दद्यात् न तदश्नीयात् ।

न बालकं निर्भर्त्सयन्, नैकान्तोष्णम् । नोद्धृतस्नेहम् । न दिवा धानाः । न रात्रौ तिलसम्बद्धं न दधिसक्तून् । न कोविदार वट पिप्पल शणशाकम् । नादत्त्वा नाहुत्वा । नानार्द्रपादः । नानार्द्रकर-मुखश्च नोच्छिष्टे घृतमादद्यात् । न चार्कतारकं वीक्षेत । न मूर्द्धानं स्पृशेत् । न ब्रह्म कीर्त्तयेत् । प्राङ्मुखोऽश्नीयात् । दक्षिणा-भिमुखो वा । अभिनन्द्यान्नं । सुमनाः स्रग्गन्धलिप्तश्च । न निःशेष-कृत् स्यात् । अन्यत्र दधि मधु सर्पिः सक्तूपलमोदकेभ्यः[1] ।

नाश्नीयाद्भार्य्यया सार्द्धं नाकाशे च तथोत्थितः ।
बहूनां प्रेक्षमाणानां नैकस्मिन् बहवस्तथा ॥
शून्यालये वह्निगृहे देवागारे तथैव च ।
पिबेन्नाञ्जलिना तोयं नाति सौहित्यमाचरेत् ॥

---

१ (क) (ख) सक्तुपलमोदकेभ्यः ।

गोब्राह्मणोपरागे गोब्राह्मणव्यसने। पारिजातेन तु उपरोधे इति पठित्वा निरोध इति विवृतम्। प्रवसितोपरागोऽत्राग्निशौचदेशं त्यक्त्वा दूरं गतः। नोत्कटो नोत्कटासनः। भिन्नं स्फुटितं न भुञ्जीति कृत्वेति शेषः। यन्न दद्यादिति देवादिभ्य इति शेषः। यन्न दद्यान्न तदश्नीयात्। यज्जातीयं न दद्यात्तज्जातीयन्नाश्नीयादित्यर्थः। अग्रदानपूर्व्वकत्वाद्भोजनस्य नादत्त्वाग्रमिति, ब्राह्मणादिभ्य इत्यर्थः। नादत्त्वा देवेष्वित्यर्थः। निःशेषकृत् अशेषभोजी। आकाशे निराधारे भोजनासम्भवादासन्दीकादावित्यर्थः। एकस्मिन् प्रेक्षमाण इति विभक्तिव्यत्ययेनान्वयः।—(बहूनां प्रेक्षमाणानामित्यनादरे षष्ठी।) बहून् साभिलाषाननादृत्य तेन तेषां प्रेक्षणं वारयित्वेत्यर्थः।

तथा,—

न भावदुष्टमश्नीयान्न भाण्डे भावदूषिते।
शयानः प्रौढ़पादश्च कृत्वा चैवावसक्थिकाम्॥

भावदुष्टमशुचित्वेन तर्क्कितम्। प्रौढ़पादोऽत्रासनशय्याद्यारोपितपादः।

मनुः,—

एकवस्त्रो न भुञ्जीत कपाटमपिधाय वा।
भूमौ देवान्तरीकृत्य भिन्नपात्रेण चाशनम्॥
नाहारमुपभुञ्जीत तिष्ठन् गच्छन् हसन्नपि।
अग्रामे ग्रामतो वापि मञ्चिकष्टे मृते सति॥
न भुञ्जीतान्नं धीमानधर्म्म्यं शोकस्य कारणात्।

भिन्नपाके गत्वाशनं कार्य्यमिति शेषः । स्वग्रामे मृते सति । ग्रामतो ग्रामे सन्निकृष्टे सति मृते सति समानाम्नात्तस्थिः । अधर्म्यमधर्म्मसाधनम् ।

बृहस्पतिः,—

न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।

न पादौ न शिरो वस्तिं न पदा भाजनं स्पृशेत् ॥

वस्तिर्नाभ्यधोदेशः । न शिरो न वस्तीत्युभयत्रापि नञो-ऽन्वयः । समाहारे वा द्वन्द्वः ।

न भुञ्जितेत्यनुवृत्तावुशनाः,—

नानासनान्तः खट्वारूढो न चोत्तानः कदाचन ।

गोतमः,—

न रात्रौ प्रेष्याहृतम् ।

रात्रौ प्रेष्येण दासादिना आनीतं न किमपि भक्षणीयमित्या-चार्य्यमस्करी ।

मनुः,— नाश्नीयाद्भार्य्यया सार्द्धं नैनामीक्षेत चाश्नतीम् ।

वशिष्ठः,—

भार्य्यया सह नाश्नीयादवीर्य्यमपत्यं भवति ।

वाजसनेयके विज्ञायते ।

अङ्गिराः,—

ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन ।

[1]न तस्य दोषं मन्यन्ते नित्यमेव मनीषिणः ॥

---

१ (क) (ख) पुस्तकद्वये पङ्क्तिद्वयं पतितम् ।

उच्छिष्टमितरस्त्रीणां योऽश्नीयाद्ब्राह्मणः क्वचित्।
प्रायश्चित्ती स विज्ञेयः सङ्कीर्णो मूढचेतनः॥

ब्राह्मणीपदमिह पतिसमानवर्णोपलक्षणम्। तेन पतिसवर्णया पत्न्या ब्राह्मणस्य सहभोजनं कार्य्यमन्यया न कार्य्यं तदपि चाध्वन्येव।

ब्राह्मण्या भार्य्यया सार्द्धं क्वचिद्भुञ्जीत वाध्वनि।
असवर्णस्त्रिया सार्द्धं भुक्त्वा पतति तत्क्षणात्॥ इति।

ब्रह्मपुराणे,—

विप्रस्त्वेवमुपस्पृश्य पादाङ्गुष्ठे च दक्षिणे।
हस्ताभ्यां मन्त्रवद्दद्यात् विधिवच्चावनेजनम्॥
सम्मार्ज्य बाहू जानू च गोप्रदानफलं लभेत्।
भुक्त्वा चैव प्रतिष्ठेत न चाप्यार्द्रेण पाणिना॥
आचान्तोऽप्यशुचिस्तावद्यावत्पात्रमनुद्धृतम्।
उद्धृतेऽप्यशुचिस्तावद्यावन्नोन्मृज्यते मही॥

शातातपः,—

विद्यमानेन हस्तेन ब्राह्मणोऽज्ञानदुर्ब्बलः।
तोयं पिबति वक्त्रेण श्वाऽसौ जायेत नान्यथा॥
उद्धृत्य वामहस्तेन यस्तोयं पिबति द्विजः।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः॥
हस्तं प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः।
स देवांश्च पितॄंश्चैव आत्मानं चापि घातयेत्॥

बौधायनः,—

भुञ्जानेषु च विप्रेषु यस्तु पात्रं परित्यजेत्।
भोजने विघ्नकर्त्ताऽसौ ब्रह्महत्या तथोच्यते॥

पाचत्यागोऽच देशान्तरगमनम् ।

विष्णुपुराणे,—

भुक्ता चैव तथा सम्यक् प्राङ्मुखोदङ्मुखोऽपि वा ।
आचान्तः पुनराचामेत् पाणी प्रक्षाल्य मूलतः ॥
स्वस्थः प्रशान्तचित्तस्तु कृतासनपरिग्रहः ।
अभीष्टदेवतानाञ्च कुर्व्वीत स्मरणं नरः ॥
अग्निराप्याययतां धातून् पार्थिवान् पवनेरितः ।
दत्तावकाशो नभसा जरयत्वस्तु मे सुखम् ॥
अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च ।
भवत्वेतत् परिणतं[1] ममास्त्वव्याहतं सुखम् ॥
प्राणापानसमानानामुदानव्यानयोस्तथा ।
अन्नं पुष्टिकरञ्चास्तु ममास्त्वव्याहतं सुखम् ॥
अगस्तिरग्निर्वड़वानलश्च
भुक्तं मयान्नं जरयत्वशेषम् ।
सुखं ममैतत् परिणामसम्भवं
यच्छत्वरोगो मम चास्तु देहे ॥
विष्णुः समस्तेन्द्रियदेहदेही
प्रधानभूतो भगवान् यथैकः ।
सत्येन तेनान्नमशेषमेत-
दारोग्यदं मे परिणाममेतु[2] ॥

---

१ (ग) परिणतौ ।
२ (ख) (ग) एतत् ।

विष्णुर्यथा तथैवान्नं परिणामस्य वै तथा।
सत्येन तेन मद्भुक्तं जीर्य्यत्वन्नमिदन्तथा॥
इत्युच्चार्य्य स्वहस्तेन परिमार्ज्जेदथोदरम्।
अनायासप्रदायीनि कुर्य्यात् कर्म्माण्यतन्द्रितः॥

आपस्तम्बः,—

यत्र भुज्यते तत् समूह्य निर्हृत्यावोक्ष्यतं देशममत्रेभ्यो लेपान् संहृत्याद्भिः संसिच्योत्तरतः शुचौ देशे रुद्राय निनयेदेवं वास्तु शिवं भवतु।

समूह्य वर्द्धन्यादिना संशोध्य निर्हृत्योच्छिष्टमपनीयावोक्ष्याद्भिः प्रसिच्याचाराद्गोमयाम्भसेति लभ्यते। अमत्राणि स्थाल्यादि-पात्राणि उत्तरतो गृहात्। वास्तुगृहं शिवं भद्रम्।

हारीतः,—

पश्चात् पत्नी शेषं बलिं हरेत्।

एतच्च पाकभाण्डावशिष्टेनान्नेन बलिहरणं कर्त्तव्यं, इत्याचार्य्य-जयस्वामिमतम्।

॥ इति गृहस्थरत्नाकरे भोजनविधितरङ्गः॥

———

## अथ भोज्याभोज्यानि ।

तत्र गौतमः,—

प्रशस्तानां स्वकर्म्मसु द्विजातीनां ब्राह्मणो भुञ्जीत ।

प्रशस्तानां सम्यक् स्वकर्म्मपरत्वेन स्तुतानाम् ॥

यमः,—

ब्राह्मणस्य सदाऽश्नीयात् क्षत्रियस्य तु पर्व्वसु ।
प्रक्रतेषु च वैश्यस्य शूद्रस्य न कदाचन ॥
अमृतं ब्राह्मणस्यान्नं क्षत्रियस्य पयः स्मृतम् ।
वैश्यस्य त्वन्नमेवान्नं शूद्रस्य रुधिरं स्मृतम् ॥
ब्राह्मणान्नं क्षत्रियान्नं वैश्यान्नं शौद्रमेव च ।
तां तां योनिं व्रजेद्विप्रो भुक्तान्नं यस्य वै मृतः ॥

पर्व्वसु पौर्णमास्यादिषु प्रक्रान्तेषु गोमङ्गलादिषु । शूद्रान्ननिषेधोऽसच्छूद्रान्नविषयः, सच्छूद्रस्य त्वन्नं गोभूम्यादिलाभार्थं भोक्तव्यम् । तदलाभे तदपि न भोक्तव्यम् ।

तथाच ब्रह्मपुराणे,—

राज्ञां पर्व्वणि वैश्यानामश्नीयान्मङ्गले गवाम् ।
गोभूमिरत्नं होमार्थं सच्छूद्रस्य गृहे तथा ॥

आपस्तम्बः,—

सर्व्ववर्णानां स्वधर्म्मे वर्त्तमानानां भोक्तव्यं शूद्रवर्ज्जमित्येके ।

मनुः,—

नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः ।
आददीताममेवास्मादवृत्तावेकरात्रिकम् ॥

अश्राद्धिनो नित्यश्राद्धाकारिणः। अवृत्तौ आपदि। एक-रात्रिकं एकाहोरात्रनिर्व्वाहकमन्नम्।

हारीतः,—

शूद्रान्नेन तु भुक्तेन जठरस्थेन यो मृतः।
स वै खरत्वमुष्ट्रत्वं शूद्रत्वञ्चोपगच्छति॥

पैठीनसिः,—

गृहमेधी न शूद्रान्नमश्नीयादायुर्ब्बलन्तेज इति व्यपक्रामति॥

वशिष्ठः,—

शूद्रान्नेनोदरस्थेन यः कश्चिन्म्रियते द्विजः।
स भवेच्छूकरो ग्राम्यस्तस्य वै जायते कुले॥
शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः।
जुह्वन् वाथ जपन् वाऽपि गतिमिष्टां न विन्दति॥
शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति।
यस्यान्नं तस्य ते पुत्रा न च स्वर्गार्हको भवेत्॥

यमः,— शूद्रान्नेनोदरस्थेन ब्राह्मणो यस्तनुं त्यजेत्।
आहिताग्निस्तथा यज्वा स शूद्रगतिमाप्नुयात्॥
यस्त्वाहिताग्निर्व्विप्रस्तु शूद्रान्नेनाभिवर्त्तते।
पञ्च तस्य प्रणश्यन्ति आत्मा ब्रतं त्रयोऽग्नयः॥

द्रान्नेनाभिवर्त्तते शूद्रान्नेन भुक्तेनेत्यर्थः।

अङ्गिराः,—

षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम्।
स च जीवन् भवेच्छूद्रो मृतः श्वा चैव जायते॥

विष्णुपुराणे,—

सम्प्रोक्ष्यैव तु गृह्णीयात् शूद्रान्नं गृहमागतम् ।

भविष्यपुराणे,—

उपक्षेपेण धर्म्मेण शूद्रान्नं यः पचेद्द्विजः ।

अभोज्यं तद्भवेदन्नं स च विप्रः पुरोहितः ॥

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।

तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ॥

शूद्रान्नं शूद्रसम्पर्कं शूद्रेण च सहासनम् ।

शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत् ॥

उपक्षेपरूपोऽत्र धर्म्मः शूद्रेण ब्राह्मणाय पाकार्थमन्नसमर्पणम् ।

यत्तु— यथा यतस्ततोऽप्यापः शुद्धिं यान्ति नदीङ्गताः ।

शूद्राद्विप्रगृहेष्वन्नं प्रविष्टन्तु सदा शुचि ॥

इत्यङ्गिरोवाक्यं तत् सच्छूद्रान्नविषयम् । ब्राह्मणेन शूद्रात् प्रतिग्रहादिना यल्लब्धं तत्परमिति लक्ष्मीधरः ॥

याज्ञवल्क्यः,—

शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः ।

भोज्यान्ना नापितश्चापि यश्चात्मानं निवेदयेत् ॥

गोपालो यस्यैव गाः पालयति तस्यैव भोज्यान्न इति भर्तृयज्ञाचार्य्यः । कुलमित्रं कुलक्रमादागतमैत्रीशाली, अर्द्धसीरी मिलित्वा कर्षकः । नापितः क्षुरकर्म्मोपजीवी । सोऽपि स्वकीय एव विवक्षितः । आत्मनो निवेदनं कुलतः शीलतो वा दृष्टार्थितया उपचारविशेषेण च स्वाभिप्रायकथनपूर्व्वकं तदा ग्रहणम् ।

यादृशोऽस्य भवेदात्मा [1]यादृशश्च चिकीर्षितम् ।
यथा चोपचरेदेनं तथात्मानं निवेदयेत् ॥

इति मनुवचनात् ।

देवलः,—

सुदामो नापितो गोपः कुम्भकारः कृषीवलः ।
ब्राह्मणैरपि भोज्यान्नाः पञ्चैते शूद्रयोनयः ॥

कृषीवलोऽर्द्धशीरी, एषामन्नमनापद्यपि ग्राह्यम । आपदि तु पक्वान्नमपि ग्राह्यम् ।

शूद्राधिकारे गोतमः,—

पशुपाल क्षेत्रकर्षक कुलसङ्गत वणिक् कारयितृ प्रचारकाः भोज्यान्नाः ।

वणिक् च शिल्पी कारयिता नापित इति मस्करी । प्रचारकः पूर्व्वकः पूर्व्वरीत्याऽऽत्मनिवेदक एव यः शूद्रो वणिक् शिल्पी (तस्करादिको) न भवति तदाऽभोज्यान्न इत्यर्थः ।

अङ्गिराः,—

गोरसञ्चैव सक्तूंश्च तैलं पिण्याकमेव च ।
अपूपान् भक्षयेच्छूद्राद्यच्चान्यत् पयसा कृतम् ॥

पयसा दुग्धेन कृतं लड्डुकादि ।

हारीतः,—

कन्दुपक्वं पयःपक्वं पायसं दधि सक्तवः ।
एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत् ॥

१ (ग) भवेद्दासः ।

पराशरः,—

तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः ।
द्विजाग्रकरसंस्पृष्टं सर्व्वं तद्धविरुच्यते ॥

यमः,—

यथा जलं निर्गमनेष्वपेयं
नदीगतं तत् पुनरेव पेयम् ।
तथाऽन्नपानं विधिपूर्व्वमागतं
द्विजातिपाचान्तरितं न दुष्यति ॥

निर्गमनं वाप्यादिपतितवारिप्रवाहदेशः ।

मनुः,—

नाश्रोत्रियतते यज्ञे ग्रामयाजिकृते तथा ।
स्त्रिया क्लीवेन च कृते भुञ्जीत ब्राह्मणः क्वचित् ॥
अश्लीकमेतत् साधूनां यत्र जुह्वत्यमी हविः ।
प्रतीपमेतद्देवानां तस्मात्तत् परिवर्ज्जयेत् ॥
मत्तक्रुद्धातुराणान्तु न भुञ्जीत कदाचन ।
केशकीटावपन्नञ्च पदा स्पृष्टञ्च कामतः ॥

अश्रोत्रियोऽध्ययनशून्य ऋत्विक् यजमानो वा । तते वितते प्रारब्ध इति यावत् । ग्रामयाजी यावत्तावदनेकयाजकः । यश्चोपनयते बहूनिति पर्य्यालोचनया बहूनामुपनेतेति विश्वरूपाचार्य्यः । स यस्य होमकर्त्ता तस्यान्नं न भोज्यमिति । स्त्रिया कृते स्त्रिया होमे कृते स्त्रिया यत्र वैश्वदेवादिकं कृतम् । अश्लीकमश्रीकरं प्रतीपं प्रतिकूलम् ।

तथा तत्रैव,—

गवा चान्नमुपघ्रातं घुष्टान्नञ्च विशेषतः।
गणान्नं गणिकान्नञ्च विदुषा च जुगुप्सितम्॥
स्तेन-गायनयोश्चैव तक्ष्णो वार्द्धुषिकस्य च।
दीक्षितस्य कदर्य्यस्य बद्धस्य निगडस्य च॥
अभिशस्तस्य षण्डस्य पुंश्चल्या दाम्भिकस्य च।
शुक्तं पर्य्युषितञ्चैव शूद्रस्योच्छिष्टमेव च॥
चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः।
उग्रान्नं सूतिकान्नञ्च पर्य्याचान्तमनिर्द्दशम्॥
समासमाभ्यां विप्राभ्यां विषमं सममेव च।
पूतातो दीयमानञ्च ग्राह्यं वा देयमेव च॥
अनर्च्चितं वृथा मांसं अवीरा-नगरिणोस्तथा[1]।
पिशुनानृतिनोश्चैव क्रतुविक्रयिणस्तथा[2]॥
शैलूषस्य तथैवान्नं तुन्नवाय कृतघ्नयोः।
कर्म्मारस्य निषादस्य रङ्गावतारकस्य च॥
सुवर्णकर्त्तुर्व्वेणस्य शस्त्रविक्रयिणस्तथा।
श्ववतां शौण्डिकानाञ्च चैलनिर्णेजकस्य च॥
रजकस्य[3] नृशंसस्य यस्य चोपपतिर्गृहे।
मृष्यन्ति ये चोपपतिं स्त्रीजितानाञ्च सर्व्वशः॥
अनिर्द्दशञ्च प्रेतान्नमतुष्टिकरमेव च।

---

१ क्वचित्-अवीरायाश्च योषितः।
२ (क) (ग) पाठः-विक्रयिकस्य च। ३ (ग) रञ्जकस्य।

घुष्टान्नं भुञ्जतामत्र ये केचन बुभुक्षिता इत्याद्याघुष्य यदन्नं दीयते। गणः समूहः। गणिका वेश्या। विदुषा जुगुप्सितं वेदार्थविद्भिर्मध्यस्थैर्निन्दितं जुगुप्सित एव वा तत्र दृष्टदोषानुमानं, गायनो गानेन यो जीवति, कदर्य्यः कृपणः। वद्धस्य रज्ज्वादिना नियन्त्रितस्य निगड़स्य निगड़वतः सम्बन्धलक्षणया। अथवा निगड़ेन वद्धस्येत्यर्थः—तृतीयार्थे षष्ठी। पुंश्चली व्यभिचारिणी। भुक्तं यदन्नरसद्रव्यान्तरमम्बन्धादम्लतां गतं तच्चात्यम्लं वर्ज्ज्यं, अत्यम्लं भुक्तमाख्यातमिति वृहस्पत्युक्तेः।

शूद्रोच्छिष्टं शूद्रं भोजयित्वा यदुद्धृतम्। क्रूरोऽनृजुप्रकृतिः। उच्छिष्टभोजी प्रतिषिद्धोच्छिष्टभोजी। उग्रो दारुणकर्म्मा। उग्रो राजेति मञ्जरीकारः। सूतिकान्नं सूतिकामुद्दिश्य यत् क्रियते तदन्नं तत्कुलैरपि न भोक्तव्यम्। पर्य्याचान्तमितरानेकपङ्क्तिस्था-नभिभूय यत्रान्ने भुज्यमाने केनाप्याचम्यते तदन्नम्। अनिर्दशं सूतिकान्नं, विद्यादिना तुल्ययोर्विषमार्च्चनया प्रदीयमानमन्नं न भोक्तव्यमेवं विद्यादिभिर्विषमयोः समपूजया दीयमानमन्नं न भोज्यं दात्रापि न तथा देयम्।

अनर्च्चितं पूजार्हस्य यदवहेलया दीयते। वृथामांसं देवादि-पित्राद्युद्देशेन यन्न दत्तम्। अवीरा पतिपुत्रशून्या, नगरी नगरस्वामी। पिशुनः परोक्षे परापवादवक्ता। अनृती अत्यन्त-मसत्यवक्ता कूटसाक्ष्यादिवादी। क्रतुविक्रयिकः मदीययागाख्यं फलमस्त्वित्युक्त्वा यो धनमादत्ते। शैलूषो नटः। तुन्नवायः सौचिकः। कृतघ्नः कृतं यो न मन्यते। उपकृतस्य हन्तेति मिताक्षराकारः।

कर्म्मारो लौहकारः। निषादो जातिविशेषः। रङ्गावतारकः नट-गायनान्यो रङ्गावतरणकर्म्मजीवनवान्। वेणो वेणुच्छेदेन यो जीवति, वरुड़ इति विश्वरूपः। श्ववतां मृगयार्थकुक्कुरपोषकाणां। शौण्डिको मद्यविक्रेता। नृशंसो निर्द्दयः। उपपतिर्जारः। स्त्रीजितानां भार्य्यावशवर्त्तिनां सर्व्वशः सर्व्वव्यवहारेषु। अनिर्द्दशाह प्रेतान्नं दशाहाभ्यन्तरे प्रेतमुद्दिश्य यत्त्यक्तमसूतकिनोऽपि।

याज्ञवल्क्यः—

क्रूरोग्र-पतित-व्रात्य-दाम्भिकोच्छिष्ट-भोजिनाम्।
नृशंस-राज-रजक-कृतघ्न-वधजीविनाम्॥
चेलधाव-सुराजीव-सहोपपतिवेश्मनाम्।
पिशुनानृतिनोश्चैव तथा चक्रिकबन्दिनाम्॥
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा।

व्रात्यः पतितसावित्रीकः। नृशंसो निर्द्दयः। राजा भूपतिः। रजको वस्त्रादीनां रागकारी। वधजीवी प्राणिवधेन यो जीवति। चेलधावो वस्त्रनिर्णेजनकर्त्ता। सुराजीवो मद्यविक्रयी सहोपपतिवेश्मनां सहोपपतिना जारेण सहितं वेश्म येषां वर्त्तते ते। पिशुनः परदोषाख्यानशीलः। चक्रिकः तैलिकः। शाकटिकश्चेति लक्ष्मीधरः। बन्दी स्तावकः। सोमविक्रयी सोमलताविक्रेता॥

तथा,— नटनर्त्तकतक्षाणश्चर्म्मकारः सुवर्णकृत्।
श्वाणु पाषण्ड गणिका अभोज्यान्नाः प्रकीर्त्तिताः॥
गान्धर्व्वो लौहकारश्च सूचिकस्तुन्नवायकः।
चक्रोपजीवी रजकः कितवस्तस्करस्तथा॥

ध्वजी-मालोपजीवी च शूद्राध्यापकयाजकौ ।
कुलालश्चित्रकर्मा च वार्द्धुकिश्चर्मविक्रयी ॥

कुलालोऽस्वकीयोऽत्र , विवक्षितः । शूद्रस्यात्मभूतस्येति वशिष्ठवचनात् । कुम्भकारो भोज्यान्न इति देवलविधानन्तु स्वकीय कुम्भकारविषयम् ।

सुमन्तुः,—

अभिशस्त-पतित--पौनर्भव--भ्रूणह--पुंश्चल्यन्न--विशस्तकार[१]-तैलिक--[२]चर्म्मिकध्वजि--सुवर्णकार--लेखक--पण्ड--वन्धकी--गण-गणिकान्नानि चाभोज्यानि । शौकरिक व्याध निष्पच[३] रजक वन्धक वरुड़ चर्म्मकारा अभोज्यान्ना अप्रतिग्राह्याः ।

अभिशस्तोऽपवादविषयः । पौनर्भवः पुनर्भूपुत्रः । पौनर्भवस्तु विवादरत्नाकर एवास्माभिरुक्तः । विशस्तं धनुरादि विविधम् । शस्त्रमिह खड्गादि । ध्वजी मद्यविक्रेता । लेखकोऽत्र चित्रकरः । पण्डो नपुंसकः । वन्धकी स्वैरिणी । शौकरिकः शूकरोपजीवी । निष्पचः पाकाकारी । यतिर्ब्रह्मचारी ।

अप्रमनाद्यमित्यनुवृत्तौ वशिष्ठः,—

शूद्रस्य चात्मभूतस्य उपपतिर्यस्योपमन्यते यश्च गृहान् दहेत् यश्च वधार्हेणोपमन्यते ।

अथाप्युदाहरन्ति ।

---

१ मूले—अस्पृविशस्त्रकार ।
२ मूले चाक्रिक— ।
३ (ग) निषाद ।

नाश्नन्ति श्ववतो[1] देवा नाश्नन्ति वृषलीपतेः।
भार्य्याजितस्य नाश्नन्ति यस्य चोपपतिर्गृहे ॥

वधार्हेण विषादिना।

गौतमः,—

उच्छिष्ट पुंश्चल्यभिशस्तानपदेश्य दण्डिक तक्षक कदर्य्य वन्धनिक चिकित्सक [2]मृगय्वनिषुचारि उच्छिष्टभोजि-गण-विद्वेषिणामपांक्तेयानां प्रागन्नाद्दुर्बलात्। वृथान्नाचमनोत्थान-व्यपेतानि।

उच्छिष्टमस्वामिकम्। अनपदेश्योऽज्ञातकुलाचारः। दण्डिकोऽत्र निग्रहनियुक्तः। बन्धनिको गुप्तिग्रहनियुक्तः। चिकित्सकः चिकित्सोपजीवी। मृगय्वनिषुचारीत्येकपदं। तेनानिषुचारि-मृगयुपरिग्रहः। न मृगयोरिषुचारिणः परिवर्ज्यमन्नमिति वशिष्ठवचनात्। प्रागन्नात् दुर्बलात्। प्राक् ये श्राद्धप्रकरणे अपांक्तेया बोधितास्तैरादयस्त्यक्तात्मपर्य्यन्ताः तेषां प्रायश्चित्तात् प्रागन्नं न भोक्तव्यं। दुर्बलो हीनप्रजननकोशः श्राद्धप्रकरण एवोक्तः। वृथान्नं यद्देवाद्यनुद्देशेनात्मार्थं पच्यते। आचमन-मपेतमर्द्धभुक्ते यत्राचान्तम्। उत्थानमपेतं यत्रार्द्धभुक्ते एवोत्थितम्।

शङ्खलिखितौ,—

भीतरुदिताक्रन्दितावक्रुष्टच्युत--परिभुक्त--विस्मितोन्मत्तावधूत-राज-पुरोहितान्नानि वर्ज्जयेत्।

---

१ क्वचित् मूले श्वपतेः।

२ मूले मृगयुचाबच्छिंस।

भीतः त्रस्तः। रुदितोऽश्रुपातवान्। आक्रन्दितः दुःखप्रयुक्त-मव्यक्तशब्दवान्। अवक्रुष्टो जुगुप्सितः। क्षुतो हिक्कावान्, परिभुक्तो निःशेषान्नभोजनशीलवान्। अवधूतः सज्जनबहिष्कृतः। सर्व्वत्रादिकर्म्मणि क्तः। तेन भयादयो वर्त्तमाना एव निमित्तमिति नेतव्यं। राजा जानपदेश्वरः। पुरोहितो यस्य कस्यचित्। एतेषामन्नं न भोक्तव्यम्।

तथा,—

विद्विषाणस्य नाश्नीयात् ब्राह्मश्चित् पापकर्म्मणाम्।
श्राद्धसूतगणान्नानि परिभूतानि यानि च॥

विद्विषाणो विद्वेषणशीलः। श्राद्धमिह प्रेतश्राद्धम्। सूतो ब्राह्मण्यां क्षत्रियाज्जातः। परिभूतानि तिरस्कृतानि।

अन्नमभोज्यमित्यनुवृत्तावापस्तम्बः,—

सर्व्वेषां शिल्पजीविनां ये च शस्त्रमाजीवन्ति ये चाधिकं वन्धकम्। भिषक्। वार्द्धुषिको दीक्षितो, अक्रीतराजको अग्नी-षोमीयसंस्थायामेव हुतायां वपायां दीक्षितस्य भोक्तव्यम्। यज्ञार्थे वा निर्द्दिष्टे शेषान्नं भुञ्जीरन्निति ब्राह्मणम्।

राज्ञां प्रैष्यकरो। अहविर्याजी। चारी। अविधिना च प्रव्रजितः। यश्चाग्निमपास्यति। यश्च सर्व्वान् वर्ज्जयति। सर्व्वाशी च श्रोत्रियो निराकृतिर्वृषलीपतिः। मत्त उन्मत्तो बद्धोणिकः प्रत्युपविष्टो यश्च प्रत्युपवेशयते तावन्तं कालं।

ये चाधिकं वन्धकं उपजीवन्तीत्यनुषङ्गः। वार्द्धुषिकोऽत्र समर्घं पण्यमादाय महार्घं यः प्रयच्छति।

इत्यादिनोक्तः।

अक्रीतराजकोऽक्रीतसोमलताकः। अग्नीषोमीयसंस्था अग्नीषोमीयपशुयागसमाप्तिः। वपायां कृतायां अग्नीषोमीयं पशावेव निर्द्दिष्टं प्रेषणमेवाच प्रेष्यं अहुवियाजी नरादिरुधिरादीनामभिचारकर्म्मसु होता। चारी चरः। अविधिना प्रव्रजितः शास्त्रोक्तरीतिं विहाय प्रव्रजितः चतुर्थाश्रमी। अपास्यतीति अविधिनेति शेषः। सर्व्वान् अनिन्द्यानपि। निराकृतिरधीतवेदोऽप्यध्यापन-ब्रह्मयज्ञादिशून्यः। बद्धौषिकः-उत्तमर्णः।

स चेदुपविष्टो भवति अधमर्णं प्रति धनग्रहणार्थं अनश्नन्नुपविष्टो भवति तदा तावत् कालमभोज्यान्नः यस्तु प्रत्युपवेशयते यस्त्वाधमर्णमृणदानेन प्रत्युपवेशयते।

तथा पुण्यस्येप्सतो भोक्तव्यं पुण्यस्य चानीप्सतो न भोक्तव्यम्।

पुण्यस्य पुण्यवतः, ईप्सतो याचमानस्य। तथा यस्य कुले म्रियते न तत्रानिर्द्दशाहे भोक्तव्यम्। तथानुत्थितायां सूतिकायां अन्तःशवे च। अन्तःशवेऽशौचानधिकारिणोऽपि यस्य गृहमध्ये शवस्तद्गृहे यदन्नम्।

वशिष्ठः,—

> अशौचे यस्तु शूद्रस्य सूतके वापि भुक्तवान्।
> स गच्छेन्नरकं घोरं तिर्य्यग्योनौ च जायते॥
> अनिर्द्दशाहे परशवे[1] नियोगाद्भुक्तवान् द्विजः।
> कृमिर्भूत्वा स देहान्ते तां विष्ठां समुपाश्नुते॥

---

१ अनिर्द्दशाहे पारशवे। इति माधवभाष्यीयः पाठः॥

परशवे यदीयमशौचं यस्य न भवति स तस्य परः परस्य शवे मृतकाशौचमध्ये ।

देवलः,—

पतितान्नमभोज्यान्नमपांक्तेयान्नमेव च ।
शूद्रान्नं कुत्सितान्नञ्च दूषितं परिवर्ज्जयेत् ॥

अभोज्या—पुंश्चल्यादयः स्मृत्यन्तरोक्ताः । दूषितं कृमिकेश-कीटादिभिः ।

यमः,— यस्तु प्राणान्विमुञ्चेत भुक्त्वा श्राद्धं नवं द्विजः ।
अयाज्यासु तु घोरासु तिर्य्यग्योनिषु जायते ॥
उत्पाद्यते तु यो गर्भो भुक्त्वा श्राद्धं नवं द्विजः ।
न स विद्यामवाप्नोति क्षीणायुश्चैव जायते ॥

अयाज्यासु तिर्य्यग्योनिषु यागार्हच्छागाद्यन्य-तिर्य्यग्योनिषु । नवं श्राद्धं प्रेतश्राद्धं भुक्त्वा यो गर्भं उत्पाद्यते स विद्याहीनः क्षीणायुश्च भवति इति द्वितीयश्लोकार्थः ।

तथा,—

अधीत्य चतुरो वेदान् साङ्गोपाङ्गान् विशेषतः ।
नरेन्द्रस्य गृहे भुक्त्वा कृमियोनौ प्रजायते ॥

अधीत्यापीत्यर्थः ।

राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्च्चसम् ।
वैश्यान्नं सूतिकान्नञ्च लोकेभ्यः परिहन्ति ॥

तथा,— राजान्नं सूतकस्यान्नं चौरस्यान्नं तथैव च ।
मृतके सूतके चान्नं स्वर्गस्थमपि पातयेत् ॥

तेजः शापानुग्रहक्षमलं लोकेभ्यः सुकृतार्जितेभ्यः।

अवधूतमवज्ञातं सरोषं विस्मयान्वितम्।
गुरोरपि न भोक्तव्यमन्नं सत्कारवर्ज्जितम्॥
अवधूतं यदुच्छिष्टं वाग्दुष्टमपि यद्भवेत्।
अश्रद्धया कृतं दत्तमभोज्यं तद्द्विजातिभिः॥
अवलिप्तस्य मूर्खस्य दुर्वृत्तस्य च दुर्मतेः।
अन्नमश्रद्दधानस्य यो भुङ्क्ते भ्रूणहा तथा॥
स्वसुतान्नन्तु यो भुङ्क्ते स भुंक्ते पृथिवीमलम्।

श्वशुरान्नमिति पारिजातपाठः।

तथा,—

नृणामाकर्म्मलं चान्नं सर्व्वमन्ने प्रतिष्ठितम्।
दुष्कृतं हि मनुष्यस्य अन्नमाश्रित्य तिष्ठति॥
यो यस्यान्नमिहाश्नाति स तस्याश्नाति किल्बिषम्।

अवधूतं त्यक्तं। वाग्दुष्टं भक्ष्यमभक्ष्यतया वाग्विषयीकृतम्। अवलिप्तस्य गर्व्वितस्य भ्रूणहा तथा गर्भहन्तृसमो भवतीत्यर्थः।

तथा,—

विष्ठा वार्द्धुषिकस्यान्नं रुधिरं ब्रह्मघातिनः।
मलं हि रजकस्यान्नं चर्म्मकारस्य किल्बिषम्॥
पापं तथान्नं शौण्डस्य घाण्टिकस्य तथैव च।

अङ्गिराः,—

जन्मप्रभृति-संस्कारे बालस्यान्नस्य भोजनम्।
असपिण्डैर्न भोक्तव्यं स्मशानान्ते विशेषतः॥

जन्मप्रभृतिसंस्कारेऽस्य भोजने प्राप्तेऽपि सपिण्डैर्निमन्त्रितै-रपि न भोक्तव्यं, श्मशानान्ते तु विशेषत इत्यर्थः।

तथा,—

अप्रजानान्तु नारीणां न चाश्नीयाच्च तद्गृहे।
मोहाद्वा यस्तु भुञ्जीत स पूयं नरकं व्रजेत्॥

अप्रजा अनपत्या।

भविष्यपुराणे,—

यो गृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते।
अन्नन्तस्य न भोक्तव्यं वृथा पाको हि स स्मृतः॥

शातातपः,—

यच्च नाश्नन्ति वै देवाः पितरश्च तथाऽतिथिः।
वृथापाकः स विज्ञेयो न तस्याद्यात् कथञ्चन॥

मनुः,—

राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम्।
आयुः सुवर्णकारान्नं यशश्चर्मविकर्त्तिनः॥
कारुकान्नं प्रजां हन्ति बलं निर्णेजकस्य च।
गणान्नं गणिकान्नञ्च लोकेभ्यः परिकृन्तति॥
पूयं[१] चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम्।
विष्ठा वार्द्धुषिकस्यान्नं शस्त्रविक्रयिणो मलम्॥
य एभ्योऽन्ये त्वभोज्यान्नाः क्रमशः परिकीर्त्तिताः।
तेषान्त्वगस्थिरोमाणि वदन्त्यन्नं मनीषिणः॥

---

१ (ग) पुस्तके रूपं चिकित्सकस्यान्नं पुंश्चल्याश्च तथा श्रियम्।

स्तेनस्य नानास्तेनास्यदानि मेलकोद्धृतानि गणान्नानि।

पैठीनसिः,—

गणान्नं गणिकान्नञ्च दुष्कृतं, वार्द्धुषेर्विष्ठा, सांवत्सरज्योतिषिक-ग्रामकूटान्नं विषं, बन्धकीनां रेतो भिषक् शल्यहन्तः पूयं।, परिवित्ति-परिवेविदान विद्धप्रजनन वृषलीपतिदिधिषुपति पुनर्भूपुत्राणां रुधिरं पतितानाञ्च।

सांवत्सरो ज्योतिषिकः, ग्रामकूटो ग्रामकपटव्यवहारशीलः। परिवेविदानः परिवेत्ता विद्धप्रजननः च्छिन्नशिश्नचर्म्मा। दिधिषुर्ज्येष्ठायामपरिणीतायां परिणीता॥

वशिष्ठः,—

अश्रद्दधानस्य भोक्तव्यं चौरस्यापि विशेषतः।
नत्वेवं बहुयाज्यस्य यश्चोपनयते बहून्॥

बहुयाज्यो बहूनां याजकः।

मनुः,—

श्रोत्रियस्य कदर्य्यस्य वदान्यस्य च वार्द्धुषेः।
मीमांसित्वोभयं देवाः सममन्नमकल्पयन्॥
तान् प्रजापतिरित्याह माकृद्वं विषमं समम्।
श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत्॥

कदर्य्यः कृपणः। वदान्यो दाता।

बौधायनः,—

गुरोरश्रद्दधानस्य अश्रद्दधानस्य चाशुचेः।
मीमांसित्वोभयं देवाः सममन्नमकल्पयन्॥

तान् प्रजापतिरित्याह मा कृद्वं विषमं समम्।
हतमश्रद्दधानस्य श्रद्धापूतं विशिष्यते॥

आदित्यपुराणे,—

विष्णुं जामातरं मन्ये तस्य मन्युं न कारयेत्।
अप्रजायान्तु कन्यायां नाश्नीयात्तस्य वै गृहे॥
ब्रह्मदेयाविशेषेण देवे भोज्यं सदैव तु।
गन्धर्व्वैश्चैव देवैश्च कुर्य्याद्वै गमनागमम्॥
ब्रह्मदेयां न वै कन्यां दत्त्वा भुञ्जीत् कदाचन।
अथ भुञ्जीत मोहाद्यः स पूयं नरकं व्रजेत्॥

मनु-यम-वशिष्ठाः,—

अन्नादेर्भ्रूणहा मार्ष्टि पत्यौ भार्य्याऽपचारिणी।
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम्॥

इति प्रत्येकमन्नादिभिरन्वीयते। मार्ष्टीति संयोजयतीत्यर्थे प्रयुक्तम्।

शातातपः,—

वनस्पतिगते सोमे परान्नं ये तु भुञ्जते।
तेषां मासकृतो होमो दातारमधिगच्छति॥

वनस्पतिगते सोमे अमावास्यायामित्यर्थः।

मनुः,—

उपासते ये गृहस्थाः परपाकमबुद्धयः।
तेन ते पशुतां प्रेत्य व्रजन्त्यन्नाद्यदायिनाम्॥

अन्नाद्यमन्नम्।

यमः,—

स्वपाके विद्यमाने यः परपाकं निषेवते।
सोऽश्वत्वं शूकरत्वञ्च गर्द्दभत्वञ्च गच्छति॥
परपाकेन पुष्टस्य द्विजस्य गृहमेधिनः।
इष्टं दत्तं तपोऽधीतं यस्यान्नन्तस्य तद्भवेत्॥
यस्यान्नेन तु भुक्तेन भार्य्यां समधिगच्छति।
यस्यान्नन्तस्य ते पुत्रा अन्नाद्रेतः प्रवर्त्तते॥

याज्ञवल्क्यः,—

परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते॥

हारीत-जमदग्नी,—

ब्राह्मणान्नेन दारिद्र्यं क्षत्रियान्नेन प्रेष्यता।
वैश्यान्नेन तु शूद्रत्वं शूद्रान्नैर्नरकं व्रजेत्॥

॥ इति गृहस्थरत्नाकरे भोज्याभोज्यतरङ्गः॥ * ॥

## अथाभक्ष्याणि ।

तत्र कथं विप्रान् मृत्युर्जिघांसतीति ऋषिप्रश्नानन्तरम् ।

मनुः,—

अनभ्यासेन वेदानामाचारस्य च वर्ज्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥
लशुनं गृञ्जनञ्चैव पलाण्डुं करकाणि च ।
अभक्ष्याणि द्विजातीनां अमेध्यप्रभवानि च ॥
लोहितान् वृक्षनिर्य्यासान् व्रश्चनप्रभवांस्तथा ।
शेलुञ्च गव्यं पेयूषं यत्नेन परिवर्ज्जयेत् ॥

आलस्यमिह सामर्थ्ये सत्यपि अवश्यकर्त्तव्यप्रयत्ने वैमुख्यम् ।

अन्नदोषो जात्यादिभिः ।

तदुक्तं भविष्यपुराणे—

जातिदुष्टं क्रियादुष्टं कालाश्रयविदूषितम् ।
संसर्गाश्रयदुष्टञ्च सहृल्लेखं स्वभावतः ॥
लशुनं गृञ्जनञ्चैव पलाण्डुं करकाणि च ।
वार्त्ताकुं नाड़िकोलो[१]चुमुपेयाज्जातिदूषितम् ॥
न भक्षयेत् क्रियादुष्टं यद्दुष्टं पतितैः पृथक् ।
कालदुष्टन्तु विज्ञेयं स्त्रस्तनं चिरसंस्थितम् ॥
दधिभक्ष्यविकारांश्च मधुवर्ज्जन्तदिष्यते ।
सुरा लशुनसंसृष्टं पेयूषादिसमन्वितम् ॥

---

१ (ग) नाड़िकालावु ।

संसर्गदुष्टमेतद्धि शूद्रोच्छिष्टवदाचरेत्।
शूद्रोच्छिष्टन्तु विज्ञेयं पूर्व्वं शूद्रे प्रदर्शितम्॥
विचिकित्सा तु हृदये यस्मिन्नन्ने प्रजायते।
मद्यस्नेहत्वन्तु विज्ञेयं पुरीषन्तु स्वभावतः॥
रसदुष्टं विकाराद्धि रसस्येति प्रदर्शितम्।
पायस-क्षीर-पूपादि तस्मिन्नेव दिने तथा॥

गृञ्जनं लशुनसदृशः कन्दभेदः। लशुनानुकारी लोहितः सूक्ष्मकन्द इति तु हलायुधः। पलाण्डुर्लशुनानुकारी तदधिकस्थूलकन्दः। परांडुरिति यस्य प्रसिद्धिः। करका काष्ठकचिका कनकचि इति यस्य प्रसिद्धिः।

यदधिकृत्य ब्रह्मपुराणम्,—
मधुकैटभकृत्तानां त्रिशीर्षस्यासुरस्य च।
विष्णुना हन्यमानानां यन्मेदः पतितं भुवि॥
पिण्डोपमन्तु खुडखण्ड करकं चैत्यसन्निभम्।
कृत्वाकं कृचसदृशं दैत्यदेहसमुद्भवम्॥ इति

अमेध्यप्रभवानि साक्षाद्विष्ठाजातानि तण्डुलीयकादीनि शाकानीति याज्ञवल्क्योक्तेः। यानि तु साक्षाद्विष्ठाजातानि न भवन्ति किन्तु विष्ठाक्रान्तभूभूतानि तेषां पुष्पफलान्यदुष्टान्येव।

अमेध्येषु च ये वृक्षा उप्ताः पुष्पफलोपगाः।
तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च॥

इति बौधायनाभिधानात्।

अत्र वृक्षग्रहणाच्छाकादीनां निषेध एव। साक्षादमेध्यजातेषु वृक्षेषु यानि पुष्पफलानि तानि निषिद्धान्येव।

वृक्षनिर्य्यासो वृक्षाश्रितःसृतो रसः कठिनतां गतो लाक्षक इति प्रसिद्धः। व्रश्चनं छेदनं व्रश्चनप्रभवांस्तथा व्रश्चन-प्रभवान् लोहितानपि वर्ज्जयेदित्यर्थः।

तथा च तैत्तिरीयश्रुतिः,—

अथो खलु य एव लोहितो यो वा व्रश्चनान्निर्य्येषति तस्य नाद्यत्वं। काममन्यस्येति।

तेन कर्पूरादीनामनिषेधः। शेलुर्बहुवारः। पेयूषं नव-प्रसूतायाः क्षीरं यदग्निसंयोगात् काठिन्यं भजते तच्चेद्गव्यं तदा त्याज्यम्। अलाबुरत्र वर्त्तुलाकारा।

अलाबुं वर्त्तुलाकारां वार्त्ताकुं कुन्दसन्निभाम्।

इति वचनात्।

वार्त्ताकुपदमपि एतदनुसारात् श्वेतवार्त्ताकुपरमित्यन्ये। वार्त्ताकुः कण्टकारिकेति हलायुधः। नाड़िका कलम्बिका। कालदृष्टमित्यादिह्यस्तनं पर्य्युषितं सर्व्वमभक्ष्यम्। दधि-भक्ष्य-विकाराश्च दधिगोधूमादिप्रभवाः पर्य्युषिता अपि भक्ष्यतया ये बोधितास्तेऽपि चिरावस्थित्या मन्दरसगन्धा वृत्ता यदि तदा तेऽपि न भक्ष्याः। मधु पुनश्चिरावस्थित्या मन्दरसगन्धमपि भक्ष्यम्॥

यमः,—

लशुनं गृञ्जनञ्चैव विलेयं सुमुखन्तथा।

करकाणि पलाण्डुञ्च वर्ज्जयेच्च सदा बुधः॥

वरं स्वयं विप्रस्यापि सर्व्वमांसानि भक्षयेत्।
न च छत्राकमश्नीयाद्विजात्यपसदोऽपि सन्॥
भूमिजं वृक्षजं वापि छत्राकं भक्षयन्ति ये।
ब्रह्मघ्नांस्तान् विजानीयाद्ब्रह्मवादिषु गर्हितान्॥

विलेयो घृतमलम्। सुमुखः सर्पविशेषः।

तदुक्तं विश्वकोषे,—

सुमुखस्तार्क्ष्यतनये फणिभेदे च पण्डिते। इति।

विप्रस्य हिंसयित्वा।

हारीतः,—

छत्राकं विड्वराहञ्च पलाण्डुं लशुनन्तथा।
भक्षयन् वै पतेद्विप्रो यदि स्यात् सर्व्ववेदवित्॥

विड्वराहो ग्रामशूकरः।

देवलः,—

श्लेष्मातको ब्रजफली कौसुम्भं नाडमस्तकान्।
गृञ्जनश्चेति शाकानामभक्ष्याणि प्रचक्षते॥
पलाण्डुं लशुनं भुक्तं निर्य्यासश्चेति सर्व्वशः।
कुटन्दं श्वेतवृन्ताकं कुम्भाण्डञ्च न भक्षयेत्॥

श्लेष्मातको बहुवारकः। कौसुम्भः कुसुम्भसम्भवः। नाडं कलम्बिका। मस्तकं वर्त्तुलालाबुः। श्वेतवृन्ताकं श्वेतवार्त्ताकुः। निर्य्यासो लोहितः। लोहितान् वृक्षनिर्य्यासानिति दर्शनात्। कुलत्थ इति हलायुधः। कुम्भाण्डं कुम्भार इति प्रसिद्धम्। स्थलकुम्भीति हलायुधः।

नित्यमभोज्यमित्यनुवृत्तौ गोतमः,—

किसलय कियाकु लशुन निर्य्यास लोहिता अश्चनाश्च। दारु-वक-बलाक टिट्टिभ-नकश्चरा अभक्ष्याः।

किशलयो नवपल्लवः। कियाकुः अहिक्षत्राकम्। सुदर्शना इति हलायुधः।

अभोज्यप्रकरणे आपस्तम्बः,—

तथा कीलालौषधीनाञ्च। कलञ्ज पलाण्डु परारी(रि)काः। यच्चान्यत् परिचक्षते। [१]कृत्याकभोज्यमिति ब्राह्मणम्।

कीलालः सुरा तदर्थं स्थापिता या ओषधयो ब्रीह्यादयः। किलालौषधयस्तेषां विकार इति शेषः। कलञ्जो लशुनविशेषः। परारिका पलाण्डुविशेषः।

रसोनो दीर्घपत्रश्च पिच्छगन्धो महौषधम्।
हिरण्यश्च पलाण्डुश्च नवतक्कः परारिका॥
गृञ्जनं यवनेष्टश्च पलाण्डोर्दश जातयः।

इति स्मृतिमञ्जरीकारलिखित-वैद्यकश्लोकात्।

तथा यच्चान्यदेवंविध कोविदारादि शिष्टाः प्रचक्षते तदपि न भोज्यमिति शेषः।

उशनाः,—

कुसुम्भं नाडिकाशाकं वृन्ताकं पौतिकन्तथा।
भक्षयन् पतितस्तु स्यादपि वेदान्तगो द्विजः॥

---

१ (ख) (ग) पुस्तकद्वये कियाकुरभोज्यमिति।

वृन्ताकमत्र श्वेतवार्त्ताकुः। श्वेतवृन्ताकमिति देवलवचनात्। तितरा इति हलायुधः। पौतिकं कण्टाकरञ्जभवम्।

पैठीनसिः,—

वृन्ताक नाड़िका पोतु कुसुम्भाऽश्मन्तकाश्चेति शाकद्लानामभोज्याः।

अश्मन्तकः कुशसदृशस्तृणविशेष इति ब्रह्मचारिकाण्डे लक्ष्मीधरः।

विष्णुः,— न कोविदार वट पिप्पल शाकम्।

हारीतः,— परमान्नं कृशरमांसं यावकापूपान्नं शस्कुलीर्न पाचयेदात्मार्थे। न वा प्लचोदुम्बर दधित्थ नीप मातुलुङ्गानि भचयेत्। परमान्नं पायसम्। अपूपाः पौलिका इति प्रसिद्धाः। दधित्थः कपित्थः, नीपः कदम्बः। मातुलुङ्गो बीजपूरकः।

वर्ज्जयेदित्यनुवृत्तौ— याज्ञवल्क्यः,—

देवतार्थं हविः शिग्रु[1]र्लोहितव्रश्चनानि च।
अनुपाकृतमांसानि विड्जानि करकाणि च॥

देवतार्थं बल्युपहारादि। हविर्होमार्थं चरुपुरोडाशादि। शिग्रुः शोभाञ्जनः। अनुपाकृतं पशुयागादौ मन्त्रवत्तृणेन पशोःस्पर्शनाख्यं यदुपकरणं तच्छून्यम्।

तथा,—

वृथा कृशर संयाव पायसापूपशस्कुलीः।

वृथा आत्मार्थं यत् पच्यते न देवाद्युद्देशेन। वृथान्न-

१ मूले शिग्रं लोहितान् व्रश्चनांस्तथा।

प्रतिषेधे कृतेऽपि तद्विशेषाणां कृशरादीनां पुनः प्रतिषेधसङ्कीर्त्तणे दोषाधिक्यद्योतनार्थम्। प्रायश्चित्तद्योतनार्थमिति लक्ष्मीधरः। कृशरस्तिलमुद्गाभ्यां सह सिद्ध ओदनः। संयावो घृत-क्षीर-गोधूमचूर्ण-सिद्धः। तकोरिकेति प्रसिद्धः। पायसं दुग्धयवागूः। शष्कुली मुद्गादिचूर्णसिद्धा सतिला स्नेहपक्वा। स्नेहपक्वगोधूम-विकार इति हलायुधः।

यमः,—

यवागूं कृशरञ्चैव पूप पायस शष्कुलीः।
क्षीरपक्वमांसञ्च मत्स्यानप्यनुपाकृतान्॥
वर्ज्जयेत् सर्व्वशुक्तानि देवान्नानि हवींषि च।
स्नेहेन तु समायुक्तं नैव सर्व्वं प्रयोजयेत्॥

यवाग्वादिकमत्रापि वृथेति विवक्षितम्। क्षीरपक्वमांसं भौमोष्मपक्वमांसं मत्स्यस्यानुपाकृतत्वं मांसवत्। देवान्नानि देवोद्देशेन त्यक्तानि। हवींषि आत्मसमाचार्थसाधितानि। स्नेहेन तु समा-युक्तमतिहीनस्निग्धरसम्।

गोतमः,—

उद्धृतस्नेह विलेय पिण्याकमथितप्रभृतीनि चात्तवीर्य्याणि नाश्नीयात्।

विलेयं घृतमलं, आत्तवीर्य्यं गृहीतसारम्।

देवलः,—

न बीजान्युपभुञ्जीत रोगापन्निमृते बुधः।
फलान्येषामनन्तानि बीजानान्तु विनाशयेत्॥

नाश्नीयात् पयसा नक्तं भुक्तं येन क्षपेन्निशि।
न चीरमुत्सृजेत् प्राप्तं पवित्रं हि पयः स्मृतम्॥

बीजशब्दः कुष्माण्डादिबीजपरः।

यमः,—

भिन्नभाण्डे न भुञ्जीत न रात्रौ दधिशक्तुकान्।
दिवा दधित्थधानासु रात्रौ तु दधिशक्तुषु॥
कोविदारे च रजके तस्करे सूतके तथा।
श्लेष्मातके तथाऽलक्ष्मीर्नित्यमेव कृतालया॥

सूतके जननमरणाशौचे।

तथा,—

काक-कुक्कुट-संस्पृष्टं भक्तं वा कृमिसंयुतम्।
अभोज्यं तद्विजानीयाद्धर्म्मराजवचो यथा॥

ब्रह्मपुराणे,—

राजमाषाः स्थूलमुद्गास्तथा वृषक-चाषकौ।
मसूरः शतपुष्पाश्च कुसुम्भः श्रीनिकेतनम्।
शस्यान्येतान्यभक्ष्याणि न च देयानि कस्यचित्॥

राजमाषो वर्व्वटो ववनीति प्रसिद्धः। स्थूलमुद्गो मेथी इति प्रसिद्धः। वृषकचाषकाविति स्थाने हलायुधेन वृषकवामकाविति पठित्वा वृषको वामको यवासो दुरालभेति व्याख्यातम्। शतपुष्पा सौक इति प्रसिद्धा। श्रीनिकेतनं श्रोषधीविशेष इति हलायुधः।

वर्ज्जयेदित्यनुवृत्तौ आपस्तम्बः,—

कृष्णधान्यञ्च शूद्रान्नं ये चान्येऽनाद्यसम्मिताः[१] ।

कृष्णधान्यं कालाङ्गी करिडनादि । अनाद्यमभक्ष्यं मण्डूकादि तेन सम्मितास्तत्तुल्याः ।

वशिष्ठः,—

उच्छिष्टमगुरोरभोज्यं स्वमुच्छिष्टमुच्छिष्टोपहतञ्च । [२]वमनं केशकीटोपहतञ्च इति ।

स्वमुच्छिष्टं स्वयमेव किञ्चित् भुक्त्वा त्यक्तं । वमनमिह परिहितवमनम् ।

सुमन्तुः,—

केशकीटवचोऽभिहतं श्वभिराघ्रातं प्रेक्षितञ्चादधि सिद्धान्नं पर्य्युषितम् । पुनःसिद्धं चाण्डालावेक्षितमन्नमभोज्यम् । अन्यच्च हिरण्योदकैः स्पृष्ट्वा ।

वचोऽभिहतं यस्यान्नस्योपरि वागुच्चारिता । प्रेक्षितं श्वभिरेव । अदधि दधिव्यतिरिक्तं सिद्धान्नं । पर्य्युषितं रात्र्यन्तरितम् । पुनः सिद्धं सिद्धं सत् पुनः साधितं । हिरण्योदकं हिरण्योदकेन संस्पृष्टं तोयम् ।

मनुः,—

मत्तक्रुद्धातुराणान्तु न भुञ्जीत कदाचन ।
केशकीटाऽवपन्नञ्च पदा स्पृष्टन्तु कामतः ॥
भ्रूणघ्नाऽवेक्षितञ्चैव संस्पृष्टञ्चाप्युदक्यया ।

---

१ मूले सम्मताः ।　　२ मूले यदन्नं ।

पतत्रिणाऽवलीढ़ञ्च शुना संस्पृष्टमेव च ॥

उदक्या रजस्वला। पतत्रिणाऽवलीढ़ञ्च चटकेनास्वादितम्।

याज्ञवल्क्यः,—

शुक्तं पर्य्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम्।

उदक्यास्पृष्टं संघुष्टं पर्य्यायान्नञ्च वर्ज्जयेत् ॥

संघुष्टं कीर्त्युद्घोषणार्थं यद्दत्तं पर्य्यायान्नं अन्यस्यान्नं यदन्यस्मै व्यपदेशेन दत्तम्।

यथा,—

ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत्।

उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणञ्चरेत् ॥ इति

आपस्तम्बः,—

अप्रयतोपहतमन्नमप्रयतं नत्वभोज्यम्। अप्रयतेन शूद्रेणोपहृतमभोज्यम्। यस्मिंश्चान्ने केशःस्यादन्यद्वा अमेध्यम्। अमेध्यैरवमृष्टञ्च[१]। कीटो वामेध्यसेवी मूषकलाङ्गं वा। पदा वोपहतं [२]सिचा वा शुना वापपात्रेण वा स्पृष्टं दृष्टमुपहृतं दास्या वा नक्तमाहृतं। भुञ्जानं वा यत्। यत्र शूद्र उपस्पृशेत् अनर्हद्भिर्वा समानपङ्क्तौ भुञ्जानेषु वा यत्रानुत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा मनुष्यैरवघ्रातं अन्यैर्व्वाऽमेध्यैः।

अप्रयतोपहतं अशुचिना स्पृष्टं अप्रयतमशुचि नत्वभोज्यं नाभोज्यमेव किन्त्वग्न्यधिश्रयणादिना शुद्धीकृत्य भोज्यम्। अप्रयतेन तु शूद्रेण स्पृष्टं सर्व्वथा अभोज्यम्।

---

१ (ग) अवमृष्टञ्च। २ मूले शिवया — वृत्तम्।

अमेध्यमूषरमृत्तिकादि, अमेध्यैर्लशुनादिभिः स्पृष्टं कीटोऽमेध्यसेवी यस्मिन्नन्ने न तद्भोज्यमिति सम्बन्धः। मूषकला मूषकविष्ठा अङ्कं तस्यैव पुच्छपादादि। पदा चरणेन सिचा वस्त्रप्रान्तेन प्रक्षालितेनापि स्पृष्टं शुना कुक्कुरेण दृष्टं स्पृष्टञ्चापपात्रेण पतितादिना आनतमानीतम्। दास्या चेत्यत्र स्त्रीलमविवक्षितं न्यायसाम्यात्। उपस्पृशेदित्यत्र तदन्नं किञ्चिद्भुक्तमप्यभोज्यमित्यन्वयः।

अनर्हद्भिरपांक्तेयैः समानपङ्क्त्यामन्नमभोज्यमनर्हद्भिर्वा समानपङ्क्तौ यत्र कियद्भुक्तेषु कश्चिदनुत्थाय भृत्यादेरुच्छिष्टं प्रयच्छेत्तत्रैवैषां कियद्भुक्तमप्यन्नमभोज्यमेवमाचामेदित्यत्र कुत्सयित्वा एहि भस्मभूतं वेत्याद्युक्त्वा मनुष्यैरवघ्रातं प्रयत्नेनेति शेष। अमेध्यैर्मार्जारगर्द्दभादिभिः।

शङ्खलिखितौ,—

तत्र भक्ष्याणि पेयानि वर्ज्जयेत् अमेध्यपतित-चाण्डाल-पुक्कश-रजस्वला-कुणप-कुष्ठिस्पृष्टानि।

पुक्कशो म्लेच्छजातिविशेषः। कुणपः शवः।

वृहस्पतिः,—

> नाद्याच्छास्त्रनिषिद्धन्तु भक्ष्यभोज्यादिकं द्विजः।
> मांसं विगर्हितञ्चैव भुक्तं बहुविधन्तथा॥
> अत्यन्तं भुक्तमाख्यातं निन्दितं ब्रह्मवादिभिः।

विगर्हितमिह शिष्टनिन्दितम्।

देवलः,—अभोज्यं प्राक्तनाहारं भुक्तं पर्य्युषितं सदा ।

अन्यत्र मधुमांसाभ्यां भक्ष्येभ्यः सर्पिषो गुडात् ॥

अवलीढ़ञ्च मार्ज्जार-ध्वाङ्क्ष-कुक्कुट[1]-मूषकैः ।

भोजने नोपभुञ्जीत तदमेध्यन्तु धर्म्मतः ॥

विशुद्धमपि चाहारं मक्षिकाकृमितन्तुभिः ।

केशलोमनखैर्वापि दूषितं परिवर्ज्जयेत् ॥

भक्ष्येभ्यो मोदकशर्क्करादिभ्यः ।

अश्नीयादित्यनुवृत्तौ हारीतः,—

न रजस्वलया दत्तं न पुंश्चल्या न क्रुद्धया न मलवद्वाससा नापरया द्वारा पक्वं न द्विःपक्वं न शुक्तं न पर्य्युषितं । अन्यत्र गुड़पिष्टक-सक्तु-स्नेह-गोरस-तैलादिषु पक्वात् । न तैल दध्यनुपानं न वा च्युतान्नं न जुगुप्सितम् ।

मलवद्वाससा विष्ठानुलिप्तवस्त्रया । अपरयाद्वारा रजस्वलादिभिरन्यद्वारा तैलादिषु पक्वादिति तैलपक्वात् । आर्षत्वादत्र सप्तम्यलुक्, स्नेहः सार्षपादि । तैलादिरित्यादिशब्दात् घृतग्रहणम् । न तैलदध्यनुपानं भोजनान्ते तैलं दधि वा यथा भवति तथा नाश्नीयादिति तात्पर्य्यार्थः ।

अभोज्यमित्यनुवृत्तौ गोतमः,—

पर्य्युषितमशाकभक्ष्यस्नेह-मांस-मधूनि ।

शाकादिकं विहाय पर्य्युषितं न भक्षयेदित्यर्थः । भक्ष्यशब्देन मोदकादिग्रहणम् ॥

---

१ (ख) कुक्कुर ।

शङ्खलिखितौ,—

नापणीयमन्नमश्नीयात्। न द्विःपक्वं न भुक्तं न पर्य्युषितम्। अन्यत्र राग-शुक्त-षाड़व-दधि-गुड़ गोधूम-यवपिष्टकविकारेभ्यः।

आपणीयं हट्टक्रीतम्। रागा वस्त्रगालितामुद्गदाड़िममांसाद्याः प्रलेह्याः। शुक्तं शुक्त इति प्रसिद्धम्। षाड़वाः स्वाद्वम्लकटुकस्वाद्याः प्रलेह्या एव।

वशिष्ठः,—

अन्नं पर्य्युषितं भावदुष्टं सकृल्लेखं[1] पुनःसिद्धमाममांसं स्वचौषपक्वं काममन्तु दध्ना घृतेन वाभिघारितमुपभुञ्जीत।

आमं तण्डुलादि एतान्यपि दध्ना घृतेन वाभिघारितानि वा भुञ्जीत भोज्यान्तरासम्भव इति कल्पतरुकारः।

आपस्तम्बः,—

नापणीयमन्नमश्नीयात्। तथा रसानाममांसमधुलवणानीति परिहाप्य। तैलसर्पिषी तु प्रयोजयेदुदके अवधायान्नं पर्य्युषितमखाद्यापेयानाद्यं शुक्तञ्च। फाणितं पृथुक तण्डुल करम्भ भरुज सक्तु शाक मांस पिष्ट क्षीरविकारौषधि वनस्पति मूल फलवर्ज्जं शुक्तं[2] वापरयोगम्।

रसा गुड़ादयः। उदके उदकपात्रे मणिकादौ निधाय अखाद्यापेयानाद्यं— खाद्यमाद्ये कठिनमृदुभक्ष्ये पिष्टकाद्योदनादीनि। पेयं प्रसिद्धं भुक्तं पर्य्युषितमपि नाभ्यवहार्य्यम्। फाणित-

१ मूले सकृल्लेखम्।        २ (क) (ख) पुस्तके भक्तम्।

मिश्रुरसविकारः पाकसाध्यो द्रवः खण्डविकृतिः। फेना इति यस्य प्रसिद्धिरिति हलायुधः।

पृथुकतण्डुलास्थिपिटकाः करम्भा दधिसक्तवः। भरुजा धानाः। माषयव्यादिप्रकार इति हलायुधः। शुक्तं वा अपरयोगमिति। अपरेणान्नेन योगो यस्येति वैयधिकरण्येऽपि बहुव्रीहिः। यच्च शुक्तमयाद्यमपेयमनाद्यमुक्तं तद्द्रव्यान्तरासंसर्गि। शुक्तन्तु केवलमिति गोतमदर्शनात्।

बृहस्पतिः,—

दधि भक्ष्यं शुक्तमपि यच्चैव दधिसम्भवम्।
कन्दमूलफलैः पुष्पैः शस्तैः शुक्तासवन्तु यत्॥
अविकारि भवेन्मद्यमभक्ष्यन्तद्विकारकृत्।

कन्देत्यादेरयमर्थः कन्दादिभिः कृतं शुक्तं यदि मोहादिविकारकरं न भवति तदा भक्ष्यं नो चेन्नेति॥

यमः,—

शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदाचन।
प्रक्षालितानि निर्दोषाण्यापद्धर्मो यदा भवेत्॥
मसूरं माषसंयुक्तं तथा पर्य्युषितं हि यत्।
तत्तु प्रक्षालितं कृत्वा भुञ्जीताज्याभिघारितम्॥

यच्छुक्तं पर्य्युषितञ्च मसूरमाषसंयुक्तं तत्प्रक्षाल्याभिघार्य्य आपदि भोज्यमित्यर्थः।

मनुः,— यत्किञ्चित् स्नेहसंयुक्तं भक्ष्यभोज्यमगर्हितम्।
तत्पर्य्युषितमप्याद्यं हविःशेषञ्च सर्व्वतः॥

चिरस्थितमपि त्वाद्यमस्नेहाक्तं द्विजातिभिः ।
यवगोधूमजं सर्व्वं पयसश्चैव विक्रिया ॥

यमः,—

अपूपाश्च करम्भाश्च धानाश्च वटसक्तवः ।
शाकं मांसं मसूरश्च सूपं कृसरमेव च ॥
यवागूं पायसञ्चैव यच्चान्यत् स्नेहसंयुतम् ।
सर्व्वं पर्य्युषितं भोज्यं शुक्तञ्च परिवर्ज्जयेत् ॥

देवीपुराणे,—

न च कृसरपूपानि पायसं दधिसर्पिषी ।
वृथामांसञ्च नाश्नीयात् पितृदेवविवर्ज्जितम् ॥

ब्रह्मपुराणे,—

चाण्डालपतितामेध्यकुणपैः कुष्ठिना तथा ।
ब्रह्मघ्न-सूतिकोदक्या कौलेयककुटुम्बिभिः ॥
दृष्टं वा केशकीटाक्तं मद्यस्पृक्तनकाम्बुभिः ।
शुद्धमद्यात् सहलेखं प्रसूतश्चोष्णमेव च ॥

कौलेयककुटुम्बिभिः कौलेयकाः श्वानः कुटुम्बिनो येषां ते तथा ।

तथा,— उच्छिष्टेन तु शूद्रेण संस्पृष्टः परिवेषकः ।
द्रव्यहस्तस्तु यत्किञ्चिद्दद्यात्तच्च न भक्षयेत् ॥

तथा,—

एकेन पाणिना दत्तं कदाचन न भक्षयेत् ।
घृतं तैलञ्च लवणं पानीयं पायसन्तथा ॥

भिक्षा तु शूद्रदत्ता या न सा ग्राह्या तु कुत्रचित्।
शूद्रभुक्तावशिष्टन्तु नाद्यान्नाण्डस्थितं त्वपि॥

मार्कण्डेयपुराणे,—

भिन्नभाण्डगतं तद्वन्मुखवातोपशामितम्।
तत् सूक्ष्मापक्वमक्लिन्नमवलीढमसंस्कृतम्॥
पिष्टशाकेषु पयसां विकारान्नृपनन्दन।
तथा मांसविकारांश्च वर्ज्ज्यांश्चैव चिरोषिताः॥

भविष्यपुराणे,—

आयसेन तु पात्रेण यदन्नमुपनीयते।
भोक्ता विष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत्॥
अङ्गुल्या दन्तकाष्ठञ्च प्रत्यक्षलवणञ्च यत्।
मृत्तिकाभक्षणञ्चैव तुल्यं गोमांसभक्षणैः॥

---

## अथ दुग्धानि।

तत्र मनुः,—

अनिर्द्दशाया गोः क्षीरमौष्ट्रमैकशफन्तथा।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः॥
आरण्यानाञ्च सर्व्वेषां मृगाणां माहिषं विना।
स्त्रीक्षीरञ्चैव वर्ज्ज्यानि सर्व्वशुक्तानि चैव हि॥

अनिर्द्दशा गौः यस्याः प्रसवानन्तरं दशदिनानि नापक्रान्तानि। एकशफा एकखुरा वड़वादयः। आविकं मेषीदुग्धं। सन्धीनि या ऋतुमती वृषमिच्छति।

तदुक्तं हारीतेन। सन्धीनि या वृषस्यन्ती तस्याः पयो न पिबेत्। ऋतुमद्भवतीति।

विवत्सा मृतप्रजा। आरण्यमृगाः रुरु-महिषपृषतादयः।

गोतमः,—

गोश्च क्षीरमनिर्द्दशायाः सूतके चाजामहिष्योश्च नित्यमाविक मपेयं औष्ट्रमैकशफञ्च स्यन्दिनी यमसू सन्धिनीनाञ्च।

सूतके प्रसवे वृत्ते अनिर्द्दशाया दशदिनान्यनपक्रान्तवत्याः। स्यन्दिनी वत्सं विनैव प्रस्रवत्स्तनी। यमसूर्य्यमजापत्या।

वौधायनः,—

अनिर्द्दशाहा सन्धिनी[1]। क्षीरमपेयं विवत्सान्यवत्सायाश्च। अनिर्द्दशायाः सन्धिन्याश्च[2] क्षीरमपेयम्। अन्यवत्सा या अन्यवत्सेन दुह्यते।

आपस्तम्बः,—

सर्व्वं मद्यमपेयं तथैडिकं[3] पयः।

ऐडिकमिति सरलच्छागः। स तु इडिक इत्येव लोके प्रसिद्धः तत्भवमैडिकं पयः।

---

१ (ख) (ग) स्यन्दिनी।
२ (ख) (ग) स्यन्दिन्याश्च।
३ मूले ऐलकं।

न पिबेदित्यनुवृत्तौ। हारीतः,—

नान्यवत्सायाः स्तेययोगात्। न हतवत्सायाः शोकाभिभूतत्वात्। न निर्व्विकायाः अमत्वात्। नान्यस्याश्छिद्रात्मना ऽश्नीयात्। एवं न नवप्रसूतायाः सरजस्त्वात्।

सप्तरात्रादित्येके दशरात्रादित्यपरे मासेन पेयं[१] भवतीत्यपरे। एवं याज्ञ्याः।

द्वौ मासौ पाययेद्वत्सं तृतीये द्विस्तनं दुहेत्।
चतुर्थे त्रिस्तनं दुह्याद्यथान्यायं यथाबलम्॥

अत्र विवत्सा विप्रकृष्टवत्सा निर्व्विका निःशेषेण दुग्धा। नान्यस्य गोराच्छाद्य दुग्धं मासेन गश्नीयादपयुञ्ज्यादित्यर्थः। पेयूषमभिनवदुग्धम्।

यमः,—

वर्ज्जयेद्गोरवत्साया क्षीरमेकशफस्य यत्।
आरण्यानाञ्च सर्व्वेषां वर्ज्जयित्वा तु माहिषम्॥

ब्रह्मपुराणे,—

घृतफेनं घृतान्मण्डं पेयूषमथवाऽपि गोः।
सगुड़ं मरिचाक्तन्तु तथा पर्य्युषितं दधि॥
दौर्णत्कमपेयञ्च सक्तस्राद् च फेनवत्।
प्रमादाद्भक्षितैरेभिर्व्रतमे पञ्च व्रतञ्चरेत्॥

घृतादिति पञ्चमी षष्ठ्यर्थे मण्डमुपरिभागः। सगुड़ञ्च मरिचाक्तञ्च पेयूषपदोपात्तदुग्धमेव निषिद्धमिति हलायुधः।

१ (ग) पेयूषम्।

मगड़ं मरिचाक्तञ्च पर्य्युषितं दध्येवेत्यन्ये। दीर्णं विभक्तीभूत-दधिभागम्।

यमः,—

भुक्त्वा तु क्षीरलवणं चिराचञ्च वने वसेत्।

भविष्यपुराणे,—

कापिलं यः पिबेच्छूद्रो नरके परिपच्यते।
हुतशेषं पिबेद्विप्रो विप्रः स्यादन्यथा पशुः॥

हलायुधे आपस्तम्बवाक्यम्,—

क्षत्रियस्यैव वृत्तस्थो वैश्यः शूद्रोऽथवा पुनः।
यः पिबेत् कापिलं क्षीरं न ततोऽन्योऽस्त्यपुण्यकृत्॥

ब्रह्मपुराणे,—

अपि प्रयाणसमये रात्रौ न प्राशयेद्दधि।
मधुपर्कप्रदानन्तु वर्ज्जयित्वा तु कामतः॥
दिवा धानासु वसति रात्रौ च दधिसक्तुषु।
अलक्ष्मीः कोविदारेषु कपित्थेषु सदा स्थिता॥

शङ्खः,—

माहिषं गव्यमाजञ्च भक्ष्यं क्षीरेषु निर्द्दिशेत्।

---

## अथ पक्षिणः।

तत्र मनुः,—

क्रव्यादान्[१] शकुनीन् सर्व्वान् तथा वै ग्रामवासिनः।
अनिर्द्दिष्टांश्चैकशफान् टिट्टिभञ्च विवर्ज्जयेत्॥
कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम्।
सारसं रज्जुदालञ्च दात्यूहं शुकसारिकम्॥
प्रतुदान् जालपादांश्च कोयष्टि-नखविष्किरान्।
निमज्जतश्च मत्स्यादान् सौनं वल्लूरमेव च॥
वकञ्चैव वलाकञ्च काकोलं खञ्जरीटकम्।
मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्व्वशः॥

क्रव्यादो मांसाशिनो गृध्रादयः। ग्रामवासिनः पारावतादयः। उभयत्रापि शकुनीनित्यन्वयः। अनिर्द्दिष्टान् श्रुतौ—भक्ष्यत्वेनाकथितान्।

अोष्ट्रं वाड़वमालभेत तस्य च मांसमश्नीयादिति श्रुतौ—एकशफमांसस्यापि यज्ञे भक्ष्यताविधानात्। कलविङ्को ग्रामचटकः। तस्य शकुनीन् ग्रामवासिन इत्यनेन निषेधे लब्धे पुनर्निषेध आरण्यककलविङ्कनिषेधाय। प्लवः प्लवनेनैवाहारं यः करोति। रज्जुदालकः काष्ठकुट्टकः यस्य कठच—इति प्रसिद्धिः। दात्यूहः कालकण्ठो डाहुक इति प्रसिद्धः। प्रतुदाः चञ्चा प्रतुद्य भक्षणशीलाः। जालपादा आड्यादयः। जालपादा आडिविशेषा जलवा इति प्रसिद्धाः।

---

१ (क) (ख) क्रव्याद शकुनीन्।

अगस्त्योपदेशे— घृतकुम्भसमास्तत्र शरावीर्भक्षयिष्यसि । इति रामायणदर्शनादविगीताचाराच्चेत्यन्ये । कोयष्टिकः कोटा इति प्रसिद्धः । नखविष्किराः नखैर्व्विलुप्य ये भक्षयन्ति वनकुक्कुटादयः । विमज्जतो मत्स्यादान् मण्डूकप्रभृतीन् । शौनं शूनात्मकस्थानभवं मांसम् । वल्लूरमुत्तमशुष्कमांसम् ।

उत्तमशुष्कमांसं स्याद्वल्लूरन्तु त्रिलिङ्गकम् । इत्यमरात् ।

काकोलो द्रग्धकाकः । मत्स्यादान्नक्रादीन् सर्व्वशः सर्व्वप्रकारेण ।

याज्ञवल्क्यः,—

कलविङ्कं सकाकोलं कुररं रज्जुदालकम् ।
जालपादान् खञ्जरीटानविज्ञातान् मृगद्विजान् ॥
चाषांश्च रक्तपादांश्च (शौ) सौनं वल्लूरमेव च ।
मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ॥

कुरर उत्क्रोशः । उत्क्रोश-कुररौ समावित्यमरकोषात् । स च कङ्कुन इति प्रसिद्धः । चाषः कराम इति प्रसिद्धः । रक्तपादाः कादम्बादयः ।

देवलः,—

बलाका हंस दात्यूह भृङ्गराजक चित्रकाः ।
उलूक-कुरर-श्येन-गृध्र-कुक्कुट-वायसाः ॥
चकोरः कोकिलो रज्जाः कुटिलाश्चाषमण्डूकाः ।
कङ्केलो वरणो भास शतपत्र प्लवङ्गमाः ॥
उत्क्रोशो बर्हिणः क्रौञ्चश्चक्रवाकः शिलीमुखः ।
पारावत-कपोतौ च अभक्ष्याः पक्षिणः स्मृताः ॥

भृङ्गराजो धूम्राटो धनच्छुमा इति प्रसिद्धः। चित्रकः चित्रकपोतः। चेतक इति प्रसिद्धः। कङ्कोलो हितपक्षः। कङ्कारीति प्रसिद्धः। कुररपदादेवोत्क्रोशनिषेधे सिद्धे पुनरुत्क्रोशोपादानं दोषातिशयार्थम्।

अभोज्यमित्यनुवृत्तौ वशिष्ठः,—

शकुनानाञ्च— विधून[1] वि(ष्कि)ष्कर जालपादाः कलविङ्क प्लव हंस चक्रवाक भास वायस पारावत कक्कुभ शारङ्गाः पाण्डुक कपोतक क्रौञ्च ([2]गृध्र श्येन) कुरर वकवलाकाः मद्गु टिट्टिभ मण्डलनक्तञ्चराः। दार्व्वाघाट चटक तैलातक हारीत खञ्जरीट कुक्कुट शुक सारिकाः। कोकिल क्रव्यादा ग्रामोपचारिणश्चाग्रामचारिणश्च।

विधूनो विधूनातीति विधूनः। भासः भल्लचरो गृध्रविशेषः। शारङ्गो भ्रमरः। मण्डलो वाग्गुदो वादुर इति प्रसिद्धः। नक्तञ्चरा रात्रौ चारिणः उलूकादयः। दार्व्वाघाटः काष्ठकुट्टकः हारीतो हरितपक्षः कपोताकारः। ग्रामचारिणः-ग्राम एव सदा चरन्ति।

अभक्ष्यप्रकरणे आपस्तम्बः,—

कुक्कुटो विकिराणां प्लवः प्रतुदां। क्रव्यादः। हंस सारस[3] चक्रवाक सुपर्णाश्च। कुञ्च क्रौञ्च वा(र्ध्रा)र्ध्राणस लक्ष्मणवर्ज्जम्।

सारसः काष्ठकुट्टकः।

---

१ मूले विषु।

२ (क) (ग) पुस्तके ( ) चिह्नितांशो नास्ति।

३ मूले— भास।

भक्ष्यानुवृत्तौ बौधायनः,—

पक्षिणस्तित्तिरि कपोत कपिञ्जल वार्ध्रीणस मयूरा वारणवर्ज्जाः पञ्चविष्किराः।

(वारणमयूरः खटमोरा इति प्रसिद्धो मयूरविशेषः। अत्र कपोतो वनकपोतः।

यत्तु वन्यपारावतः, कपोतो वेत्यभक्ष्यगणे याज्ञवल्क्ये कपोतोक्तिः सा ग्रामकपोताभिप्राया।

शङ्खः,—

तित्तिरञ्च मयूरञ्च लावकञ्च कपिञ्जलम्।

वार्ध्रीणसं वर्त्तकञ्च भक्ष्याणाह यमः सदा॥

कपिञ्जलो गौरतित्तिरः। वार्ध्रीणसस्तु—

कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः।

इति लक्षितः।

वर्त्तको वटयी इति प्रसिद्धः। अत्र मयूरस्तृणमयूरपरः पूर्व्वेण सममेकवाक्यानुरोधात्॥

---

## अथ पश्वादयः।

तत्र देवलः,—

अभक्ष्याः पशुजातीनां गोखरोष्ट्राश्वकुञ्जराः।

सिंहव्याघ्रर्क्षसरभाः सर्पाऽजगर-जालकाः॥

---

१ (ग) पुस्तके लावक।

आखुमूषिक मार्ज्जार नकुल ग्रामशूकराः।
श्व शृगाल मृग द्वीपि गोलाङ्गुल नृमर्क्कटाः॥

ऋचो भल्लूकः, शरभोऽष्टाङ्घ्रिः पशुविशेषः। अजगरः सर्पभेदः। आखुर्महामूषिकः। मूषिकः स्वल्पमूषिका। मृगशब्दो ऽज्ञात-मृगपरः। अज्ञातांश्च मृगद्विजानिति याज्ञवल्क्यवचनात्।

ग्राम्यारण्यान् पशूनश्नन्ति यथा—

अज मेष महिष हरिण खड्ग रुरु पृषत न्यङ्कु ऋच महारण्य-वासिनश्च महावराहान्।

इत्यादि हारीतवचनात्।

रुरुर्वक्रशाखशृङ्गो मृगः। पृषतो बिन्दुयुतो मृगः। ऋचो मृदुशृङ्गो वेस इति प्रसिद्धः। न्यङ्कुः सम्बरसदृशः शृङ्गरहितो मृगविशेषः।

आजं गव्यञ्च यन्मांसं मयूरञ्च विवर्ज्जयेत्। इति हारीतवचनं न्यायोपात्तयज्ञादिविशेषविषयमिति नेयम्।

द्वीपी चित्रकव्याघ्रः चितौघा इति प्रसिद्धः। गोलाङ्गुलः कृष्णमुखो वानरः ना मनुष्यः। मर्क्कटो गोलाङ्गुलान्यमर्क्कटः।

यमः,—

गवाश्वगर्द्दभोष्ट्रांश्च श्वशृगालं तथैव च।
विष्किरान् प्रतुदान् भुक्त्वा सद्यः पतति वै द्विजः॥

विष्किरोऽत्र सव्वविष्किरः,—

नित्यमभोज्यमित्यनुवृत्तौ गोतमः,—

उभयतोदन्त-केशलोमैकशफ-कलविङ्क—प्लवचक्रवाकहंसाः।

उभयतोदन्ता मनुष्यादयः। केशिशब्दो गवयजातिपरः। अलोमानः सर्पादयः। तथानुपदद्दवसन्न वृथामांसानि।

अनुपददत् स्वाभाविकदन्तपतनपूर्व्वसमये भक्ष्योऽप्यभक्ष्य इत्यर्थः। अवसन्नो व्याधिग्लानः।

अभोज्या इत्यनुवृत्तौ वशिष्ठः,—

गौरगवय सरभाश्चानुद्दिष्टाः अथाधेन्वनडुहौ मेध्यौ तु वाजसनेयके विज्ञायते। खड्गे तु विवदन्त्यग्राम्यशूकरे च।

गौरो ऽश्वसदृश आरण्यपशुः। मेध्यौ मेधो यज्ञस्तदङ्गभूतौ। खड्गे च विवदन्ते अग्राम्यशूकरे चेति। खड्गाग्राम्यशूकरयोर्मुनिभेदेन भक्ष्योक्तिः। श्राद्धादिविनियुक्तविषयतया व्यवस्थितो विकल्पः।

ब्रह्मपुराणे,—

पशोश्च मार्य्यमाणस्य न मांसं ग्राहयेद्द्विजः।
पृष्ठमांसं गर्भशय्यां शुष्कमांसमथापि वा॥
भूमेरन्तरितं कृत्वा मृद्भिश्चाच्छादितञ्च यत्।
पक्वमांसमृचीषन्तु प्रयत्नात्तन्न भक्षयेत्॥

भूमेरन्तरितं कृत्वा मृद्भिराच्छाद्य यत् पक्वं तन्मांसं न भक्षयेत्। ऋचीषशब्दोऽत्र भौमोष्मपक्वपरः।

मनुः,—

न भक्षयेदेकचरानज्ञातांश्च मृगद्विजान्।
भक्षयेद्वा[२] समुद्दिष्टान् सर्व्वान् पञ्चनखांस्तथा॥

---

१ क्वचित् शलभाऽश्चाश्च। २ मूले— भक्ष्येष्वपि।

एकचराः स्वभावत एकाकिनो ये चरन्ति सर्पादयः। अज्ञातान् नामतः स्वभावतो रसवीर्य्यपाकतश्च। असमुद्दिष्टान शास्त्रे भक्ष्यत्वेन कथितान्।

अभक्ष्यप्रकरणे आपस्तम्बः,—

पञ्चनखानां गोधा कच्छप श्वाविट्‌छल्यक खड्ग शश पूतिखषवर्ज्जम्।

श्वाविट् सेधा, यस्य साहीति प्रसिद्धिः। शल्यकः सेधासदृशः शल्कवान्। पूतिखषः प्राणिविशेषो हिमवति प्रसिद्ध इति कपर्द्दी।

मनुः,—

श्वाविधं शल्यकौं गोधां खड्ग कूर्म्म शशांस्तथा।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः॥

एकतोदतः एकतोदन्तान्। एवञ्च पञ्च पञ्च नखा इति रामायणीय परिसंख्या तु अतिरिक्तशल्यकीशब्दविषयत्वेन परामृश्य समर्थनीया।

ग्रामारण्यानामित्यादि महावराहानित्यन्तमभिधाय—

पुनर्हारीतः,—

शशक शल्यक सेधा गोधा-कूर्म्म-वर्त्तिक-तित्तिरि-मयूर-वार्द्धीणस-लावक-वक-पिञ्जलान् सशल्कांश्च मत्स्यान् न्यायोपपन्नान् भक्षयेत्। सेधा सशल्कवती निषिद्धान्य-कुररविधिर्विहित-मांसालाभे द्रष्टव्या॥

---

## अथ मत्स्याः ।

तत्र मनु-यमौ,—

यो यस्य मांसमश्नाति स तन्मांसाद उच्यते ।
मत्स्यादः सर्व्वमांसादस्तस्मान्मांसं विवर्ज्जयेत् ॥

आपस्तम्बः,—

अभक्ष्यश्चेटो मत्स्यानाम् । सर्पशीर्षी मृदुरः क्रव्यादो ये चान्ये विकृताः[1] यथा मनुष्यशिरसः ।

सर्पशीर्षः सर्पस्येव शिरो यस्य सः । मृदुरो मकरः क्रव्यादा नक्रादयः ।

यमः,—

अभक्ष्या मकर सर्प सरीसृप कङ्क मयूर वर्म्मिक नक्र कर्क्कट शिशुमारा ये चान्ये हयकर्णिकाः । ये चान्येऽशल्का उभयकाश्याः ।

सर्पोऽत्र जलसर्पो डुण्डुभः । सरीसृपोऽत्र जलौकाः । कङ्कुर्ज्जलकाकः । मयूरोऽत्र जलचरो मयूरसदृशः पक्षी । खयर इति प्रसिद्धः । वर्म्मिकः सर्पसदृशो मत्स्यविशेषः । उभयकाश्या उभयतोमुखाः ।

तथा,—

मत्स्यांश्चाशकलान् सर्व्वान् वेदाध्यायी विवर्ज्जयेत् ॥

वेदाध्यायी त्रैवर्णिकः ।

---

१ (ख) विकृतास्याः ।

पैठीनसिः,—

कुलीर वातुकि-पूतन जलानर्त्त चित्रगाश्चेत्यभक्ष्याः।

तथा,—

शल्कैर्युक्ता मत्स्या भक्ष्याः। इतरे त्वभक्ष्याः।

देवलः,—

शम्बूकः शुक्तिर्नखशुक्तिः शिशुमारः प्लवङ्गमः।

मत्स्याश्च विकृता नैकभक्ष्या जलौकसः॥

शुक्तिः शुक्तिका। नखशुक्तिर्दीर्घशुक्तिका। प्लवङ्गमोऽत्र मण्डुकः।

मनुः,—

पाठीन-रोहितावाद्यौ नियुक्तौ हव्यकव्ययोः।

राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्व्वशः॥

आद्यावदनीयौ। नियुक्तौ हव्यकव्ययोः श्राद्धाद्यर्थं विनियुक्तौ।

भक्ष्यमित्यनुवृत्तौ बौधायनः,—

मत्स्याः— सहस्रदंष्ट्रश्चिलिचिमो वर्म्मि बृहच्छिरोमशकरि रोहितराजीवाः।

चिलचिमः स्थलचरः लोहिताकारः स्थलचरो रोहितसदृशः। राजीवः सहस्रजम्बिलः पाठीनः। वर्म्मिर्वायवो वाम्रुरिति प्रसिद्धः। निषेधस्तु प्राच्योऽन्यायोपात्तविषयः।

॥ इति गृहस्थरत्नाकरे अभक्ष्यतरङ्गः॥

## अथ मांसभक्षणवर्ज्जनयोर्विधिः ॥

तत्र मनुः,—

एतदुक्तं द्विजातीनां भक्ष्याभक्ष्यं विशेषतः ।
मांसस्यातः प्रवक्ष्यामि विधिं भक्षणवर्ज्जने ॥
प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया ।
यथाविधि नियुक्तस्तु प्राणानामपि[१] चात्यये ॥
प्राणस्यान्नमिदं सर्व्वं प्रजापतिरकल्पयत् ।
जङ्गमं स्थावरञ्चैव सर्व्वं प्राणस्य भोजनम् ॥
चराणामन्नमचरा दंष्ट्रिणामप्यदंष्ट्रिणः ।
अहस्ताश्च सहस्तानां शूराणाञ्चैव भीरवः ॥
नात्ता दुष्यत्यदन्नाद्यान् प्राणिनोऽहन्यहन्यपि ।
धात्रैव सृष्टाश्चाद्याश्च प्राणिनोऽत्तार एव च ॥
यज्ञाय जग्धिर्मांसस्येत्येष दैवो विधिः स्मृतः ।
अतोऽन्यथा प्रवृत्तिस्तु राक्षसो विधिरुच्यते ॥
क्रीत्वा स्वयं वाप्युत्पाद्य परोपहृतमेव च ।
देवान् पितॄंश्चार्च्चयित्वा खादन्मांसं न दुष्यति ॥

एतदुक्तं द्विजातीनां इत्यनेन पूर्व्वोक्तभक्ष्याभक्ष्यत्वकथनं न शूद्रमधिकृत्य किन्तु ब्राह्मणादि-वर्णत्रयमधिकृत्येत्युक्तं । तेन लशुनादिभक्षणं शूद्रस्य निर्द्दोषं तन्मध्यगकाकादिभक्षणन्तु महाजन-विगानात् शूद्रस्यापि निषिद्धं । वक्ष्यमाण मांसवर्ज्जनविधानन्तु

१ मूले प्राणानामेव ।

साधारणं वर्ज्जने तु विधिः सङ्कल्पात्मकः। प्रोक्षितमत्र यज्ञार्थं मन्त्रैः संस्कृतं, असंस्कृतान् पशून्मन्त्रैरित्यादिवाक्यविशेषात्।

ब्राह्मणानाञ्च काम्यया— त्वमस्मिन्कार्य्ये मांसं भक्षयेति ब्राह्मणेच्छातस्त्वेकवारमेव। सकृत् ब्राह्मणकाम्ययेति यमवचनात्। असकृत्त्वे दोष एव।

प्राणानामपि चात्यय इति—यदा मांसभक्षणविरहेण प्राणात्ययः सम्भाव्यते तदा मांसं भक्षयेदित्यर्थः। एतेषामेव पूर्व्वोक्तानामनुवादाः प्राणस्यान्नमित्यादयः। चरा हरिणादयः। अचरास्तृणादयः दंष्ट्रिणः शार्द्दूलादयः। अदंष्ट्रिणो मृगादयः। सहस्ता मनुष्यादयः। अहस्ता मत्स्यादयः। शूराः आखेटकादिशौण्डाः। भीरवः कातरा हरिणादयः। यज्ञायेति तादर्थ्ये चतुर्थी। जग्धिरदनम्।

स्वयमुत्पाद्येति क्षत्रियमधिकृत्य,—

> क्षत्रियाणाञ्च यो दृष्टो विधिस्तमपि मे शृणु।
> वीर्य्येणोपार्ज्जितं मांसन्तथा खादन्न दुष्यति॥
> आरण्याः सर्व्वदैवत्याः प्रोक्षिताः सर्व्वशो मृगाः।
> अगस्त्येन पुरा राजन् मृगयाऽनेन शस्यते॥
> अतो राजर्षयः सर्व्वे मृगयां यान्ति भारत।
> लिप्यते न च दोषेण न चैतत् पातकं विदुः॥

इति महाभारतदर्शनात्।

क्रीत्वा स्वयं वेत्यनेन देवाद्यर्च्चनपूर्व्वकं मांसमदोषमित्युक्तम्। याऽपि मांसवर्ज्जने फलश्रुतिः साप्येतत्-प्रकरण-लभ्यमांसभक्षण-वर्ज्जनविषया न निषिद्धादिविषया तदाचरणे दोषश्रवणात्।

याज्ञवल्क्य-विश्वामित्रौ,—

*प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया ।*

*देवान् पितॄंश्चार्चयित्वा खादन्मांसं न दोषभाक् ॥*

भक्षयंश्चापि मांसानि शेषभोजी न लिप्यते ।

औषधार्थमशक्तौ वा नियोगाद्यज्ञकारणात् ॥

शेषभोजी देवाद्यर्च्चनशेषभोक्ता । औषधार्थमौषधफलार्थम् । अशक्तौ मांसभक्षणं विना सामर्थ्यविरहे । तेन यत्र मांसभक्षणं विना सामर्थ्यमतीव मन्दं भवति तत्र भक्षणे न दोष इत्यर्थः । नियोगः श्राद्धे निमन्त्रणम् । यज्ञकारणात् यज्ञसिद्ध्यर्थं भक्षयन्नपि न लिप्यत इति सम्बन्धः ।

यमः,— भक्षितं प्रोक्षितं मांसं सकृद्ब्राह्मणकाम्यया ।

दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्ज्जयेत् ॥

सकृदेकवारं सकृद्ब्राह्मणकाम्यया इत्यन्वयः । नियमे मांसवर्ज्जनव्रते सति । एतच्च प्रोक्षितं विहाय सर्व्वैरेव संवध्यते । प्रोक्षिते तु प्रत्यक्षश्रुतिविरोधात् । एवमन्यस्मिन्नपि मांसभक्षणाभ्यनुज्ञाने याज्ञवल्क्याद्युक्तबलवत्प्रमाणविषयं विहाय नियमे तु वर्ज्जयेदिति योज्यम् ।

बृहस्पतिः,—

रोगी नियुक्तो विधिना हुतं विप्रवृतस्तथा ।

मांससद्यास्वतुर्द्धैषा परिसंख्या प्रदर्शिता ॥

अतोऽन्यथा तु योऽश्नीयात् विधिं हित्वा पिशाचवत् ।

यावन्ति पशुरोमाणि तावत् प्राप्नोति मारणम् ॥

रोगी चाच मांसैकापनेयरोगः। नियुक्तः श्राद्धे निमन्त्रितः, विधिना वेदोक्तप्रकारेण। कृतं कृतावशिष्टम्। विप्रवृतो विप्रेण मांसभक्षणे कृतप्रार्थनः। चतुर्द्धा चतुःप्रकारेण, परिसंख्या इह परिगणनमात्रम्।

देवान् पितॄन् समभ्यर्च्च्य खादन्मांसं न दुष्यति।

इत्यादिभिर्म्मांसभक्षणाभ्यनुज्ञानात्।

हारीतः,—

वृथामांसस्य भोक्ता तु प्राश्य कृच्छ्रञ्चरेद्बुधः।
काम्यया ब्राह्मणानान्तु यथाकामं समश्नुते॥

मनुविष्णू,—

असंस्कृतान् पशून् मन्त्रैर्नाद्याद्विप्रः कथञ्चन।
मन्त्रैस्तु संस्कृतानद्यात् शाश्वतं विधिमास्थितः॥

प्रोक्षितं भक्षयेन्मांसमिति यदुक्तं तस्येदं विवरणम्। शाश्वतं नित्यं वेदबोध्यत्वात्[१]। आस्थित आश्रितः।

यमः,—

यजुषा संस्कृतं मांसं पृष्ठमांसं विवर्ज्जयेत्।

पृष्ठमांसं पृष्ठसम्बन्धि पशुमांसम्।

पैठीनसिः,—

श्राद्धे तु मांसमश्नीयात् तथाऽतिथिनिमित्तके।
यावन्ति पशुरोमाणि तावन्निरयमश्नुते॥

१ (ग) वेदबोधितत्वात्।

अतिथ्यर्थमुपात्तमतिथिना भक्ष्यमित्यर्थः। यो नाश्नाति तं प्रत्युत्तरखण्डेन निन्दामाह यावन्ति पश्विति।

मनुः,—

नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः।

स प्रेत्य पशुतां याति सम्भवानेकविंशतिम्॥

यमः,—

आमन्त्रितस्तु यः श्राद्धे दैवे वा मांसमुत्सृजेत्।

यावन्ति पशुरोमाणि तावन्निरयमश्नुते॥

हारीत-शातातपौ,—

क्षत्रियैस्तु मृगव्येन विधिना समुपार्ज्जितम्।

श्राद्धकाले प्रशंसन्ति सिंहव्याघ्रहतञ्च यत्॥

विषशस्त्रहतञ्चैव व्याधि-तिर्य्यग्घतञ्च यत्।

न प्रशंसन्ति वै श्राद्धे यत्तु मन्त्रविवर्ज्जितम्॥

मृगव्येनाखेटकेन। विधिना विषकृष्यादिशौर्य्येण। तिर्य्यञ्चोऽत्र सिंहव्याघ्रेतरपशवः।

गौतमः,—

व्यालहताऽदृष्टदोष वाक्-प्रशस्तान्यभ्युक्ष्योपभुञ्जीत।

व्यालाः सिंहादयः स्तत्यन्तरोक्ताः, अदृष्टदोषमनिश्चितदोष। वाक्प्रशस्तं शुचि अशुचि वेति सन्दिग्धं यदन्येन शुचीत्युक्तं, तदभ्युक्ष्योपभुञ्जीत इत्यर्थः।

आपस्तम्बः,—

हिंसार्थेनाऽसिनाच्छिन्नं मांसमभक्ष्यम्।

हिंसार्थेन प्राणिवधार्थमेव निर्म्मितेन असिना पाकार्थं यत् कृतम्। असिपदमत्रोपलक्षणम्। तेनास्त्रान्तरस्य तथाविधस्य ग्रहणम्।

मनुः,—

नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः।
जग्ध्वा ह्यविधिना मांसं प्रेत्य तैरद्यतेऽवशः॥
न तादृशं भवत्येनो मृगं हन्तुर्द्धनार्थिनः।
यादृशं प्रेत्य भवति वृथामांसानि खादतः॥
मां स भक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम्।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः॥
स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति।
यत्र यत्राभिजायेत स भवेद्व्याधिपीड़ितः[१]॥
भुक्त्वा तु मोहान्मांसानि नरः पुष्ट्यर्थमात्मनः।
अकृत्वा ह्यात्मनः शुद्धिं तिर्य्यग्योनिषु पच्यते॥

शुद्धिः प्रायश्चित्तम्।

मनुः,—

यस्तु भक्षयते मांसं विधिं हित्वा पिशाचवत्।
स लोकेऽप्रियतां याति व्याधिभिश्चैव पीड्यते॥

हारीतः,—

मातृकात् पैतृकाच्चैव किल्बिषाज्जन्तुसम्भवः।
यो यस्य भक्षयेन्मांसं स तस्याश्नाति किल्बिषम्॥

---

१ मूले-अनभ्यर्च्य पितॄन् देवान् ततोऽन्यो मांसपुष्टकृत्।

भक्षयित्वा तु यो मांसमद्भिः शौचं समाचरेत्।
हिंसन्ति[1] देवतास्तस्य अशुचेः शुचिदर्शिनः॥

किल्विषमच शुक्रशोणिते।

तस्य मांसं तन्मयत्वात्तत् किल्विषमिहोच्यते।

देवलः,—

आत्मार्थं स्वादुकामित्वा[2]ज्जीवघातं न घातयेत्।
कष्टं हि व्यालधर्म्मित्वाज्जीवमांसोपजीवनम्॥

मनुः,—

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी।
संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः॥

अनुमन्ता हननस्वीकर्त्ता। विशसिता अङ्गविभाग-व्यापारकर्त्ता। निहन्ता प्राणवियोगफलकव्यापारकर्त्ता। संस्कर्त्ता मांसपरिष्कारकर्त्ता। उपहर्त्ता परिवेशनकर्त्ता।

यमः,—

यस्तु खादति मांसानि प्राणिनां जीवितैषिणाम्।
हतानाञ्च मृतानाञ्च यथा हन्ता तथैव सः॥
अनुमन्ता विशस्ता च निहन्ता क्रयविक्रयी।
घातकाः सर्व्व एवैते संस्कर्त्ता षष्ठ उच्यते॥
निर्देशादनुमन्ता च विशस्ता शासनात्तथा।
हननेन तथा हन्ता धनेन क्रयिकस्तथा॥

१ (ग) हसन्ति। २ (ग) भोजनैषित्वात्।

विक्रयी च धनादानात् संस्कर्त्ता तत्प्रवर्त्तनात्।
धनेन चोपभोगेन बधबन्धेन चाप्यथ॥
त्रिविधस्तु बधो ज्ञेयो भोक्ता तत्राऽतिरिच्यते।
घातकाः षट् समाख्याता भोक्ता तत्र च सप्तमः॥
षण्णां तेषां सकाशात्तु भोक्ता तत्रातिरिच्यते।
क्रेतारं व्रजते पादो पादो भोक्तारमृच्छति॥
घातकं व्रजते पादः पादमिच्छन्त्यतस्त्रयः[1]।
यदि तत्खादको न स्यात् घातको न तथा भवेत्॥
खादको घातकः क्रेता त्रयस्तुल्या न संशयः।
न भूमेर्जायते मांसं न च वृक्षात् प्ररोहति॥
घोरं प्राणिबधं कृत्वा तस्मान्मांसं विवर्ज्जयेत्।
यस्तु खादति मांसानि ब्राह्मणो वेदवित्तथा॥
स पच्यते निरालम्बे नरके तेन कर्म्मणा।
भक्ष्याण्यपि च मांसानि यस्तु तानि न भक्षयेत्॥
अभक्षणेन मांसानां साक्षाद्धर्मस्य तुष्यति।
सर्व्वेषामेव मांसानां महादोषस्तु भक्षणे॥
अभक्षणे तु धर्म्मः स्यादिशिष्ट इति नः श्रुतम्।

तथा,—

वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः।
मांसानि तु न खादेद्यस्तयोः पुण्यफलं समम्॥

[1] क्वचित् पादं पादंशतस्त्रयः

फलमूलाशनैर्मेध्यैर्मुन्यन्नानाञ्च भोजनैः ।
न तत् फलमवाप्नोति यन्मांसपरिवर्ज्जनात् ॥

याज्ञवल्क्यः,—

सर्व्वान् कामानवाप्नोति अश्वमेधफलन्तथा ।
गृहेऽपि निवसन् विप्रो मुनिर्म्मांसविवर्ज्जनात् ॥

वृहस्पतिः,—

रोगार्त्तोऽभ्यर्थितो वापि यो मांसं नात्ति लोलुपः ।
फलं प्राप्नोत्ययत्नेन सोऽश्वमेधसवस्य च ॥
मद्यं मांसञ्च भूतानां मैथुनं ललनं स्मृतम् ।
तदेव विधिना कुर्व्वन् स्वर्गमाप्नोति मानवः ॥

नन्दिपुराणे,—

क्लेदि दुर्गन्धि विकृतं जुगुप्सास्पदमेव च ।
मांसं न भक्षयेद्विद्वान् न स्वादु परमं हि तत् ॥
यस्तु सम्यक् स्वधर्म्मस्थो गुरुशुश्रूषणे रतः ।
गच्छेल्लोकं शुभं मर्त्त्यो दिव्यं देवनिषेवितम् ।
तमेव दिवसं मांसाद्विरतो लोकमाप्नुयात् ॥

तमेव दिव्यं देवनिषेवितमेव । दिवसमेकदिवसम् ।

यो मांसं वर्ज्जयेन्मासं पुरुषः शुभमानसः ।
स याति स्वर्गमतुलं दिव्यलोकसमृद्धिमान् ॥
यत्तपो घोरमक्लिष्ट पुष्करेषु समाः शतम् ।
तस्रा फलमवाप्नोति तत्फलं मांसवर्ज्जनात् ॥
चन्द्रसूर्य्यग्रहे यस्तु दद्यात् पृथ्वीं चराचराम् ।

गयायाञ्च तपो घोरं यश्चाब्दशतमाचरेत् ॥
एवं विधाय परमान् स लोकान् प्राप्नुयान्नरः।
लोकान् दिव्यानवाप्नोति सर्व्वदा मांसवर्ज्जनात् ॥
यश्चोपदेशं कुरुते परस्य तु महात्मनः।
मांसस्य वर्ज्जनफल सोऽमांसादफलं लभेत् ॥

महाभारते,—

मासि मास्यश्वमेधेन यो यजेत शतं समाः।
न खादति च यो मांसं सममेतद्युधिष्ठिर ! ॥
यस्तु वर्षशतं पुण्यं तपस्तप्येत् सुदारुणम्।
यश्चैवं वर्ज्जयेन्मांसं समं वा स्यान्न वा समम् ॥

मांसं वर्ज्जयेन्मासमिति शेषः।

तथा,—

कौमुदन्तु विशेषेण शुद्ध(क्ल)पक्षन्नराधिप।
वर्ज्जयेत् सर्व्वमांसानि धर्म्मो ह्यत्र विधीयते ॥
चतुरो वार्षिकान् मासान् यो मांसं परिवर्ज्जयेत्।
चत्वारि भद्राण्याप्नोति कीर्त्तिमायुर्यशो बलम् ॥
अथवा मासमप्येकं सर्व्वमांसान्यभक्षयन्।
अतीत्य सर्व्वदुःखानि सुखं जीवेन्निरामयः ॥
ये वर्ज्जयन्ति मांसानि मासशः पक्षशोऽपि वा।
तेषां हिंसानिवृत्तानां ब्रह्मलोको विधीयते ॥
मासन्तु कौमुदं पक्षं वर्ज्जितं सर्व्वराजभिः।
सर्व्वभूतात्मभूतैस्तैर्विज्ञातार्थ-परापरैः।

[1]नाभागेनेत्यादिना राज्ञः प्रकृत्य—

एतैश्चान्यैश्च राजेन्द्रैः पुरा मांसं न भक्षितम्।
शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुवन्॥
ब्रह्मलोके च तिष्ठन्ति ज्वलमानाः श्रिया वृताः।
उपास्यमाना गन्धर्व्वैः स्त्रीसहस्रसमन्विताः॥
तदेवमुत्तमं धर्म्ममहिंसालक्षणं शुभम्।
ये चरन्ति महात्मानो नाकपृष्ठे वसन्ति ते।
मधु मांसञ्च ये नित्यं सर्व्वे ते मुनयः स्मृताः॥

मधु मांसञ्चेति वर्ज्जयन्तीति शेषः।

मनुः,—

न मांसभक्षणे दोषो न मद्ये न च मैथुने।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला॥

न मांसभक्षणे दोष इत्यादि विहितमांसभक्षणाभिप्रायम् निवृत्तिर्म्मांसादिवर्ज्जनसङ्कल्पः। महाफला स्वर्गादिफला भक्षणजन्यादृष्टापेक्षया स्वर्गादेर्म्महत्त्वात्।

नन्दिपुराणे,—

यदि वा न समर्थः स्यात् सदा मांसविवर्ज्जने।
वर्ज्जयेदयने मुख्ये कृतस्वर्गमतिर्नरः॥
चतुर्थीं चाष्टमीं चैव द्वादशीं च चतुर्द्दशीम्।
पञ्च पर्व्वाणि वर्ज्ज्यानि षडशीतिमुखानि च॥

[1] क्वचित् नाभागानित्यादिना।

संक्रमस्यापि सूर्य्यस्य विषुवौ चापि वार्षिकौ।
मांसात्तु विरतो मर्त्त्यः स्वर्गं याति दिनत्रयम्॥
दिनत्रयं विरत इत्यन्वयः॥

॥ इति गृहस्थरत्नाकरे मांसभक्षणवर्ज्जनतरङ्गः॥

---

## अथ पशुहिंसाविधिनिषेधौ।

तत्र मनुः,—

यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा।
यज्ञस्य भूत्यै सर्व्वस्य तस्माद्यज्ञे वधोऽवधः॥

भूत्यै भरणाय। सर्व्वस्य देवादेः।

ओषध्यः पशवो वृक्षास्तिर्य्यञ्चः पक्षिणस्तथा।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः[1] पराः॥
मधुपर्क्के च सोमे च पितृदैवतकर्म्मणि।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः॥
एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद्द्विजः।
आत्मानञ्च पशूंश्चैव गमयत्युत्तमां गतिम्॥
या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे।
अहिंसामेव तां विद्याद् वेदाद्धर्म्मो हि निर्बभौ॥

तथा,— गृहे गुरावरण्ये वा निवसन्नात्मवान् द्विजः।
नावेदविहितां हिंसामापद्यपि समाचरेत्॥

१ (ग) प्राप्नुवन्ति स्थितीः।

कुर्य्यात् घृतपशुं सङ्गे कुर्य्यात् पिष्टपशुन्तथा ।
न त्वेव तु वृथा हन्तुं पशुमिच्छेत् कथञ्चन ॥
यावन्ति पशुरोमाणि तावत् कृत्वेव मारणम् ।
वृथापशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि ॥
योऽहिंसकानि भूतानि निहन्त्यात्महितेच्छया ।
स जीवंश्च मृतश्चैव न क्वचित् सुखमेधते ॥

गुरौ वसन् ब्रह्मचारी । गृहस्थश्च गृहे वसन् । अरण्ये वसन् वानप्रस्थः । अवेदविहितां भक्षणमात्रार्थमेव कृताम् । आपदि क्षुधादिक्लेशे प्राणात्ययसम्भावनायान्तु विहितत्वात् कर्त्तव्यैव हिंसा ।

घृतपशुं पशुकार्य्ये घृतम् । सङ्गे लोकाचारप्राप्तयज्ञादौ पशुवधप्रसङ्गे तत्र पशुं घृतं पिष्टं कुर्य्यादित्यर्थः ।

तथा,--

यो बन्धनवधक्लेशं प्राणिनां न चिकीर्षति ।
स सर्व्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते ॥
यद्ध्यायति यत् कुरुते रतिं बध्नाति यत्र च ।
तत्तदाप्नोति यत्नेन यो हिनस्ति न किञ्चन ॥

हारीतः,—

यथात्मनस्तथाऽन्येषां यो विद्वान् स्वस्तिमिच्छति ।
स सर्व्वलोकप्रवरे ब्रह्मलोके महीयते ॥

॥ इति गृहस्थरत्नाकरे पशुहिंसाविधिनिषेधतरङ्गः ॥

## अथ मद्यापेयत्वम्।

यमः,—

सुरा समलमन्नानां मांसानाञ्च मलं सुरा।

मलं हि सर्व्वभूतानां सुरा धर्म्मेषु कथ्यते॥

तस्माद्द्विजैर्न पेयैषा न च ग्राह्या कथञ्चन।

समलं मलमित्यर्थः। धर्म्मेषु धर्म्मशास्त्रेषु।

मनुः,—

सुरा वै मलमन्नानां पाप्मा च मलमुच्यते।

तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्॥

गौड़ी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा।

यथैवैका तथा सर्व्वा न पातव्या द्विजोत्तमैः॥

यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम्।

ब्राह्मणेन न चात्तव्यं देवानामश्नता हविः॥

अमेध्ये वा पतेन्मत्तोऽवैदिकं वाप्युदाहरेत्।

अकार्य्यमन्यत् कुर्य्याद्वि ब्राह्मणो मदमोहितः॥

यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत्।

तस्य व्यपैति ब्राह्मण्यं शूद्रत्वञ्च स गच्छति॥

गौड़ी गुड़ोद्भवा। माध्वी मधूद्भवा। पैष्टी पिष्टोद्भवा। अत्र मुख्या सुरा पैष्टी यथैका पैष्टी सुरा त्रिभिर्द्विजातिभिरपि न पातव्या तथान्याऽपि सर्व्वा द्विजोत्तमैर्ब्राह्मणैर्न पातव्या। मधूद्भवायान्तु सुरायां क्षत्रियवैश्ययोर्न पाने दोषः।

तथा च यमः,—

कामादपि हि राजन्यो वैश्यश्च सुसमाहितः ।
पिबेतां मधु तावत्तु न दोषं कश्चिदृच्छतः ॥ इति

हारीते तु द्विजोत्तमैरित्यत्र द्विजातिभिरिति यः पाठस्तत्र द्विजातिशब्दो ब्राह्मणपरः । तत् ब्राह्मणेन नात्तव्यमिति वाक्यशेषादिति लक्ष्मीधरः । यक्षरक्ष इति-यस्माद्यक्षरक्षःपिशाचानामिदमन्नं यत् मद्यादि तद्ब्राह्मणेन न भक्ष्यम् ।

विष्णुः,—

गौड़ी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्व्वा न स्पृष्टव्या द्विजातिभिः ॥
माध्वीकमैक्षवं टाङ्कं कौलं खर्ज्जूरपानसम् ।
मृद्वीकारसं माध्वीकं मैरेयं नारिकेलजम् ॥
अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य च ।
राजन्यश्चैव वैश्यश्च स्पृष्ट्वा चैतो न दुष्यति ॥

द्विजातिभिर्ब्राह्मणैः । माध्वीकं मधुकपुष्पप्रभवम् । ऐक्षवमिक्षुरसप्रभवम् । टाङ्कं कपित्थरसप्रभवम् । कौलं कोलिभवम् । (कोलिर्ब्बदरी) खर्ज्जूरं खर्ज्जूरफलभवम् । पानसं पनसफलभवम् । (पनसः कण्टकीफलं) मृद्वीकारसं द्राक्षाद्रवजम् । माध्वीकं मधुकार्य्यम् । मैरेयं धातुपुष्पम् गुड़धान्याम्बुसहितमिति शब्दार्णवे वाचस्पतिः ।

उशनाः,— मद्यमदेयमपेयमनिग्राह्यम् ।

अनिग्राह्यमस्पृश्यमवीक्ष्यम् ।

वर्ज्जयेदित्यनुवृत्तौ गोतमः—मद्यन्नित्यं ब्राह्मणः'।

बृहस्पतिः,—

सौत्रामण्यां तथा मद्यं श्रुतौ भक्ष्यमुदाहृतम्।

यमः,—

मद्यं पीत्वा तु यो विप्रो ब्रह्म व्याहरते क्वचित्।
घृताहुतिसहस्रेण न च किञ्चिदुपाश्नुते॥
ब्राह्मण्यमीहते यस्तु जायमानः पुनः पुनः।
न तेन मद्यं पातव्यं दातव्यञ्च न कस्यचित्॥

भक्ष्याभक्ष्यप्रकरणे देवलः—

अयातयामं रसवत् प्रत्यग्रं सुपरिस्रुतम्।
द्रव्यं द्रव्येषु धर्म्मज्ञैरेतन्मेध्यतमं स्मृतम्॥
सुरामरिष्टमैरेयं मधु माध्वीकमासवम्।
धान्याम्बु शुक्तवर्णञ्च न पेयं ब्राह्मणैर्द्विज॥

अयातयाममपरिभुक्तं रसवत् अच्युतरसं परिस्रुतं वस्त्रपूतम्। इत्यद्भूतमस्रुतमपि भोज्यम्।

अरिष्टः,—

मद्याधिकारिकद्रव्य खदिराद्यैर्विनिर्म्मितम्। आसवः सन्धानकं धान्याम्बु शुक्तजातम्॥

॥ इति गृहस्थरत्नाकरे मद्यापेयत्वतरङ्गः॥

## अथ भोजनोत्तरकर्म्म ।

तत्र दक्षः,—

भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् ।
इतिहासपुराणाद्यैः षष्ठ-सप्तमकौ नयेत् ॥

अष्टमे लोकयात्रा तु बहिः सन्ध्यामतः पुनः ।

सुखमास्थाय अन्नपरिणामानुकूलां स्थितिं विधाय ।

याज्ञवल्क्यः,—

उपास्य पश्चिमां सन्ध्यां हुत्वाग्नींस्तानुपास्य च ।
भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ संविशेत् ॥

तानग्नीनुपास्याराध्य संविशेत् शयीत ।

दक्षः,—

होमो भोजनकालस्य यच्चान्यद्गृहकृत्यकम् ।
कृत्वा चैव ततः पश्चात् स्वाध्यायं किञ्चिदाचरेत् ॥
प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पयेत् ॥

ध्रुवं प्रकृत्य ब्रह्मपुराणे,—

शिशुमारस्तु यः प्रोक्तः स ध्रुवो यत्र तिष्ठति ।
सन्निवेशञ्च तस्यापि शृणुष्व मुनिसत्तम ॥
यदह्ना कुरुते पापं दृष्ट्वा तं निशि मुच्यते ।
यावत्यश्चैव ताराश्च शिशुमाराश्रिता दिवि ॥
तावन्त्येव तु वर्षाणि जीवन्त्यभ्यधिकानि च ।

अभ्यधिकानि शतवर्षादिति शेषः ।

तथा,—

उत्तानपादस्तस्याथ विज्ञेयो ह्युत्तरो मनुः।
यज्ञो धरश्च विज्ञेयो धर्म्मो मूर्द्धानमाश्रितः॥
हृदि नारायणश्चान्ते अश्विनौ पूर्व्वपादयोः।
वरुणश्चार्य्यमा चैव पश्चिमे तस्य सक्थिनी॥
शिश्नः संवत्सरस्तस्य मित्रोऽपानं समाश्रितः।
पुच्छेऽग्निश्च महेन्द्रश्च कश्यपोऽथ ततो ध्रुवः॥
तारका शिशुमारस्य नास्तमेति चतुष्टयम्।

विष्णुः,—

नार्द्रपादः सुप्यान्नोत्तरशिराः[1]। न नग्नो नानुवंशे। नाकाशे न पालाशे शयने। न पञ्चदारुकृते। न गजभग्नकृते। न विद्युद्दग्धकृते। न भिन्ने। नाग्निप्लुष्टे। न घटसिक्तद्रुमजे। न श्मशानशून्यालयदेवतायतनेषु। न चपलमध्ये। न नारीमध्ये। न गोशकृताशनसुराणामुपरि। नोच्छिष्टो न दिवा स्वपेन्न सन्ध्ययोः। न भस्मनि देशे न चाशुचौ नार्द्रे। न च पर्व्वतमस्तके॥

अपरशिराः पश्चिमशिराः। वंशो गृहमूर्द्धन्यकाष्ठमित्र अनुवंशं वंशदैर्घ्यानुगमेन। आकाशे अनावृतदेशे पञ्चदारुकृते परस्परविजातीयपञ्चदारुकृते।

तदुक्तं वाराहेण,—

एकद्रुमेण धन्यं वृक्षद्वय-निर्म्मितञ्च धन्यतरं त्रिभिरात्मज-

[1] मूले नोत्तरापरावाक्शिराः।

वृद्धिकरं चतुर्भिरर्थो यशस्यायुष्यं पञ्चवनस्पतिरचिते पञ्चत्वं याति तत्र यः शेते । षट् सप्ताष्ट-तरूणां काष्ठघटिते कुल-विनाश इति ।

न चपलमध्ये शयनविरोधिचापल्यवतां मध्ये आर्द्रदेश इत्यनुषङ्गः ।

मार्कण्डेयपुराणे,—

नोदङ्मुखः स्वपेज्जन्तु र्न च प्रत्यक्‌शिरा नरः ।
शिरस्यगस्तिमाधाय शयीताऽथ पुरन्दरम् ॥
प्राक्‌शिरश्शयने विद्या धनमायुश्च दक्षिणे ।
पश्चिमे प्रबला चिन्ता हानिर्मृत्युस्तथोत्तरे ॥

उशनाः,—

न तैलेनाभ्यक्तशिराः शयीत ।

मनुः,—

नैकः सुप्याच्छून्यगृहे शयानं न प्रबोधयेत् ।

पैठीनसिः,—

न शीर्णायां खट्वायामुपविशेत् । नाद्वारेण प्रविशेत् । नादीक्षितः कृष्णचर्म्मणि सुप्यात् । न सन्धिवेलायां शयीत । नान्यपूर्व्वे । नानुवंशास्तीर्णे नाश्मपीठोपाधाने न तिर्य्यगुदक् प्रत्यक्‌शिराः । न नग्नो नाशुचिर्न चासने नोच्छिष्टे न प्रगे । नोच्चैर्निशायां भाषेत ।

अन्यपूर्व्वे पूर्व्वमन्योपभुक्ते प्रगे प्रातःकाले ।

सुप्यादित्यनुवृत्तौ ।

शङ्खलिखितौ,—

न विशीर्णखट्वायां नान्यवर्णोपसेवितायामनभ्युक्ष्य भूतयक्ष-ग्रहायतनेषु न श्मशानवल्मीक-महावृक्षच्छायासु न पर्व्वणि रभसोत्सवे वा।

पर्व्व प्रतिपत्पञ्चदश्योः सन्धिः। रभसोत्सवे हर्षोत्पादक-पुत्राद्युत्पत्तौ।

मनुः,—

ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा।
पर्व्ववर्ज्जं व्रजेदेनां तद्व्रतो रतिकाम्यया॥
ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोड़श स्मृताः।
चतुर्भिरितरैः सार्द्धमहोभिर्स्सद्विगर्हितैः[1]॥
तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या।
त्रयोदशी च शेषास्तु प्रशस्ता दशरात्रयः॥
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु।
तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम्॥
पुमान् पुंसोऽधिके शुक्रे स्त्री भवेदधिके स्त्रियः।
समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्य्ययः॥
[2]निन्द्यासु षट्स्वपि हि स्त्रियो रात्रिषु वर्ज्जयन्।
ब्रह्मचार्य्येव भवति यत्र तत्राश्रमे वसन्॥

ऋतुकालाभिगामीति—ऋतुः स्त्रीणां गर्भग्रहणयोग्यः समयः।

१ (ख) सद्विगर्हितैः।
२ क्वचित् निन्द्यास्वष्टासु चान्यासु।

तत्रावश्यं स्त्रीगमनमेव व्रतं यस्य स ऋतुकालाभिगामीत्यर्थः। व्रते इति सूत्रेण णिनिः पर्व्ववर्ज्जमिति ऋतावनृतावपि तद्व्रतो भार्य्यारतिगमनकाम्यया युक्तगमनव्रतः। एतच्च गमनं सर्व्वामाया रक्षणार्थम्। एकादशीत्यादिकं ऋतूपक्रमदिनादारभ्य। अयुग्मासु पञ्चम्यादिषु संविशेत् अभिगच्छेत्। समे स्त्रीपुंसयोस्तुल्ये शुक्रे। अपुमान्नपुंसकः पुंस्त्रियौ वेति द्वैधीभूते शुक्रे बोध्यव्यम्।

तथा च यमः,—

यदि संयोगकाले तु पुरुषो रागमोहितः।

द्विधा समुत्सृजेच्छुक्रं यमकन्तत्र जायते॥ इति

क्षीणे निःसारे अल्पे अल्पपरिणामे। विपर्य्ययो गर्भानुत्-पत्तिः। ब्रह्मचार्य्येव ब्रह्मचर्य्यसाध्यफलवानेव।

वृद्धशातातपः,—

ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतम्।

अनृतौ तु सदा कार्य्यं शौचं मूत्रपुरीषवत्॥

द्वावेतावशुची स्यातां दम्पती शयनङ्गतौ।

शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान्॥

शुचित्वं स्नानादिकं विनापि।

गोतमः,—

न मिथुनीभूय शौचं प्रति विलम्बेत।

पराशरः,—

ऋतुस्नातां तु यो भार्य्यां सन्निधौ नोपगच्छति।

स गच्छेन्नरकं घोरं ब्रह्महेति तथोच्यते॥

यमः,—

ऋतुस्नातां तु यो भार्य्यां सन्निधौ नोपगच्छति।
घोरायां ब्रह्महत्यायां पच्यते नात्र संशयः।
भार्य्यामृतुमुखे यस्तु सन्निधौ नोपगच्छति।
पितरस्तस्य तं मासं तस्मिन् रेतसि शेरते॥

देवलः,—

स्वदारांश्च ऋतुस्नातान् सुस्थश्चेन्नोपगच्छति।
भ्रूणहत्यामवाप्नोति गर्भम्प्राप्य विनाश्य सः॥

सुस्थो रोगादिशून्यः।

बौधायनः,—

त्रीणि वर्षाण्यृतुमतीं यो भार्य्यां नोपसर्पति।
स तुल्यं भ्रूणहत्याया दोषमृच्छत्यसंशयम्॥
ऋतौ नोपैति यो भार्य्यामनृतौ यश्च गच्छति।
तुल्यमाहुस्तयोर्द्दोषमयोनौ यश्च सिञ्चति॥
नोपगच्छेत् प्रमत्तोऽपि स्त्रियमार्त्तवदर्शने।
समाने शयने चैव न शयीत तया सह॥
रजसा विप्लुतां नारीं नरस्याभ्युपगच्छतः।
प्रज्ञा तेजो यशश्चक्षुरायुश्चैव प्रहीयते॥
तां विवर्ज्जयतस्तस्य रजसा समभिप्लुताम्।
प्रज्ञा(तेजो)लक्ष्मीर्यशश्चक्षुरायुश्चैव प्रवर्द्धते॥

देवलः,—

अशुद्धदिवसेष्वेतां मैथुनार्थं यदि व्रजेत्।
आयुः प्रज्ञा च धर्म्मश्च तस्य पुंसः प्रहीयते॥

तस्मात्त्रिरात्रं चाण्डालीं पुष्पितां परिवर्ज्जयेत् ।
अवेक्षेत च तां नित्यं रथ्याभस्मनिषेवणैः ॥

अवेक्षेत रक्षेत रथ्याभस्मनिषेवणैरित्यत्राध्याहृतौत्सुक्यशब्दयोगात् प्रसितोत्सुकाभ्याञ्चेति तृतीया तेन रथ्याभस्मनिषेवणेरौत्सुक्यं निवारयेदित्यर्थः ।

वशिष्ठः,—

न मलिनवाससा सह संविशेत् । न रजस्वलया नायोग्यया । अयोग्या अप्राप्ततारुण्या ।

गौतमः,—

नाकल्यां नारीमभिरमेत । न रजस्वलां न चैनां श्लिष्येत् । नाकल्याम् ।

अकल्यां रोगिणीं । न कन्यां श्लिष्येदित्यर्थः ।

आह्निकान्तरं शङ्खलिखितौ ।

ऋतुस्नातां तदहोरात्रं परिहरेत् । नार्त्तवे । न दिवामैथुनं व्रजेत् । क्लीबा अल्पवीर्य्याश्च दिवा प्रसूयन्ते अल्पायुषश्च । तस्मादेतद्वर्ज्जयेत् प्रजाकामः । पितृणां नेह वै तन्तुं विच्छिन्द्यात् प्रयतेताच्छेदाय येनाप्रतिष्ठः पतति तस्मात् प्रजाकामः प्रजया प्रतिष्ठेत ।

तन्तुःसन्तानः, अच्छेदाय सन्तानस्याविच्छेदाय न शब्दो निषेधाय अप्रतिष्ठः प्रजानुत्पत्त्याऽप्राप्तनिष्ठः पतति तस्मादुत्पत्त्यर्थं यतितव्यम् ।

याज्ञवल्क्यः,—

षोडशर्त्तुर्निशाः स्त्रीणां तासां[1] युग्मासु संविशेत् ।

१ क्वचित् तस्मिन् ।

ब्रह्मचार्य्येव पर्व्वाद्याश्चतस्रश्च विवर्ज्जयेत् ॥
एवं गच्छन् स्त्रियं चामां मघां मूलञ्च वर्ज्जयेत्।
सुस्थे इन्दौ सकृत् पुत्रं लक्षण्यं जनयेत् पुमान् ॥
यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्।

पर्व्वाणि-पौर्णमास्यमावास्याष्टमीचतुर्द्दशीरविसंक्रान्तयः। क्षामा अत्राल्पबला अक्षमता च यदि रजस्वलावृत्तेर्न भवति तथाप्याहारापकर्षेण कर्त्तव्या। सुस्थे बलवति। इन्दुग्रहणं शुभग्रहान्तरस्योपलक्षणम्। सकृत् एकस्यां रात्रौ एकवारं न वारान्तरं गच्छेदित्यर्थः।

तदुक्तमायुर्व्वेदे,—

वामशायी द्विभोजी च षण्मूत्री द्विःपुरीषकृत्।
सकृन्मैथुनकारी च। इत्यादि

तासामाद्याश्चतस्र इति मनूक्तं चतुर्थे आक्रमेदिति पैठीनस्यादिनिषेधो अपत्यस्याल्पायुष्ट्वदोषाज्ज एवञ्चापत्यदीर्घायुष्ट्वकामो यदि स्यात्तदा न चतुर्थ्यां गच्छेत्। अतत्कामश्चेद्गच्छेदिति व्यवस्था।

तदुक्तमापस्तम्बेन।

चतुर्थीप्रभृति उत्तरोत्तरां प्रजानिःश्रेयमार्थमिति।

विष्णुः,—

नाष्टमी-चतुर्द्दशीषु स्त्रियमुपेयात्। न श्राद्धं भुक्त्वा। न श्राद्धं दत्वा। नामन्त्रितः श्राद्धे। न व्रती। न दीक्षितः। न देवायतने। न श्मशानशून्यालयेषु। न वृक्षमूलेषु। न

दिवा । न सन्ध्ययोः । न मलिनां नाभ्यक्तां नाभ्यक्तो न रोगार्त्ताम् ।

न हीनाङ्गीं नाधिकाङ्गीं तथैव च वयोऽधिकाम् ।
नोपेयाद्गर्भिणीं भार्य्यां दीर्घमायुर्जिजीविषुः ॥

दीक्षितः दीक्षाख्यसंस्कारवान् । अवभृथेष्टिं यावत् । तत्र दीक्षोन्मोचनात् । रोगार्त्तां व्याधिपीड़िताम् । स्त्रियाः पुरुषस्य वा उपगमनजनितस्तु तत्सम्बद्धो वा रोगो विवक्षितः । वयोऽधिका अत्र उपरतरजस्का ।

मनुः,—

अमावस्यामष्टमीञ्च पौर्णमासीञ्चतुर्द्दशीम् ।
ब्रह्मचारी भवेन्नित्यमनृतौ स्नातको द्विजः ॥

वशिष्ठः,—

नातीर्थे उपेयात् । तीर्थमत्र योनिः ॥

अथोदाहरन्ति ।

यस्तु पाणिगृहीताया आस्ये कुर्व्वीत मैथुनम् ।
भवन्ति पितरस्तस्य मांसरेतोभुजः सदा ॥
या स्यादनभिचारेण रतिः सा धर्म्यमाश्रिता ।

अनभिचारो योन्यनतिक्रमः ।

अपि च काठके प्रवचने विज्ञायते—

अपि स्त्री विजनिष्यमानाः पतिभिः सह शयीरन् । इति स्त्रीणामिन्द्रदत्तो वरः ।

बौधायनः,—

यस्तु पाणिगृहीताया मुखे गच्छति मैथुनम् ।
तस्येह निष्कृतिर्नास्तीत्येवमाह प्रजापतिः ॥

पैठीनसिः,—

अयुग्मेनाचरतः स्त्री जायते युग्मे पुमान् भवति । संवृते देशे मैथुनमाचरेत् ॥ न प्रथमे न द्वितीये न तृतीये न चतुर्थे आचरेत् । दिवस इति शेषः ।

॥ इति सप्रक्रिय-महामान्धिविग्रहिकठक्कुर-वीरेश्वरात्मज-
सप्रक्रिय-महामान्धिविग्रहिकठक्कुर-श्रीचण्डेश्वरविरचिते
गृहस्थरत्नाकरे भोजनोत्तरकर्मतरङ्गः ॥

# अथ रजस्वलाधर्म्माः।

तत्र हारीतः,—

रजःप्राप्ता [१]चाधः शयीत न च देवकार्य्यं कुर्य्यात्।
भूमौ कार्ष्णायसे पात्रे मृण्मये वाश्नीयात्॥

रजःप्राप्ता रजःप्राप्तवती अधो भूमौ अस्पृश्यत्वादेव साक्षाद्देवकार्य्यनिषेधे सिद्धे—न च देवकार्य्यं कुर्य्यादित्यभिधानं तदक्षप्रेक्षणं तद्द्रव्यपुष्पनैवेद्यादिप्रत्यवेक्षणमपि न कुर्य्यादित्येतत्परम्। कार्ष्णायसमयःपात्रम्।

वशिष्ठः,—

त्रिरात्रं रजस्वलाऽशुचिर्भवति। सा नाञ्ज्यात्, नाप्सु स्नायात्, अधःशयीत, न दिवा सुप्यात्, नाग्निं स्पृशेत्। न खर्व्वेणापः पिवेत्। न रज्जुं प्रसृजेत्। न दन्तान् धावयेत्। न मांसमश्नीयात् न ग्रहान्निरीक्षेत्। न हसेत्। न किञ्चिदाचरेत्। नाञ्जलिना जलं पिवेत् न लोहितायसेन वा।

विज्ञायते हीन्द्रः त्रिशीर्षाणम् त्वाष्ट्रं हत्वा पाप्मना गृहीतमात्मानममन्यत। तं सर्व्वाणि भूतानि अभ्याक्रोशन् भ्रूणहन्निति। स स्त्रिय उपधावत्। अस्यै मे भ्रूणहत्यायै तृतीयं भागं प्रतिगृह्णीतेति। ता अब्रुवन् किं नो भूयादिति। सोऽब्रवीत् वरं वृणुध्वमिति। ता अब्रुवन् ऋतौ प्रजां विन्दामहै इति। कामं माविजनितः सम्भवामेति। तथेति ताः प्रतिजगृहुः[२]। सैषा

१ (ख) चेदधः। २ मूले अधिकः पाठः तृतीयं ब्रह्महत्यायाः।

ब्रह्महत्या मासि मास्याविर्भवति तस्माद्रजःस्वलाया अन्नं नाश्नी-
यात्। भ्रूणहत्याया एवैषा रूपं प्रतिमुच्यास्ते कञ्चुकमिव।

तदाहुः।

अभ्यञ्जनाभ्यञ्जनमेवास्या न प्रतिग्राह्यं तद्धि स्त्रिया अन्नमिति।
तस्मात्तस्यामन्नं न वीभत्सन्ते[1]। मैवं मेधमुपागमदिति।

उदक्याऽऽस्यामते येषां ये च केचिदनग्नयः।
[2]कुलञ्चाश्रोत्रियं येषां सर्व्वे ते शूद्रधर्म्मिणः॥

गृहानादित्यादीन् किञ्चिद्गृहलेपनाद्यपि। खर्व्वो वामहस्तः।
लोहितायसेन ताम्रपात्रेण। पाप्मना गृहीतममन्यत पापमसुद्रो-
ऽहमिति मतिं कृतवान्। आविजनितः सम्भवामेति आविजननादा-
प्रसवात् सम्भवाम मिथुनीभवामेत्यर्थः। आविजनित इति भाव-
लक्षणे इत्यादिना भावे तमन्प्रत्ययः। प्रतिमुच्यावध्य अञ्जमञ्जनम-
भ्यञ्जनञ्च। अञ्जनं मैथुनं स्नेहवद्द्रव्यलक्षणमास्यात्। अभ्यञ्जनमालि-
ङ्गनमञ्जनमभि तस्य वृत्तेः। न चैनां श्लिष्येदिति गोतमवचनात्।
अश्नीयात् उपभुञ्जीत भ्रूणहत्या ब्रह्महत्या यतस्तस्या अञ्जना-
भ्यञ्जनमेवान्नं तस्मात्तस्या ओदनादिरूपमन्नं न वीभत्सन्ते न
निन्दन्ति यद्यञ्जनाभ्यञ्जनमात्रे माऽशुचिस्तदा यज्ञचर्य्यायां
शुचिःस्यादित्यत आह मैवं मेधमुपागमदिति। मेधो यज्ञः।
मा एवं विधास्यती यज्ञं गच्छेदित्यर्थः। अस्यामते उपासनं
कुरुते।

१ मूले तस्यास्तत्र न, च मन्यन्ते।
२ (ख) गृहस्याः श्रोत्रियाः पापाः।

पैठीनसिः,—

अथ रजस्वलां परिहरेत्। त्वाष्ट्रं विश्वरूपं जघान वज्रेणेन्द्रः तं देवा भ्रूणहन्नित्यवदन्। स स्त्रिय उपाढधीत। अस्यै भ्रूणहत्यायै तृतीयं भागं प्रतिगृह्णीत वरं दास्यामि ततो अग्रं तृतीयं ब्रह्महत्यायाः स्त्रियः प्रपद्यन्ते एवं भूमिर्वनस्पतयश्चैकं तासां वरं तुष्टः प्रायच्छत्।

भूमेः स्थिरत्वं वृक्षाणां छिन्नप्ररोहणं स्त्रीणां सर्व्वकाले सम्भवस्तस्माद्रजस्वलां नोपासीत। ब्रह्महत्याप्रमुक्तां तां चतू-रात्रेण स्नातां सर्व्वकर्म्माणि कारयेत्।

सर्व्वकर्म्माणि दैवपित्र्यव्यतिरिक्तानि।

पुनः पैठीनसिः,—

त्रिरात्रं मलवद्वासो धार्य्यमाणा न स्नायात्। न भुञ्जीत नाञ्ज्यात् न नखान्निकृन्तेत्। नापमार्ज्जयेत्। न रज्जुं स्पृशेत्। न दन्तान् धावयेत्। न गन्धान् सेवेत। न प्रणीयात्। न खर्व्वेण पिबेत्। न पर्णेन न प्रयायिणी। न गोपीत्यं गवामिव जलादिपानम्।

अत्रैव तैत्तिरीयश्रुतिः,—

या मलवद्वासा भवति। यस्ततोऽभिजायते सोऽभिशस्तो यामरण्ये तस्यै स्तेनोपायं पराचीन्तस्यै हृतमुखो अप्रगर्भा या स्नाति तस्या अप्समारुका। या अभ्यङ्क्ते तस्यै दुश्चर्मा जायते। या प्रलिखति तस्यै खलतिरथ या नारी मांसं भुङ्क्ते तस्यै काणो जायते, या दन्तान् धावति तस्यै श्यावदन्तः। या नखानिकृन्तति

तस्यै कुनखी या कृणत्ति तस्यै क्लीवः। या रज्जुं सृजति तस्या उद्बन्धुकः? । या पर्णेन पिबति तस्यै उन्मत्तकः। या खर्व्वेण पिबति तस्याः खर्व्वः। तिस्रो रात्रीर्व्रतञ्चरेत् अञ्जलिना पिबेत्। खर्व्वेण पात्रेण प्रजायै गोपीत्यायति॥

॥ इति गृहस्थरत्नाकरे रजस्वलाधर्म्मतरङ्गः॥

---

## अथ पर्व्वकृत्यानि।

तत्र मनुः,—

सावित्रान् शान्तिहोमांश्च कुर्य्यात् पर्व्वसु नित्यशः।
पितृंश्चैवाष्टकास्सर्व्वे नित्यमन्वष्टकासु च॥

सावित्राः सवितृदेवताकाः ते च गायत्र्याऽऽज्यद्रव्येण च कार्य्याः।

शान्तिकामस्तु जुहुयात् गायत्रीमयतः शुचिः।

इति शङ्खवचनात्।

धर्म्मद्वारा ऐहिकानिष्टनिवृत्तिः शान्तिः। पर्व्वसु चतुर्द्दश्यादिषु। नित्यग्रहणात् पर्व्वस्ववश्यकर्त्तव्यता प्रतीयते।

विष्णुः,

पर्व्वणि होमान् कुर्व्वीत। न तृणमपि छिन्द्यात्। अलङ्कृतस्तिष्ठेत्। एवमाचारसेवी स्यात्।

छिन्द्यात् हिंस्यात्।

आपस्तम्बः,—

दिवादित्यः सत्त्वानि गोपायति नक्तञ्चन्द्रमाः। तस्मादमावस्यायां निशायां स्वाधीय आत्मनो[१] गुप्तिमिच्छेत् प्रायत्येन ब्रह्मचर्य्येण काले चर्य्यया च सह एतां रात्रिं सूर्य्याचन्द्रमसौ वसतः।

स्वाधीयो भृशतरं गुप्तिं रक्षां प्रायत्येन अप्रायत्यनिमित्त दृष्टासु रथ्योपसर्ज्जनवर्ज्जनादिना सम्यक् शौचाचमननिष्पादनेन। एवं ब्रह्मचर्य्येण काले चर्य्यया मुख्यकालत्रयप्रातरादौ तत्तत्कर्म्मकरणेन॥

छन्दोगपरिशिष्टे कात्यायनः,—

पौर्णमासीममावस्यामधःस्वापो विधीयते।
अनाहिताग्नेरप्येष पश्चादग्नेर्विधीयते॥

अनाहिताग्निरत्र स्मार्त्ताग्निमान्।

बौधायनः,— पर्व्वसु च नाधीयीत न स्त्रीमुपेयात्। पर्व्वसु रक्षःपिशाचान्यभिचारवन्ति भवन्तीति।

पैठीनसिः,—

न पर्व्वसु तैलं क्षुरं मैथुनं मांसमुपेयात्। नामावस्यायां तृणानि छिन्द्यात्।

उपेयादुपभुञ्जीत।

वामनपुराणे,

छिनत्ति वीरुधो यस्तु वीरुत्संस्थे निशाकरे।
पत्रं वा पातयत्येकं ब्रह्महत्यां स विन्दति॥

१ (ख) सुधीरात्मनो।

वीरुत्संस्थे वनस्पतिसंस्थे ।

यमः,—

आमसप्तमं कुलं हन्ति शिरोऽभ्यङ्गे चतुर्द्दशी ।
मांसाशने पञ्चदशी कामधर्म्मे तथाऽष्टमी ॥

वृद्धशातातपः,—

दन्तकाष्ठममावस्या मैथुनञ्च चतुर्द्दशी ।
हन्ति सप्तकुलन्तस्य तैलग्रहणमष्टमी ॥
षष्ठ्यष्टमी पञ्चदशी उभौ पक्षौ चतुर्द्दशी ।
अत्र सन्निहितं पापं तैले मांसे क्षुरे भगे ॥
षष्ठ्यां तैलमनायुष्यमष्टम्यां पिशितन्तथा ।
क्षौरकर्म्म चतुर्द्दश्यां तथा पर्व्वणि मैथुनम् ॥

सर्व्वपर्व्वसु षष्ठ्याञ्च सामान्येनैव सर्व्वतैलादिप्रतिषेधे सिद्धे तत्तत्तिथिविशेषसम्बन्धेन तैलादिविशेषनिषेधो दोषविशेषार्थः ।

देवलः,—

पञ्चदश्याञ्चतुर्द्दश्यामष्टम्याञ्च विशारदः ।
तैलं मांसं व्यवायञ्च क्षुरकर्म्म विवर्ज्जयेत ॥

अत्र च षष्ठ्यादिशब्देन तिथिवाचिना तत्तदवच्छिन्नकाल इति प्रतिपादनात् यावत् षष्ठ्यादितिथिकालमेव मांसादिनिषेधः । न तु तदुपलक्षिते अहोरात्रे, उपलक्षणपरत्वे प्रमाणाभावात् । अतएव देवपितृमनुष्ययोः पूर्व्वापराह्णयोर्विहितत्वात् तत्कालव्याप्यतिथिसमादरः ।

विष्णुपुराणे,—

चतुर्द्दश्यष्टमी चैव अमावस्याऽथ[१] पूर्णिमा ।
पर्व्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥
तैलस्त्रीमांससम्भोगी पर्व्वस्वेतेषु वै पुमान् ।
विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः ॥
अशेषपर्व्वस्वेतेषु तस्मात् संयमिभिर्नरैः ।
भाव्यं सच्छास्त्रदेवेज्याध्यान-जप्य-परायणैः ॥

वराहपुराणे,—

वैष्णवं प्रकृत्य वराह उवाच ।

षष्ठी चाष्टम्यमावास्या उभे पक्षे चतुर्द्दशी ।
मैथुनं नैव सेवेत द्वादशीञ्च मम प्रियाम् ॥
अष्टम्याञ्च चतुर्द्दश्यां षष्ठ्याञ्च द्वादशीन्तथा ।
अमावस्याञ्चतुर्थ्याञ्च मैथुनं योऽधिगच्छति ।
तिर्य्यग्योनिं स गच्छेत मम लोक न गच्छति ॥

तथा चाण्डालशपथे,—

षष्ठ्यष्टम्यमावास्या उभौ पक्षौ चतुर्द्दशी ।
अस्नातानां गतिं [२]गच्छे यद्यहं नागमे पुनः ॥

भविष्ये,—

सप्तम्यां स्पृशतस्तैलमिष्टा भार्य्या विनश्यति ।

१ (ख) अपि । २ (ग) यास्ये ।

मनुः,—

अमावास्यामष्टमीञ्च पौर्णमासीञ्चतुर्द्दशीम्।
ब्रह्मचारी भवेत्तावत् प्रत्यहं स्नातको द्विजः॥

वामनपुराणे,—

नन्दासु नाभ्यङ्गमुपाचरेच्च
क्षौरञ्च रिक्तासु जयासु मांसम्।
पूर्णासु योषित् परिवर्ज्जनीया
शेषासु सर्व्वाणि समारभेत॥
नाभ्यङ्गमर्क्के न च भूमिपुत्रे
क्षौरञ्च शुक्रेऽथ कुजे च मांसम्।
बुधे च योषां न समाक्रमेत
शेषेषु सर्व्वाणि सदैव कुर्य्यात्॥
चित्रासु हस्ते श्रवणे च तैलम्
क्षौरं विशाखा-प्रतिपत्सु वर्ज्ज्यम।
मूले मृगे भाद्रपदे च मांसं
योषिन्मघा कृत्तिक सोत्तरासु[1]॥

॥ इति गृहस्थरत्नाकरे पर्व्वकृत्यतरङ्गः॥

---

१ (ग) कृत्तिकयोत्तरासु।

## अथ ब्राह्मणकर्म्म-धर्म्म-वृत्तयः ।

तत्र मनुः,—

एतत् वोऽभिहितं कृत्स्नं विधानं पाञ्चयज्ञिकम् ।
द्विजातिमुख्यवृत्तीनां विधानं श्रूयतामिह ॥

हारीतः,—

अध्यापयेदधीयीत याजयेत यजेत वा ।
प्रतिगृह्णीयाद्दद्याच्च षट्कर्म्मा ब्राह्मणः स्मृतः ॥
याजनाध्यापनादिभ्यस्तथा दानप्रतिग्रहैः ।
विराजः स्वर्गमायाति विमानैः महितो द्विजः ॥

विराजत इति विराजः शोभमान इति यावत् ।

मनुः,—

अध्यापनमध्ययनं यजनं याजनन्तथा ।
दानं प्रतिग्रहश्चैव षट् कर्म्माण्यग्रजन्मनः ॥
षण्णान्तु कर्म्मणामस्य[१] त्रीणि कर्म्माणि जीविका ।
याजनाध्यापनञ्चैव विशुद्धाच्च प्रतिग्रहः ॥

जीविका वृत्त्युपायः । विशुद्धोऽत्र यत्प्रतिग्रहे प्रतिग्रहीतुः प्रायश्चित्तं नोक्तम् ।

वृत्त्यधिकारे आपस्तम्बः,—

दायाद्यं शिलोञ्छौ चान्यच्चापरिगृहीतम् ।

दायमादत्त इति दायादः पुत्रादिस्तस्य कर्म्म । दायो धनग्रहणमपरिगृहीतमस्वामिकं नीवारादि ।

१ (ग) सन्ति ।

हारीतः,—

द्विविधमपि गृहस्थं प्राहुः शालीनं यायावरञ्च। शालीनात् पुण्यतरो यायावरः श्रेयान्। सर्व्वावस्थासु बह्व्योऽस्य शाला इति शालीनः शालावानिति वा शालीनः शालायामात्मवृत्तिभिर्लीनः शालीनः। स द्विविधो गृह्यशालीनस्त्रेताशालीनश्चेति।

गृह्यशालीनो जातपुत्रायाधानं संवत्सराद्वा शुश्रूषावान्। स एव द्विविधः सम्पन्नवृत्तिरसम्पन्नवृत्तिश्चेति। तयोरसम्पन्नवृत्तिः श्रेयान् स व्याख्यातः। सम्पन्नवृत्ति[1] र्याजनवृत्तिः कृषिवृत्तिश्च।

गृह्यशालीनो गृह्यशालावान्। त्रेताशालीनो गार्हपत्याग्नित्रयवान्। जातपुत्रायाधानं संस्कुर्य्युरिति शेषः। जातपुत्रायाधानमित्यत्र पुत्रशब्दः प्रथमाबहुवचनान्तः। शाकल्यमतानाश्रयणेन यकारस्यालोपः संवत्सराद्वा शुश्रूषावान् इति।

यः शुश्रूषावान् गृह्याग्निपरिचरणवान् भवति संवत्सरादूर्द्धमाधानं कुर्य्यादित्यर्थ। तयोरसम्पन्नवृत्तिः समाख्यात इति सद्यः कृताधानोऽसम्पन्नवृत्तिः शिलोञ्छादिवृत्तिः। सम्पन्नवृत्तिर्व्याख्यातः। योऽयं सम्पन्नवृत्तिर्द्वारानाहृत्याग्नीनाधायेत्यादिना कथित.।

पुनर्हारीतः,—

ऋतामृतोपहत सम्पन्नवृत्त्यापत्षड्वृत्तयो भवन्ति। ऋतमुञ्छशीलं भैक्ष्यममृतमयाचितोपपन्नाभ्यामध्यापनादिति उपहतवृत्तिः सम्पन्नवृत्तिः सद्यो याचितम। आपद्वृत्तिः कृषिः। आसां पूर्व्वाः श्रेयस्यो भवन्ति। अध्यापनादिति च विहितवृत्तिलक्षणम्॥

[1] (ग) सम्पन्निः।

मनुः,—

अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥
यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्म्मभिरगर्हितैः ।
अक्लेशेन शरीरस्य कुर्व्वीत धनसञ्चयम् ॥
ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा ।
सत्यानृताभ्यामपि वा[1] न श्ववृत्त्या कथञ्चन ॥
ऋतमुञ्छशीलं ज्ञेयममृतं स्यादयाचितम् ।
मृतन्तु याचितं भैक्ष्यं प्रमृतं कर्षणं स्मृतम् ॥
सत्यानृतन्तु वाणिज्यं तेन चैवापि जीव्यते ।
सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्ज्जयेत् ॥

उञ्छशीलमिति समाहारे द्वन्द्वः । उञ्छः खलक्षेत्रगतस्वाम्यौदास्यविषयफलस्योच्चयनम्, शीलः स्वाम्यौदास्यविषयकर्षितक्षेत्रशस्यमञ्जरीहरणम्, भैक्ष्यशब्दोऽसिद्धान्नभिक्षापरः सिद्धान्नभिक्षाया गृहस्थमधिकृत्य निषेधात् ।

तथा चाङ्गिराः,—

अनापदि चरेद्यस्तु सिद्धां भिक्षां गृहे वसन् ।
दशरात्रं पिबेदन्नमापत्काले त्र्यहं द्विजः ॥ इति

वचनं हृतं, द्रोहोऽत्र न मारणं किन्तु पीडामात्रम् । अन्यैस्त्वल्पद्रोहेणैवेत्येव पठितं तत्राप्ययमेवार्थः । यात्रा प्राणवृत्तिः, मात्रशब्दो भोगार्थमन्नदानव्यवच्छेदपरः ।

[1] क्वचित् सत्यानृताख्यया वापि ।

ऋतादित्यनुवृत्तौ यमः,—

आद्यास्तस्रः श्रेष्ठाः स्युर्ब्राह्मणानाञ्च वृत्तयः।

ब्राह्मणस्येत्यनुवृत्तौ गोतमः,—

कृषि—वाणिज्ये चास्वयंकृते कुशीदञ्चेति।

न दोषायेति शेषः। कुशीदं वृद्ध्यर्थं धनप्रयोगः। पृथगग्रहणमापत्सु स्वयंकृतस्याभ्यनुज्ञानार्थम्। कुशीदवृत्तिर्धर्म्येति प्रदेशान्तरेऽभिधानात्।

बृहस्पतिः,—

कुशीद कृषि वाणिज्यं प्रकुर्व्वीतास्वयंकृतम्।

आपत्काले स्वयं कुर्व्वन्नैनसा युज्यते द्विजः॥

हारीतः,—

अग्नीनाधायोञ्छशिलाभ्यामयाचितोपपन्नं साधुभ्यो याचनात्।

सद्भ्यो वा याचनाद्देवमनुष्यातिथिभ्योऽन्नादानं कुर्व्वते।

साधवो निर्द्दोषमात्राः। सन्तो विद्वांसः।

पैठीनसिः,—

अथ गृहस्थधर्म्मांश्चरिष्यन्नलोपेन धर्म्मस्य वृत्तिमुपाददीत।

मनुः,—

कुशूलधान्यको वा स्यात् कुम्भीधान्यक एव वा।

त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा॥

चतुर्णामपि चैतेषां द्विजानां गृहमेधिनाम्।

ज्यायान् परः परो ज्ञेयो धर्म्मतो लोकजित्तमः॥

षट्कर्म्मैको भवत्येषां त्रिभिरन्यः प्रवर्त्तते।

[1]द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥

कुशूलधान्यकः उष्ट्रिकापरिमितधान्यवान्। कुम्भी कलशी त्र्यहैहिक इति ईहा चेष्टा तस्याम्भवमैहिकं धान्यं त्र्यह त्र्यहगमकमैहिकं यस्य तथोक्तः। श्वोभवं श्वस्तनमन्न-न्नदस्यास्तीति श्वस्तनिकः सद्यः प्रचालनवृत्तिरित्यर्थः।

अश्वस्तनिकापेचया त्र्यहैहिक त्रैगुण्यदर्शनात्तदव्यवहितकुशूल-धान्य-कुम्भीधान्ययोस्तदव्यवहितषड्द्वादशाब्दपर्य्यन्तेन (?) धान्य-मादाय परिमाणं बोध्यम्। अयञ्च वृत्तिविशेषपरिग्रहो धर्म्मातिशयार्थं गृहस्थमात्रविषयो न यायावरविषयः। अनन्तरमेव चतुर्णामुत्तरोत्तरश्रेष्ठतामुक्ता षट्कर्म्मको भवत्येषामित्युक्तः। (षडवृत्तयः)[2] कृषिवाणिज्यान्तर्भावेण, पूर्व्वोक्तोञ्छादीनां वृत्तित्याग मानाभावात्।

न च वाणिज्यं यायावरत्वं पुरस्कृत्य विहितं षट्कर्म्मको भवतीत्यादि, षट्कर्म्माण्युञ्छशिलयाचितायाचितकृषिवाणिज्य-रूपाणि। त्रिभिरुञ्छशिलायाचितैः। द्वाभ्यामुञ्छशिलाभ्यां ब्रह्मसत्रेण उञ्छेन, ब्रह्मसत्रशब्दस्तु ब्राह्मणानां सततत्राणकारित्वेन उञ्छे प्रवर्त्तते।

याज्ञवल्क्य-विश्वामित्रौ,—

कुशूल-कुम्भीधान्यो वा त्र्यहिकोऽश्वस्तनोऽपि वा।
जीवेद्वाऽपि शिलोञ्छेन श्रेयानेषां परःपरः॥

१ (ग) त्र्यायात्मक।
२ (क) (ख) पुस्तके ( ) चिह्नितांशः पतितः।

हारीतः,—

शालीनादात्मवृत्तियापनाद्दर इति यायावरः। दश दश रात्रीर्वसन् प्रयातीति यायावरः। परास्वष्टसु वृत्तिषु वरया आत्मानं यापयतीति यायावरः। स द्विविधः। कृतप्रस्थानो-ऽकृतप्रस्थानश्चेति।

यस्य विधिवद्वापनं कृत्वाग्नेय्यां प्रातरुदिते वैश्वानर्य्येष्ट्या मन्त्रतो दिग्द्रव्यादीनि प्रतिष्ठापयन्ति स कृतप्रस्थानः। अथ यस्य विधिवद्वापनं कृत्वाग्नेय्यां प्रातरुदिते वैश्वदेव्येष्ट्या दिग्द्रव्यादि मन्त्रतो न प्रवर्त्तयन्ति सोऽकृतप्रस्थानः।

ब्रह्मवदस्य ऋषित्वं सम्पद्यते स प्रथमेष्ट्या एनसो विमुच्यते। द्वितीयया देवेभ्यः प्रकाशः समानलोकश्च भवति। तृतीयया ब्रह्मर्षित्वं सम्पद्यते तस्माद्ब्रह्मणि स्थितो नामन्त्रतः शयनासना-हारविहारोत्थानदानोपप्रदानः स्यात्।

तस्य पर्व्वसु वपनञ्चाग्निपरिचरणञ्च स्वयं होमोपस्थानञ्चोपधृत्य गार्हपत्याय निवेदनं यथोक्तानां बलिहोमानां करणं स्वाश्रय-विशेषाणामख्यापनं धर्म्मोपरोधिनामर्थानां वर्ज्जनम्।

अथाष्टौ वृत्तयो भवन्ति,—

उञ्छ-शिलाऽयाचितोपपन्न—सन्दर्शन— वभुस्कन्धः कुद्दाल-कपोतौ चेति। एतासामेकतमया वृत्त्या परयाऽवरया वा यत्र यथा वर्त्तनं तया यापयेत्। अयोनिः काण्डलस्थानं गोस्थान धान्यकरणलवणमिति— पञ्चोञ्छस्थानानि। लूनं शीर्णमननुज्ञात शिलमित्याहुः।

ब्राह्मणक्षत्त्रियविड्भ्योऽयाचितोपपन्नानां शूद्रेभ्योऽप्येके। आपदि मन्दर्गयन्नात्मार्थं गृह्णीयात्। मन्दर्गी भिक्षेतेत्येवमुदाहरन्ति।

पर्णाग्निखया पश्च मीता वाहयेदभुस्कन्ध आकालात्। कुद्दाली राज्ञो भागं दद्यादन्यत्र जगतीपतेः। अन्नविशेषेभ्यो वृत्त्युपपत्तौ सोमेनेष्ट्वाऽग्निं चित्वा सर्व्वस्वं दत्त्वाङ्गुष्ठानामिके संयम्य ग्रीवायामासज्य कपोतवदेकैकं गृह्णीयाद्भिन्नाद्भिन्नवृत्तिरित्येके इति तु ताभि र्वृत्तिभिराहृत्य पूर्व्ववत् कुर्य्यात्।

षण्मासान् कृच्छ्रान् प्रत्याहृतात्मा यमनियमानिति यायावरः। परं ब्रह्मामृतमाप्नोति यद्गत्वा नेह जायते। आत्मवृत्तियापना-दित्यत्र यापनं सङ्कोचः।

अष्टवृत्तयोऽत्रैवाग्रे वापनं आग्नेयी चेष्टिः पूर्व्वदिने कार्य्या। प्रातरुदिते तु वैश्वानर्य्या इष्ट्वा इमां दिशं व्रज इदं द्रव्यं यवान् व्रीहीन् वा आहरेति।

यस्य दिग्द्रव्यादीनि प्रतिष्ठापयन्ति ऋत्विजः स कृतप्रस्थानः। अकृतप्रस्थानस्तु यस्य पूर्व्ववद्वापनादि कारयित्वा प्रातरुदिते वैश्वदेवेष्ट्वा अस्यां दिशि तिष्ठ इदं द्रव्यमहार्य्यन्त्वेतदिति दिग्द्रव्यादीनि प्रवर्त्तयन्ति आदिशन्ति ऋत्विजः।

प्रथमा इष्टिराग्नेयी द्वितीया वैश्वानरी तृतीया वैश्वदेवी देवेभ्यः सकाशात् प्रकाशत इति प्रकाशो द्योतमान इति यावत्।

नामन्त्रतः शयनासनादिति न मन्त्रं विना द्वितीयार्थे तसिः। उपप्रदानं प्रतिग्रहः तस्य पर्व्वस्विति यद्यप्याहिताग्नितया वपनादीनि लब्धानि तथापि तेषां पुनरुक्तिर्नियमार्था।

गार्हपत्यनिवेदनं त्वप्राप्तमेवास्येति विधीयते आश्रमविशेषा यायावरत्वादयः। एकतमयेति वृत्तिसङ्करनिषेधात्। यापयेत् गमयेत् समयमिति शेषः। गोस्थानं यत्र गोभ्यो यवादि दीयते। धान्यकरणं खलं, लवणं चेत्रमधिकरणव्युत्पत्त्या। अनुज्ञातमिह स्वाम्युपेक्षितं सन्दर्शयन्नात्मार्थे गृह्णीयादिति निकटस्थे स्वामिनि तदुपेक्षितमपि धान्यादि सन्दर्शयन्नेव गृह्णीयादित्यर्थः।

आत्मार्थं वर्त्तनार्थं न तु भोगार्थं सञ्चयार्थं वा। सन्दर्शी भिक्षेतेति सन्दर्शद्वारैव भिक्षां कुर्य्यात् न तु वाचेति। बभ्रु-स्कन्धवृत्तिमाह पर्णशाखयेत्यादि पर्णः पलाशः तच्छाखया पञ्च सीता लाङ्गलपद्धतीर्वाहयेत्। बभ्रुस्कन्धो बभ्रुवर्णवृषस्कन्ध-च्छायः, आकालाद्यावद्बीजवपनकालं, केचिच्चतुर्विंशतिसीता इति पठन्ति।

कुद्दालीवृत्तिमाह कुद्दालीति। कपोतीमाह अन्नविशेषस्य इत्यादि अयाचितादिलाभेनान्नादिविशेषातिरेके सति सोम यागादि कृत्वा उक्तप्रकारां कपोतीमनुतिष्ठेत् शीतायामामन्य प्रसेचिकादिपात्रमिति शेषः।

भिक्षाद्भिन्नवृत्तिरित्येके कापोत्ये च भिक्षादिदीर्णाद् द्रोण्यादे-र्यदेकैकबीजादानं सा भिन्नवृत्तिरित्येके मन्यन्ते। तेनात्रापि सर्व्वस्वदानादीतिकर्त्तव्यता। तस्या एव वृत्तेः कपोतीत्वात्। अतएवाष्टम्यास्तदनन्तरमभिधानं पूर्व्ववत् कुर्य्यात्।

गार्हपत्यनिवेदनादिषण्मासान् कृच्छ्रानित्यनुषङ्गः। कृच्छ्राः

१ (ग) गोण्यादेः।

प्राजापत्या विशेषानुपादानात्। प्रत्याहृतात्मा यमनियमान् कुर्य्यादित्यनुषङ्गः। प्रत्याहृतात्मा च प्रत्याहृतो विषयेभ्यो निवर्त्तित आत्मा येन स तथोक्तः।

बौधायनः,—

अथ शालीन यायावरचक्रचरधर्म्माकाङ्क्षिणां नवभिर्वृत्तिभिर्वर्त्तमानानां तेषां तद्वर्त्तनाद्वृत्तिरित्युच्यते। शालाश्रयत्वात् शालीनत्वम्। अनुक्रमणाचरणाच्चक्रचरत्वं। वृत्त्या वरया यातीति यायावरत्वं। ता अनुव्याख्यास्यामः।

षण्णिवर्त्तनी कौद्दाली ध्रुवा संप्रक्षालनी समूहा पाल(लि)नी शिलोञ्छा कापोती सिद्धेच्छेति नवैताः। तासामेवाऽन्यापि दशमीवृत्तिर्भवत्यानवमवृत्तेः।

केशश्मश्रुलोमनखानि वापयित्वोपकल्पयते। कृष्णाजिनं कमण्डलुं यष्टिं वीव(रु)धं कुशाहार[1]मिति तैत्तिरीयेणेष्ट्वा प्रस्थास्यति वैश्वानर्य्या वा।

अथ प्रातरुदिते आदित्ये यथासूत्रमग्निं प्रज्वाल्य गार्हपत्यमाज्यं विलाप्योत्पूय स्रुक्स्रुवं गृहीत्वा आहवनीये वास्तोष्पत्यं जुहोति। वास्तोष्पते प्रतिजानीहि अस्मानित्यमनूद्य[2] वास्तोष्पते समया संसदा त इति याज्यया जुहोति सर्व्व एवाहिताग्निरित्येके।

निर्गत्य ग्रामान्ते ग्रामसीमान्ते वाऽवतिष्ठते। तत्र कुटीं मठं वा करोति कृत्वा प्रविशति कृष्णाजिनादीनामुपक्लृप्तानां यस्मिन् यस्मिन्नर्थे येन यत् प्रयोजनं तेन तत् कुर्य्यात्।

१ मूले कुशपहारं। २ क्वचित् इति पशोऽनुवाक्यामनूद्य।

प्रसिद्धमग्नीनां चरणं सिद्धं दर्शपौर्णमासाभ्यां यजनं प्रसिद्ध-माग्रयणं, प्रसिद्धः पशूनां महायज्ञानामनुप्रयोग उत्पन्नानामोष-धीनां 'निर्व्वापणं दृष्टम्भवति विश्वेभ्यो देवेभ्यो जुष्टं निर्व्वपामीति वा तुष्णीं वा यथैता अद्भिः प्रोक्षति विश्वेभ्यो देवेभ्यो जुष्टं प्रोक्षा-मीति तुष्णीं वा ताः संस्कृत्य साधयन्ति[1](ति)।

तस्याध्यापन-याजनप्रतिग्रहा निवर्त्तन्ते अन्ये च यज्ञक्रतव इति। हविष्यस्त्वरेद्व्रतोपायनीयं दृष्टं भवति। तद्यथा सर्पिर्मिश्रं दधिमिश्रमक्षारलवणमपर्य्युषितं ब्रह्मचर्य्यमृतौ वा गच्छति पर्व्वणि पर्व्वणि केशश्मश्रुरोमनखवापनं शौचविधिश्च।

॥ इति गृहस्थरत्नाकरे ब्राह्मणकर्म्म धर्म्मवृत्तिः ॥

## अथापद्वृत्तिः।

तत्र मनुः,—

शिलोञ्छमप्याददीत विप्रो जीवन् यतस्ततः।
प्रतिग्रहाच्छिलः श्रेयान् ततोऽप्युञ्छः प्रवर्त्तते॥

मुख्यया वृत्त्या जीवनाभावे यतस्ततो, अपकृष्टादपि शिलोञ्छा-वाददीत। न तु प्रतिग्रहात्। तस्मात् प्रतिग्रहात् शिलोञ्छौ श्रेष्ठौ तयोरपि चाभावे प्रतिग्रहः। तथा स्वधर्म्मो वर विगुणो न पारक्योऽनुष्ठितः।

परधर्म्मेण जीवन् हि सद्यः पतति जातितः।

[1] क्वचित् धारयन्ति।

शङ्खलिखितौ,— तस्य स्वधर्म्म एव श्रेयान् अन्योऽप्यनुष्ठितो नावरसेवितो यद्यन्यसेवी हि ब्राह्मणो जघन्येषु प्रवर्त्तत इति। तस्मात् प्रशस्तसमयाचारः सर्व्वतस्तु प्रतिगृह्णीयात्। नात्मनस्ततो वृत्तिमिच्छेत् कामं त्रयाणां वर्णानां याजनं कुर्व्वीत धर्म्मेण तेभ्यो वृत्तिमादाय धर्म्मकृत्येषूपहरेत्।

तस्य ब्राह्मणस्य स्वधर्म्मः स्ववृत्तिः शिलोञ्छप्रतिग्रहादिः। अन्योऽपि यथाकथञ्चिदनुष्ठितोऽपि। अवरः क्षत्रियादिः। प्रशस्त-समयाचारः प्रशस्ताः शिष्टाः समयः सिद्धान्तः, आचरतीत्या-चारः तेन शिष्टसिद्धान्ताचारकर्त्तेत्यर्थः। सर्व्वतः शूद्रादेरपि प्रतिगृह्णीयात्। अन्यकृत्यापेक्षया शूद्रप्रतिग्रहस्यापि कथितत्वात्। ततः शूद्रादिप्रतिग्रहेण वृत्तिं भोगं तेन जीवनमात्रार्थं तत्कार्य्यं न तु भोगार्थमिति। धर्म्मेण शास्त्रतः।

मनुः,—

> अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्म्मणा।
> जीवेत् क्षत्रियधर्म्मेण स ह्यस्य प्रत्यनन्तरः॥
> उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्।
> कृषिगोरक्षमादाय जीवेद्वैश्यस्य जीविकाम्॥

यथोक्तेनाध्यापनयाजनादिना। क्षत्रधर्म्मेण प्रजादिरक्षणेन प्रत्य-नन्तरोऽनन्तर एव हिशब्दस्त्वेव हेतुत्वद्योतनाय तेनामापद्वृत्ति-कालेऽपि अन्तरितवृत्तिर्दोषायैवेत्युक्तं भवति। उभाभ्यां स्व-क्षत्रिय-वृत्तिभ्यां कृषिगोरक्षमिति वैश्यवृत्तिप्रदर्शनार्थं तेन वाणिज्यमपि ग्राह्यम्।

जीविकामिति अग्निहोत्रं जुहोतीतिवत् प्रत्यवायाभावापेक्षया कर्म्मत्वं। कृषिस्त्वात्र स्वयंकृताऽनुज्ञायते। स्वकीयाया अनाप-द्वृत्तित्वज्ञानात्।

अत्यापत्काले ब्राह्मणस्येत्यनुवृत्तौ—

गोतमः,—

याजनाध्यापनप्रतिग्रहाः सर्व्वेषाम्। पूर्व्वः पूर्व्वो गुरुः। तदभावे क्षत्रियवृत्तिः। तदलाभे वैश्यवृत्तिः। सर्व्वेषाम-प्रशस्तानामपि॥

वशिष्ठः,—

कामं वा स्वयं कृष्योत्पाद्य तिलान् विक्रीरन्। नत्व-याज्ययाजनं प्रतिनिषिद्ध-प्रतिग्रहोऽस्तीति।

अथाप्युदाहरन्ति—

अग्नय इव दीप्यन्ते जपहोमैर्द्विजोत्तमाः।

प्रतिग्रहेण शाम्यन्ति उदकेनाग्नयो यथा॥

प्रतिग्रहेण निषिद्धेन।

शङ्खलिखितौ,—

आपत्काले ब्राह्मणस्य मातापितृमतो बहुभृत्यस्यानन्तरिका वृत्तिरिति विकल्पः। तत्र ब्राह्मणेषु क्षत्रियगुणमध्यवृत्ते-र्दौर्व्बल्यमाख्यातं यद्भूयुक्ते स धर्मस्तस्यानन्तरा वृत्तिः क्षात्रोऽभि-निवेशस्त्रयाणां व्यावृत्तौ याजनाध्यापनप्रतिग्रहाणाम्। एवमप्यजीवन् वैश्यवृत्तिमेवोपजीवेत्।

विकल्पो विमर्शो निश्चय इति यावत्। अनापत्काले

ब्राह्मणवृत्तिरपि आपत्काले अनन्तरवृत्तिरिति व्यवस्थितविकल्प इति हलायुधः ।

क्षात्रोऽभिनिवेशः क्षत्रियवृत्तिनिष्ठता शिलोञ्छाद्यनन्तरं बुधः तदसम्भवे क्षत्रियवृत्त्या वापत्काले ऽसाधुभ्यः प्रतिगृह्णीयात् । वृत्तिसङ्करं न कुर्य्यात् । कर्म्म-वर्णसङ्करं न कुर्य्यात् । कुलशुद्ध्यर्थमापत्काले वैश्यवृत्त्यसंभवे असाधुरिह यत्प्रतिग्रहः शूद्राद्यपेक्षया अपकृष्टः. "श्रेयान् स्वधर्म्मो विगुणः, इति विगुणप्रतिग्रहादेः श्रेष्ठत्वाभिधानं शूद्रादिप्रतिग्रहादिविषयम् ।

याजनाध्यापनप्रतिग्रहानुवृत्तौ—

बौधायनः,—

तदशक्तौ क्षत्रधर्म्मेण जीवेत् प्रत्यनन्तरत्वात् ।

नेति गौतमः,—

न हास्यार्थमपि ब्राह्मण आयुधमाददीत ।

अत्युग्रो हि क्षत्रधर्म्मो ब्राह्मणस्य ।

अथाप्युदाहरन्ति—

ब्राह्मणार्थे गवार्थे वा सवर्णानाञ्च सङ्करे ।
गृह्णीयातां विप्र-विशौ शस्त्रं धर्म्मव्यपेक्षया ॥

वैश्यवृत्तिरनुष्ठेया क्षत्रधर्म्मेण शस्त्रधारणादन्येन धर्म्मार्थमेव ब्राह्मणस्य शस्त्रधारणविधानात् ।

क्षात्रेण धर्म्मणाजीवेत् विशां वाप्यापदि द्विजः ।
निस्तीर्य्यार्थं समुत्सृज्य पाव्यात्मानं भवेत् पथि ॥

विशां वेति कर्म्मणेत्यत्रानुषङ्गः । निस्तीर्य्यार्थं पदमिति विपरीतानुषङ्गः[1] । अर्थं वृत्तिविनियुक्तं समुत्सृज्य त्यक्त्वा आत्मानं पाव्य पावयित्वा पथि भवेत् स्वधर्म्ममाचरेदित्यर्थः ।

नारदः,—

आपत्स्वनन्तरा[2] वृत्तिर्ब्राह्मणस्य विधीयते ।
वैश्यवृत्तिस्ततश्चोक्ता न जघन्या कथञ्चन ॥
न कथञ्चन कुर्व्वीत ब्राह्मणः कर्म्म वार्षलम ।
वृषलः कर्म्म ब्राह्मण्यं[3] पतनीये हि चैतयोः ॥
उत्कृष्टञ्च निकृष्टञ्च द्वयोः कर्म्म न विद्यते ।
मध्यमे कर्म्मणी हित्वा सर्व्वसाधारणे हि ते ॥
आपदं ब्राह्मणस्तीर्त्वा-चत्रवृत्त्यर्ज्जितैर्धनैः[4] ।
उत्सृज्य चत्रवृत्तिं तां कृत्वा पावनमात्मनः ॥
तस्यामेव तु यो वृत्तौ ब्राह्मणो रमते रसात्[5] ।
काण्डपृष्ठश्च्युतो मार्गात् सोऽपाङ्क्तेयः प्रकीर्त्तितः ॥

अनन्तरा सन्निहिता जघन्या शूद्रवृत्तिः । वृषलस्येदं वार्षलं पतनीये पतनकर्त्तृभूते कृत्यल्युटो बहुलमित्यनेन कर्त्तरि अनीय प्रत्ययः । मध्यमे चत्रियवृत्ति-वैश्यवृत्त्यात्मके कर्म्मणी । काण्डपृष्ठो ब्राह्मणाधमः ।

१ (ग) विपरिणतानुषङ्गः ।
२ (ख) (ग) आपद्यनन्तरम ।
३ (ख) मूले कर्म्म वा ब्राह्मं । (क) कर्म्म न ब्राह्मम् ।
४ (ग) चत्रवृत्त्यादृते धनै ।   ५ (ग) सदा ।

वृहस्पतिः,—

कुसीदं कृषि-वाणिज्यं प्रकुर्व्वीतास्वयंकृतम् ।
आपत्काले स्वयं कुर्व्वन्नैनसा युज्यते द्विजः ॥
लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चापि पूजयेत् ।
ते तुष्टास्तस्य तं दोषं शमयन्ति न संशयः ॥

तद्दोषं कुसीदादिवृत्तिकृताधर्म्मम् ।

वणिक्कुसीदं दद्यात्तु वस्त्रगोकाञ्चनादिकम् ।
कृषिवलोऽन्नपानानि यानशय्यासनानि च ॥
पण्येभ्यो विंशकं दत्वा पशुवर्णादिकं शतम् ।
वणिक्कुसीददोषः स्यात् ब्राह्मणानाञ्च पूजने ॥

महाभारते,—

फलाक्कुल्काञ्च वमनान्मृदुस्निग्धाच्च भोजनात् ।
अपरप्रेष्यभावाच्च ऊर्द्धमिच्छन् व्रजत्यधः ॥

अपरप्रेष्यभावः स्वातन्त्र्यमात्रम् ।

॥ इति गृहस्थरत्नाकरे आपद्वृत्तितरङ्गः ॥

## अथ कृषिः।

तत्र मनुः,—

वैश्यवृत्त्या तु जीवंस्तु ब्राह्मणः क्षत्रियोऽपि वा।
हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्ज्जयेत्॥
कृषिं साध्विति मन्यन्ते सा वृत्तिः सद्विगर्हिता।
भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम्॥

भूमिशयान् भूम्याधारशायिकीटादीन्। अयोमुखं फालवत्। वैश्यवृत्त्याऽपि जीवद्भ्यां ब्राह्मणक्षत्रियाभ्यां वैश्यवृत्त्यन्तरासम्भव एव कृषिः कार्य्येत्यर्थः।

बौधायनः,—

कृषिर्वेदविनाशाय वेदः कृषिविनाशकृत्।
शक्तिमानुभयं कुर्य्यादशक्तस्तु कृषिं त्यजेत्॥

हारीतः,—

सहस्रूनं लाङ्गलं तद्ब्राह्मणे न विद्यते।

आपद्यावरितत्वाद्यदि कुर्य्याद्यथार्थम्। यथार्थं यावदापन्निस्तीर्य्यते तावदनतिक्रमेण।

बौधायनः,—

प्राक् प्रातराकर्षी स्यात्। अस्यूतनासिकाभ्यां समुष्काभ्यामतुदन्नवया मुहुर्मुहुरभ्युच्छन्दयन्।

बृहस्पतिः,—

विदधीत गवाभ्यासे तथा राजपथस्य च।
ऊषरं मूषिकाव्याप्तं क्षेत्रं यत्नेन वर्ज्जयेत्॥

गर्त्तानुपं सुसेकञ्च समन्तात् क्षेत्रसंयुतम् ।
सुकृष्टञ्च तथा काले वापयन् फलमश्नुते ॥

हारीतः,—

आपत्सु च कृषिं प्राहुः । कृषिर्वेदायोऽनवद्यायोज्य बाल-वृद्धकृशार्त्तादीन् वर्ज्जयेत् अदीर्घवेणप्रतोदेन शनैर्वाहयेत् । यष्टि-मुष्टिलोष्टारत्निजानुयोक्त्रार्द्रावणाक्रोशनप्रभृतिभिर्नाभिघ्नितान् पर्व्वसु न सन्धिवेलयोर्वाहयेत् ।

छिन्नकृते वा परियोगोऽवमृज्य मोचनं मृदुरच्छायायां पानाहारादीन् दद्यात् । कृमि-कीट-किलीतक-दंश-मशक-माक्षिका-निवृत्ति-भ्रमर-शीतवातोष्णाभिवर्षधूद्धरणकर्णकण्डूयन-धूपाग्निवात-प्रच्छन्नसमुपस्तीर्णादिषु च गोपयेत् । मग्न-भग्न-विलग्नार्त्तान् औषध-यवस-लवण-स्नेहादिषु यथार्थं पवल-लवण-मर्द्दनपुलाकाभिहारेषु बलिहोमादीन् कुर्य्यात् ।

देवलः,—

स्नात्वाऽनडुहोऽलङ्कृत्य ब्राह्मणान् भोजयेत् ।

सौरभेयाणां पुण्यमिति षड्भागं राज्ञे दत्त्वा पञ्चमात् ब्राह्मणान् भोजयेत् ।

अथाप्यत्रोदाहरन्ति ।

यूपोऽयं निहितो मध्ये मेधिनामेव कर्षकैः ।
तस्मादतन्द्रितो दद्यादन्नधान्यार्थदक्षिणाः ॥
भूमिं कृष्ट्वौषधिं छित्त्वा हत्वा कीटपिपीड़िकाम् ।
पुनन्ति खलु यज्ञेन कर्षका नात्र संशयः ॥

आयोजनवत्— आयोजनमग्निचयने गृह्योक्तन्तद्वत्। आर्त्तः पिपासार्त्तः। आदिशब्देन रोगादिग्रहणम्। वाहयेद्वृषभानिति शेषः। अरत्निरिह प्रसृतिकनिष्ठाङ्गुलिहस्तः। द्रावणं चाशार्थ-कशाद्युत्थानं आक्रोशनं म्रियस्वेत्यादिसाक्षेपभाषणम्। आदिशब्देन कशादारकतर्ज्जनादिग्रहणम्। द्विहलकृते पुनःकर्षणाय परियोगो हलस्य सम्यक् योगः तेन द्वितीयवाहनं पर्व्वादावपि कुर्य्यादित्यर्थः।

अवमृज्य हस्तादिना धूलिकर्द्दमादीनपास्य मृद्वत् आश्वासय-न्निव। किलीतको गवादिस्थलादिदेशोद्भवो रक्तपायी कीट-विशेषः। निवृत्तयश्चमराः स्रमरो गणचारिक्षुद्रमक्षिकाः कृमि कीटादिषु उपद्रवहेतुषु यथायोगमुद्दरणादिभिर्गोपयेत्। सक्तो-ऽवसन्नः, विलग्नः पङ्कादौ मग्नः।

यथार्थमेतान् भग्नादीन् औषधयवसादिषु भोजयेत्। पवनः स्नवनं। पुलाको यूपाद्यपनेयहेतुव्यापारः। अभिहारः खलात्गृह-प्रत्यानयनम्। सौरभेयाणां पुण्यं कल्याणमस्त्विति ब्राह्मणं भोजयेदित्यर्थः। षड्भागं राज्ञे दत्त्वेति।

तदुक्तं वृहस्पतिना,—

राज्ञे दद्याच्च षड्भागं देवतानाञ्च विंशकम्।
त्रिंशद्भागञ्च विप्राणां कृषिं कृत्वा न दोषभागिति॥

हारीतः,—

अष्टागवं धर्म्महलं षड्गवं जीवितार्थिनाम्।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम्॥
बालानां दमनञ्चैव वाहनञ्च न शस्यते।

वृद्धानां दुर्ब्बलानाञ्च प्रजापतिवचो यथा ॥

देवलः,—

पुंस्त्वोपघातं नस्यां वा वाहनानाञ्च कारयेत् ।
वृद्धं युग्मं न युञ्जीत जीर्णं व्याधितमेव वा ॥

ब्रह्मपुराणे,—

ब्रह्मा विष्णुश्च रुद्रश्च काश्यपः सुरभी तथा ।
इन्द्रः प्रचेताः पर्ज्जन्यः शेषश्चन्द्रार्कवक्रयः ॥
बलदेवो हलं भूमिर्वृषभौ रामलक्ष्मणौ ।
रक्षोघ्नौ जानकी सीता युगं गमनमेव च ॥
एते द्वाविंशतिः प्रोक्ताः प्रजानां पतयः शुभाः ।
गोमङ्गलेषु सम्पूज्याः कृष्यारम्भे महोत्सवे ॥
अर्घैः पुष्पैस्तथा धूपैर्माल्यैरन्नैः पृथक् पृथक् ।
सदक्षिणैर्विधानेन होमैर्ब्राह्मणतर्पणैः ॥
ततः शाकुनसूक्तेन वाद्यशब्देन भूरिणा ।
हलेन वाहयेद्भूमिं स्वयं स्नातः स्वलङ्कृतः ॥
पूर्व्वोत्तरां दिशं गच्छेत् क्रमात् पौरन्दरीं शुभाम् ।
कृत्वा प्रदक्षिणावर्त्तमैशान्यभिमुखोद्यतः ॥
विमुच्य वृषभौ बीजं पुरुषो लक्षणान्वितः ।
दद्यात् सुवासाः स्रग्वी च सुवर्णजलसेचितम् ॥
सुवर्णपात्रे कृत्वा तु प्राङ्मुखो निर्व्वपेद्भुवि ।
उप्ता बीजञ्च तत्रैव भोक्तव्यं बन्धुभिः सह ॥
उत्सवश्चैव कर्त्तव्यो गीतवाद्यसमाकुलः ।

न षण्डं वाहयेत् धेनुं न गां भारेण पीडयेत् ।
न वाहनीयाः शिशिरे वृषभा यत्र कुत्रचित् ॥

देवीपुराणे,—

सुक्षग्रं पृष्ठदेशे तु स्कन्धदेशे च यो वृषम् ।
वाहयेद्गुरुभारेण स तु भारशतं हरेत ॥

रामायणे,—

ये दुर्ब्बलं परिश्रान्तं बालिशाः पापनिर्भयाः ।
वाहयिष्यत्यनड्वाहं स गोघ्नः पापमाप्स्यति ॥
शक्तं समर्थं बलिनं वृषं यो वाहयिष्यति ।
ग्रासोपहारसंयुक्तं न स पापं प्रयास्यति ॥

वृहस्पतिः,—

कृशाऽतिवृद्धं क्षुद्रञ्च रोगिणं प्रपलायिनम् ।
काणं खञ्जञ्च[1] नादद्यात् वाह्यं प्राज्ञः कृषीवलः ॥

इति गृहस्थरत्नाकरे कृषितरङ्गः ।

---

## अथ ब्राह्मणस्यापद्वृत्तौ वाणिज्यम् ॥

तत्र मनुः,—

इदन्तु वृत्तिवैकल्यात्त्यजतो धर्म्मनैपुणम् ।
विट्पण्यमुद्धृतोद्धारं विक्रेयं वृत्तिवर्द्धनम् ॥
सर्व्वानसानपोहेत कृतान्नञ्च तिलैः सह ।

१ (ग) च्छ्रसं ।

अश्मानो लवणञ्चैव पशवो ये च मानवाः ॥
सर्व्वञ्च तान्तवं रक्तं शाणचौमाविकानि च ।
अपि वै स्युररक्तानि फलमूले तथौषधीः ॥
आपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्व्वशः ।
चीरं चौद्रं दधि घृतं तैलं मधु गुडं कुशान् ॥
[१]आरण्यांश्च पशून् सर्व्वान् दंष्ट्रिणश्च वयांसि च ।
मद्यं नीलिञ्च लाचाञ्च सर्व्वांश्चैकशफांस्तथा ॥
त्रपु-सीसे तथा लौहं तैजसानि तु सर्व्वशः ।
बालांश्चर्म्मांस्तथास्थीनि वसाः स्नावानि रोचनाम् ॥

धर्म्मनैपुणं स्वधर्म्मरचणकौशलम् । विट्पण्यं वैश्यविक्रेयम् । उद्‌धृतोद्धारमुद्धृत उद्धारः सारभूतो मांसादिर्यस्य तद्द्रव्यम् । रसा अत्र कट्वम्लादिषड्रसान्यतमप्रधानानि द्रव्याणि । अपोहेत वाणिज्ये त्यजेत् । कृतान्नं पक्वान्नमिहाश्मनः पाषाणाः । रसत्वेनैव लवणनिषेधसिद्धौ पुनर्लवणनिषेधग्रहणं तदधिकदोषग्रहणाय । तान्तवं तन्तुनिर्म्मितम् वस्त्रादि, रक्तमिह लोहितम् । शाणचौमाविकानि त्वलोहितान्यप्यपोहेतेत्यपिशब्दाद्गम्यते ।

सोमं सोमलताम् । चौद्रं माचिकम् । मधु पुष्परसः दंष्ट्रिणः शूकरादीन् एकशफानश्वादीन् । पशुपदादेव सर्व्वपशुनिषेधे लब्धे पुनर्दंष्ट्र्येकशफग्रहणं तद्वाणिज्यदोषोत्कर्षद्योत[२]नार्थं स्नावानि स्नायूनि ।

---

१ (क) (ख) पुस्तकद्वये आरण्यानित्यादि पंक्तिद्वयं पतितं ।
२ (ग) ज्ञापनार्थं ।

हलायुधेन तु विट्पण्यमुद्धृतोद्धारं विक्रेयं वित्तवर्द्धनमिति विधिखण्डतयैवावधारितं व्याख्यातञ्च उद्धृतोद्धारं निषिद्धवर्ज्जं विक्रेयमेवेति ।

याज्ञवल्क्यः,—

फलोपल-क्षौम-सोम-मनुष्यापूप-वीरुधः ।
तिलौदन-रस-क्षारान्[1] दधि क्षीरं घृतं जलम् ॥
शस्त्रासवं मधूच्छिष्टं मधु लाक्षाऽश्वबर्हिषः ।
मृच्चर्म्म पुष्प कुतप केश तक्र विष क्षितीः ॥
कौशेय नील लवण मांसैकशफसीसकान् ।
शाकान्यौषधिपिण्याक पशुगन्धांस्तथैव च ॥
वैश्यवृत्त्याऽपि जीवंस्तु[2] विक्रीणीत न जातुचित् ।

उपलोऽत्र मणिः । अश्वशब्दश्चापि एतदन्यपरः । वीरुत् गडूच्यादिः । क्षारं यवक्षारादि । कुतपो नेपालकम्बलः ।

अविक्रय्य-इत्यधिकारे यमः,—

कुसुम्भनारिकेलश्च वृन्ताकं पौतिकन्तथा ।
सोमः श्लेष्मातको यज्ञस्तोयं धर्म्मश्च सर्व्वशः ॥

शङ्खलिखितवाक्ये चातोऽधिके पानकृष्णाजिने निषिद्धे लिखिते ।

ब्राह्मणानुवृत्तौ गौतमः,—

तस्यापण्यं गन्धरसं कृतान्नमाषक्षौमाजिनानि । रक्तनिर्णिक्ते

१ क्वचित् रसक्षौमं ।
२ मूले जीवन्नो विक्रीणीत कदाचन ।

वासमी चीरं मूलकं फलमौषधम्। मधु-मांस-लवणोदकापथ्यानि पशवश्च हिंसासंयोगे पुरुषवशाकुमारी वेहतश्च नित्यं भूमि-व्रीहियवाऽवयश्च ऋषभ धेन्वनडुहश्चैके।

अपथ्यं विषादि। वशा वन्ध्या गौः। कुमारी अल्पवया गौः। वेहत् गर्भघातिनी गौः। वृषभ आधानसमर्थो वृषभः। तदन्योऽनडुहपदेनोक्त इत्यपौनरुक्त्यम्।

आपस्तम्बः,—

अविहिता वाणिज्या ब्राह्मणस्य। [1]यदि व्यवहरेत् पण्यानामपण्यानि व्युदस्यन्। मनुष्यान् रसान् (रागान्) गन्धानन्नं चर्म गवां वशां श्लेष्मचर्म्मादि तोक्मकीण्वे पिप्पलिमरीचे। धान्यं मांसमायुधं सुकृताशांश्च तिलतण्डुलांस्त्वेव धान्यस्य विशेषेण न विक्रीणीयात्।

पण्यानामपण्यानि विक्रेतव्यानाम्मध्ये अपण्यानि अनर्हविक्रेयाणि व्युदस्यन् परिहरन् श्लेष्मचर्म्मादि मन्थानहेतुर्वृत्तनिर्य्यासः। तोक्मा ईषदिरूढं बीजं कीण्वं मद्यजनकमन्नं सुकृता मदिविहिता धान्यस्य मध्ये तिलतण्डुला इत्यर्थः।

पैठीनसिः,— विद्यापूर्त्तमिष्टं गावः शस्त्रस्य ऊर्णास्वेति विक्रेयाणि।

अविक्रेयाणि ब्राह्मणेनेत्यनुवृत्तौ—

उशनाः,— शुक्ति-विष-तुष-कुतप-सलिल-सोम-गन्ध-क्षौम-रक्तवस्त्र-कौशेय-चर्मकम्बलप्रभृतीनि।

बौधायनः,—

पितॄन् वा एष विक्रीणीते यस्तिलान् विक्रीणीते। प्राणान्

[1] मूले आपदि।

वा एष विक्रीणीते यस्तण्डुलान् विक्रीणीते। सुकृतं वा एष विक्रीणीते यः पणमानो दुहितरं ददाति।

अपण्यमित्यनुवृत्तौ वशिष्ठादयः,—

धान्यानान्तिलानाञ्च।

अत्राप्युदाहरन्ति।

भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः।

कृमिर्भूत्वा स विष्ठायां पितृभिः सह मज्जति॥

रसगन्धतिलानाञ्च लाक्षालवणसर्पिषाम्।

भू-गोऽश्विचीरमेषाणां तैलाश्वजलवाससाम्॥

मांस-कृष्णाजिनानाञ्च विक्रेता सर्व्वविक्रयी।

स्नेहद्रव्य—रसानाञ्च सत्त्वानां जीवतामपि॥

विक्रेता दानपुण्यानां प्रोच्यते भ्रूणहा बुधैः।

वक्ता च दानपुण्यानां शपथे पुण्यविक्रयी॥

त्रपुशीशायसानाञ्च धातूनामपि सर्व्वशः।

वज्र-शुक्ति-प्रवालानां मणीनां माक्षिकस्य च॥

मया दत्तं गोभूहिरण्यादि अन्यदा सुकृत कृतं नश्यत्वित्यर्थः।

महाभारते,—

विक्रयं होह सोमस्य गर्हयन्ति मनीषिणः।

प्रतिरूपककर्त्ता च भ्रूणहा सोऽपि कथ्यते॥

स्नेहद्रव्यं तिलादि। प्राणवतां दानपुण्यानां शपथकरणे वक्तेत्यन्वयः।

ये चैनं क्रीणते तात ये च विक्रीणते जनाः।

ते वै वैवस्वतं प्राप्य रौरवं यान्ति सर्व्वशः ॥

क्रीणते वाणिज्यार्थमिति प्रकरणात्। तातेति सम्बोधनम्।

छागलेयः,—

न वेदविक्रयं कुर्य्यादग्निविक्रयमेव च।
यो धर्म्मविक्रये पुंसां नरकः सोऽत्र जायते ॥
तस्मान्न विक्रयो धर्म्म्यः अग्निहोत्रे तथैव च।
प्रख्यापनं प्राध्ययनं प्रश्नपूर्व्वः प्रतिग्रहः ॥
याजनाध्यापने वादः षड्विधो वेदविक्रयः।

अग्निहोत्रोऽत्राग्नित्रयपरः। प्रख्यापनं स्वविद्याया अतिशयेन कथनं। प्राध्ययनं अनध्यायेऽप्यध्ययनम्। प्रश्नपूर्व्वः प्रतिग्रहः कियदनेन पठितं किं कुलमस्येति पृष्ट्वा यद्दीयते। यदार्थं वेदराशिमस्खलितं पठसि तदेदं दास्यामीत्यन्ये। याजनाध्यापने भृतिग्रहणपूर्व्वके। वादोऽत्र पणग्रहणपूर्व्वकः।

भविष्यपुराणे,—

वेदविक्रयजं नेष्टं स्त्रिया यच्चार्ज्जितं धनम्।
न देयं पितृदेवेभ्यो यच्च क्लीवात् खगाधिप ॥
अनुयोगेन यो दद्यात् ब्राह्मणाय प्रतिग्रहम्।
स पूर्व्वं नरकं याति ब्राह्मणस्तदनन्तरम् ॥
वेदाक्षराणि यावन्ति नियुञ्ज्यादर्थकारणात्।
तावती भ्रूणहत्या वै वेदविक्रय्यवाप्नुयात् ॥

यमः— गवां विक्रयकारी तु गवि रोमाणि यानि तु।
तावत् वर्षसहस्राणि गवां गोष्ठे कृमिर्भवेत् ॥

शङ्खलिखितौ,—

न विक्रीणीयादविक्रेयाणि। तिल दधि क्षौद्र-लवण लाक्षा-मद्य-मांस-कृतान्न-स्त्री-पुरुष-हस्त्यश्व-गो-वृष-गन्ध-रस-क्षौम-कृष्णा-जिन-सोमोदक-नीलविक्रयात्सद्यः पतति ब्राह्मणः।

नीलमिह नीलवस्त्रादयः॥

मनु-हारीतौ,—

सद्यः पतति मांसेन लाक्षया लवणेन च।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्॥
इतरेषान्तु पण्यानां विक्रयादिह कामतः।
ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति॥

पतति अतिशयितपापो भवति। न तु तस्य ब्राह्मण-कर्त्तव्यकर्म्मानधिकारः। तस्य ब्रह्महत्यादि-पञ्चकान्यतम-साध्य-त्वात्। शूद्रो भवतीत्यपि निन्दातिशयद्योतनाय ब्राह्मणस्य शूद्रत्वा-सम्भवात्। इतरेषामेतद्वाक्योक्त-मांसादिचतुष्कातिरिक्तानाम। नियच्छति प्राप्नोतीत्यर्थः।

हारीतः,—

यस्तु सम्भृत्य सम्भारं दुर्भिक्षं समुदीक्षते।
हीनार्घमानदाता वै प्राप्तो दुर्भिक्षकण्टकः॥
हीनसङ्करमानैश्च यश्चैव हरते मलम।
स मलः प्रोच्यते प्राज्ञैः प्रजानां मलहारकः॥

हीनार्घमानदाता हीनार्घेण मानेन बहुमूल्यं गृहीत्वा विक्रेते-त्यर्थः। दुर्भिक्षकण्टकः दुर्भिक्षे 'लोकशत्रुः'। हीनसङ्करमानैः

हीनेनार्थेन, सङ्करेणापद्रव्यमिश्रेण मानेनेति विशेषणेन मेय-द्रव्याल्पताहेतुना पतैर्यो हरेत्। मलं मलिनद्रव्यं पापहेतुत्वात्।

मनुः,—

काममुत्पाद्य कृष्यान्तु स्वयमेव कृषीवलः।
विक्रीणीत तिलान् शुद्धान् धर्म्मार्थानचिरस्थितान्॥

शुद्धानपद्रव्यशून्यान्, धर्म्मार्थान् धनमाधायावश्यकधर्म्मसिद्ध्यर्थान्। अचिरस्थितान् अर्घाधिक्यार्थाय चिरमनवस्थितान्।

तदुक्तं नारदेन,

अशक्तौ भेषजस्यार्थे यज्ञहेतोस्तथैव च।
यद्यवश्यन्तु विक्रेयास्तिला धान्येन तत्समाः॥
रसा रसैर्निमातव्या नत्वेवं लवणं रसैः।
कृतान्नञ्चाकृतान्नेन तिला धान्येन तत्समाः॥

निमातव्याः परिवर्त्तनीयाः। कृतान्नमोदनशक्त्वादि।

गोतमः,

विनियमस्तु रसानां रसैः पशूनाञ्च लवणकृतान्नयोस्तिलानाञ्च समेन आमेन तु पक्वस्य सम्प्रत्यर्थः।

रसानां घृतादीनां रसैस्तैलादिभिः पशूनाञ्च पशुभिरिति शेषः। लवणस्य रसव्यतिरिक्तेन केनापि समेन कृतान्नस्य केनापि समेन कृतान्नेन तिलानाञ्चान्येन समेन आमेन तु पक्वस्य सम्प्रत्यर्थः। तात्कालिकावश्यककार्य्यार्थम्।

यमः,—

न तिलास्तैलतां यान्ति न गावो यान्ति चौरताम्।

रसास्तेषां न विज्ञेया यथा गावस्तथा तिलाः ॥

हारीतः,—

नियमस्तु रसादीनां विक्रयो नैव दुष्यति ।

यज्ञार्थन्दक्षिणार्थञ्च[1] प्रजापतिवचो यथा ॥

योऽयं नियतविनिमयरूपो विक्रयः स यज्ञार्थं दक्षिणार्थञ्च कृतो न दुष्यति ।

वशिष्ठः,—

रसा रसैः समतो हीनतो वा निमातव्या नत्वेव लवणं रसैः । तिल-तण्डुल पक्वान्नं विद्या मनुष्याश्च विहिताः परिवर्त्तकेन ।

समतो हीनतो वा इति तृतीयान्तात्तसि तेन समैर्न्यूनैर्वा परिवर्त्तनीया रसाः । नत्वधिकं ग्राह्यमित्यर्थः ।

तिलतण्डुलान्नवृत्तावापस्तम्बः,—

विहितश्चैषां मिथो विनिमय अन्नेन चान्नस्य मनुष्याणां मनुष्यैः, रसानाञ्च रसैः, गन्धानाञ्च गन्धैः,[2] विद्यया विद्यानाम् । अक्रीतपण्यैर्व्यवहरेत् । मुञ्जवल्वजमूलफलैस्तृणकाष्ठैरविकृतैर्नात्यन्तमनुरमेत[3] । तञ्च वृत्तिं प्राप्य विरमेत् ।

अक्रीतपण्यैः क्रयव्यतिरिक्तप्रकारोपपन्नैः व्यवहरेत विक्रयमाधयेत् । तृणकाष्ठैरित्यनेनोपात्तयोर्मुञ्जवल्वजयोः पुनरुपादानं विक्रयस्यातिशयाभ्यनुज्ञानाय नात्यन्तमनुरमेत । नात्यन्तमर्थं कुर्य्यात् । वृत्तिं सुख्याम् ।

१ (ग) दक्षिणानाञ्च २ मूले— कर्विहिता
३, मूले अन्वयस्येत

बौधायनः,—

तृणकाष्ठमविकृतं विक्रेयम् ।

अथाप्युदाहरन्ति ।

पशवश्चैकतोदन्ता अश्मा च लवणोद्धृतः ।

एतद्ब्राह्मण ते पण्यं तन्तुश्चारजनीकृतः ॥ इति ।

अश्मा पाषाणः, लवणोद्धृतः लवणादन्यः । अयञ्चाश्मविक्रयोऽत्यन्तापदि । स्मृत्यन्तरे लवणाश्मनोर्द्वयोरपि निषेधात् । अरजनीकृत कुसुम्भादिभिर्न रक्तीकृतः ।

नारदः,—

ब्राह्मणस्य च विक्रेयं शुष्कं दारु तृणानि च ।

गन्धद्रव्यैरका वेत्र मूल तूलकुशादृते ॥

स्वयं विशीर्णं विदलं फलानां वदरेङ्गुदे ।

रज्जुः कार्पासिकं सूत्रं तच्चेदविकृतम्भवेत् ॥

एरका तृणविशेषः । तूलं शाल्मल्यादिः । विदलमिह वल्कलम् ।

शङ्खलिखितौ,— शुष्ककाष्ठ वदरेङ्गुदविल्वकार्पासिकसूत्रैरविकृतैर्द्रव्यमाहरेत् ।

हारीतः,— पूर्व्ववृत्तिस्वजीवन् शुष्ककाष्ठविक्रयं कुर्व्वीत । गा एव वा रक्षेत् ।

शङ्खलिखितौ,—आपद्गतो ब्राह्मणः कामं जिजीविषुरेकान्तरितां वृत्तिमास्थाय पण्यमिति ब्रूयात् । सहदेवोऽक्रमूल्यमिच्छेत् ॥

इति गृहस्थरत्नाकरे वाणिज्यतरङ्गः ॥

# अथ पाशुपाल्यम् ।

तत्र शङ्खलिखितौ,—

गावो रक्षेत् तासु पीतासु पिबेत् । अवतिष्ठन्तीषूपविशेत् । न स्वयं सुखापयेत् । न शनैरार्द्रशाखया पृष्ठतोऽभिहन्यात् । नातीर्थेन विषमेनान्योदकेऽवतारयेत् बाल-वृद्ध-कृश-रोगार्त्ताः शान्ता उपासीत । शक्तितः प्रतीकारं कुर्य्यात् । गवामेष धर्म्मोऽन्यथा विप्लवः ।

उपासीत परिचरेत् । गवामेष धर्म्मो न तदन्यरक्षणीयानाम् ।

ब्रह्मपुराणे,—

परिभूयाऽथ गा मोहादवीचिनरके नरः ।
गोभिर्निर्ग्रामनिर्भिन्नो दह्यते नरकाग्निना ॥
तस्मान्मार्गं नयेत्तास्तु चीरिवृक्षोत्थवल्कलैः ।
हे श्रीमातस्त्वं मां पाहि नमाम्येति ब्रुवन् वचः ॥
गोब्राह्मणार्थं संग्रामे निहतः शाङ्करं पदम् ।
योऽपि कश्चिन्नरो याति किं पुनर्ब्राह्मणादयः ॥

इति गृहस्थरत्नाकरे पाशुपाल्यतरङ्गः ॥

## अथ ब्राह्मणस्यापद्वृत्तौ कुशीदम्।

तत्र नारदः,—

आपदं निस्तरेद्वैश्यः कामं वार्द्धुषिककर्म्मणा।
आपत्स्वपीह[1] कष्टासु ब्राह्मणस्य न वार्द्धुषम्॥

एवञ्च कष्टतरासु आपत्स्वेव कुशीदस्य ब्राह्मणे अवसरः।

पैठीनसिः,—

लोके ब्राह्मण-राजन्यौ वार्द्धुषिक न दद्याताम्।

अथाप्युदाहरन्ति।

समर्घं धनमुद्धृत्य[2] महार्घं यः प्रयच्छति।
स वै वार्द्धुषिको ज्ञेयो ब्रह्मवादिषु गर्हितः॥

समर्घमल्पफलं, उद्धृत्य उद्धार कृत्वा, महार्घं बहुफलम्।

तथाच बौधायनः,—

यः समर्घं गृहीत्वार्णं महार्घं सम्प्रयच्छति।
स वै वार्द्धुषिको ज्ञेयः सर्व्वधर्म्मेषु गर्हितः॥

यमः,—

समर्घं पण्यमाहृत्य महार्घं यः प्रयच्छति।
स वै वार्द्धुषिको ज्ञेयो ये च वृद्ध्या प्रयुञ्जते॥

समर्घमिह यथाप्रचरन्मूल्यं महार्घञ्चेह प्रचरन्मूल्याधिकमूल्यं वृद्ध्या शास्त्रानुज्ञातवृद्ध्या। अर्थमिति शेषः। वाणिज्या-कुशीदयोरापद्यपि अनुज्ञाने एवंविधयोर्निषेधः।

१ (ग) आपत्स्वपि हि। २ (ग) आहृत्य

बृहस्पतिः,—

भागाय द्विगुणादूर्द्धं चक्रवृद्धिश्च गृह्यते।
मूलञ्च मोदयं दद्यात् वार्द्धुष्यं तद्विगर्हितम्॥

भागोऽच द्विगुणभूत-धनाधिकवृद्धिग्रहणम्। चक्रवृद्धिः कलायामेव या कला। मोदयं यावद्दत्तं तावतोऽधिकं मूल्य तेन यदाऽल्पं मूल्यं दत्वा तदेव मोदयं बोद्धव्यम् [1](मूलत्वेनैव मूल-ग्रहणसमये गृह्णाति मोऽपि वार्द्धुषिरित्यर्थः)।

नारदः,—

वृद्धिस्तु योक्ता धान्यानां वार्द्धुष्यं तदुदाहृतम्।

अत्र शास्त्रानुमतत्वं बोद्धव्यम्।

पैठीनसिः। वार्द्धुष्य परिहरेत्।

अत्राप्युदाहरन्ति

वार्द्धुषिर्भ्रूणहा चैव तुलायामवरोपितौ।
अतिष्ठद्भ्रूणहा कोट्यां वार्द्धुषिः समकम्पत॥ इति

वार्द्धुषिश्चाच पूर्व्वमुक्तः।

बृहद्ब्रह्मनन्तरं लघुहारीतः,—

ब्रह्मघ्नं वृद्धिजीवञ्च तुलायां समधारयन्।
अतिष्ठद्ब्रह्महा कोट्यां वृद्धिजीवस्त्वकम्पत॥

मनुः,—

न पापं ब्रह्महन्तॄणां न पापं गुरुहिंसके।
न पापमग्निदातॄणां न पापं वृषलीपतेः॥

[1] (ग) पुस्तके ( ) चिह्नितांशः अधिकः पाठः।

सर्व्वपापाधिकां वृद्धिं भ्रूणघ्ना समतोलयत्।
ब्राह्मणः क्षत्त्रियो वापि वृद्धिं नैव प्रयोजयेत्॥
कामन्तु सुखधर्म्मार्थं दत्त्वा पापीयसेऽल्पकम्।

वृद्धिं निन्दितां धर्म्मार्थमवश्यकृत्यार्थं पापीयसे हीनजातीयाय अल्पकमत्र यावतो धनस्य वृद्ध्या अवश्यकर्त्तव्यसिद्धिः तावता।

ब्राह्मण-क्षत्त्रियावित्यनुवृत्तौ वशिष्ठः,—

कामं वा विलुप्तकृत्याय पापीयसे दद्याताम्।

पैठीनसिः,—

कामन्तु पापीयसे दद्याद्दशेत्येके। न ज्यायसीं वृद्धि-मुपाददीत न त्वेव कनीयसीम्।

दशपणसंख्यया एकस्मै पापीयसे दद्यादित्यर्थः। वृद्धेरधिकत्व-मल्पत्वञ्च शास्त्रानुमत-वृद्ध्यपेक्षया। कनीयस्या वृद्धेर्निषिद्धत्वेनोपा-दानमावश्यककर्म्माननुकूलतायाः।

वशिष्ठः,—

वशिष्ठवचनप्रोक्तां वृद्धिं वार्द्धुषिके शृणु।
पञ्चमाषास्तु विंशत्यामेवं धर्म्मो न हीयते॥

विंशतिरिह कार्षापणानाम्। तत्र पञ्चमाषा वृद्धिर्ग्राह्या। माषाश्च-माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु।

इति नारदवचनाज्ज्ञेयाः। इयञ्च वृद्धिः प्रतिमासं ग्राह्या।

अशीतिभागं गृह्णीयान्मासाद्वार्द्धुषिकः शते। इत्युक्तेः।

बृहस्पतिः,—

अशीतिभागो वर्द्धेत लाभो द्विगुणतामियात्।

प्रयुक्तं सप्तभिर्वर्षैस्त्रिभागोनैर्न संशयः ॥

व्यासः,—

सबन्धे भाग आशीतः षाष्टभागः सलग्नके ।
निराधाने द्विकशतं मासलाभ उदाहृतः ॥

आशीतोऽशीतितमः । अयमेव सलग्नके स्वकीयाष्टभाग-सहितः । निराधाने वन्धकलग्नकशून्ये ।

द्विकं शतं प्रगृह्णीत सतां धर्ममनुस्मरन् ।
द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्बिषी ॥
तथा द्विकमपि शतं गृह्णानो नैव दोषभाक् ।

अत्र च सबन्धकाबन्धकविषयतया विरोधपरीहारः । सबन्धे भाग आशीत इति व्यासोक्तेः ।

हारीतः,—

पुराणपञ्चविंशत्यां मासे अष्टपणा वृद्धिः । एवं षड्भिर्मासैश्चतुर्भिर्वत्सरैर्द्विपर्य्यागतं सन्तिष्ठते । एषा धर्मवृद्धिर्न्यायया धर्माच्च्यवते ।

पुराणमिह षोडशपणाः पणं काकिनीचतुष्टयम् । तथैव प्रसिद्धेः । द्विपर्य्यागतं द्विगुणीभूतं सन्तिष्ठते न पुनर्वर्द्धत इति यावत् ।

मनुः,—

द्विकं त्रिकं चतुष्कञ्च पञ्चकञ्च शतं समम् ।
मासस्य वृद्धिं गृह्णीयाद्वर्णानामानुपूर्वशः ॥

द्विकं द्वे वृद्धी दीयेते यस्मिन् ऋणे तत् । एवं त्रिकाद्यपि समं तुल्यम् ।

याज्ञवल्क्यः,—

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।
वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा ॥

अन्यथा बन्धकलग्नकविरहेण ।

मनुः,—

नातिसंवत्सरीं वृद्धिं न वा दृष्टां पुनर्हरेत् ।
चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या ॥

अधिकानि च विवादरत्नाकर एव प्रपञ्चितानि तत्र द्रष्टव्यानि ।

बृहस्पतिः,—

बहवो वर्त्तनोपाया ऋषिभिः परिकीर्त्तिताः ।
सर्व्वेषामपि चैतेषां कुसीदमधिकं विदुः ॥
अनावृष्ट्या राजभयान्मूषिकाद्यैरुपद्रवैः ।
कृष्यादिके भवेद्धानिः कुसीदे सा न विद्यते ॥
शुक्लपक्षे तथा कृष्णे रजन्यां दिवसेऽपि वा ।
उष्णे शीतेऽतिवर्षे वा वर्द्धनं विनिवर्त्तते ॥
दिशं गतानां या वृद्धिर्नानापण्योपजीविनाम् ।
कुसीदं कुर्व्वतः सम्यक् साऽस्मिन् तस्यैव जायते ॥

॥ इति गृहस्थरत्नाकरे कुसीदतरङ्गः ॥

## अथान्यापद्वृत्तयः।

तत्र मनुः,—

विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः।
धृतिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः॥

विद्या वेदविद्याव्यतिरिक्ता। शिल्पं चित्रादिकर्म्म। भृतिर्वेतनम्। विपणिर्वाणिज्यम्। गोरक्ष्यकुसीदवाणिज्यानां लोकनिबद्धत्वमात्रेणोपन्यासः। वृत्तेस्तानापद्वृत्तिता ज्ञेया॥

याज्ञवल्क्यः,—

कृषिः शिल्पं धृतिर्विद्या कुसीदं शकटं गिरिः।
सेवाऽनूपं नृपो भैक्ष्यमापत्तौ जीवनानि तु॥

छागलेयः,—

शकटं शाकिनी गावो जालमस्पन्दनं वनम्।
अनूपं पर्व्वतो राजा दुर्भिक्षे नव वृत्तयः॥

शकटं धान्यादिवहनभारद्वारेण। शाकिनी शाकवाटिका। जालं मत्स्याद्याहरणेन। अस्पन्दनमेकत्रावस्थानं व्याधिक्यविरह-तृणादिलाभो वृत्तिः। वनं फलमूलाद्याहरणेन। अनूपं जलप्रायो देशः स च विषशालूकाद्याहरणेन। गिरिस्तदसाधारणवस्त्वाद्या-हरणेन।

गोतमः,—

सर्वथा वृत्तिरशक्तावशौद्रेण तदप्येके प्राणसंशये तद्वर्णसङ्कराभक्ष्यनियमस्तु प्राणसंशये। ब्राह्मणः शस्त्रमाददीत।

सर्वथा प्रतिषिद्धवृत्ति-विक्रयवृत्ति-सकरादिभिः। अशक्तौ

अवश्यकार्य्य-कर्म्मसम्पत्तौ असौद्रेण शूद्रसाधारणोच्छिष्टाशनाद्य-न्येन। तदपि शौद्रमपि कर्म्म। प्राणसंशये एके वृत्तिंमन्यन्ते। आत्मनोऽवश्यभर्त्तव्यानाञ्चेति शेषः। तद्वर्णसङ्करस्तेन शूद्रवर्णेन सङ्करः सहाशनादिः। अभक्ष्यं लशुनादि नियमो निवृत्तिः, तस्याभावोऽभक्ष्यनियमः। तेन प्राणसंशये वर्णसङ्करदोषो भक्ष्य-नियमो नास्तीत्यर्थः।

ब्राह्मणोऽपि शस्त्रमाददीत प्राणधारणार्थमिति शेषः। सर्वथा प्रतिषिद्धविक्रयादि-वर्णसङ्करादिभिरिति सहार्थे तृतीया। तेन प्राणधारणासम्भवे ब्राह्मणेन सर्वथा प्रतिषिद्धविक्रयादिकमपि शस्त्रधारणमपि कार्य्यमित्यर्थः।

अङ्गिराः,—

व्याधितस्य दरिद्रस्य कुटुम्बात्प्रच्युतस्य च।
अध्वानं वा प्रपन्नस्य भिक्षाचर्य्या विधीयते॥

व्याधितत्वाद्यच सर्वथा पाकानुपपत्तिलक्षकम्।

हारीतः,—

चतुर्वर्णेषु वा भैक्ष्यमेकान्नं वा द्विजातिषु।
स्वकर्म्मोपार्ज्जितं भैक्ष्यं विधिना त्वनसूयया॥
वायुतुल्यं प्रशंसन्ति ऋषयो न्यायकोविदाः।

स्वकर्म्मणा यथोक्ताध्यापनादिप्रयोजनेन। विधिना च समाचत्य तद्भैक्ष्यमित्याद्यमन्त्रोक्तप्रकारेण। वायुतुल्यं शुद्धतया।

मनुः,—

तथैव सप्तमे भक्ते भक्तानि च षडनश्नता।

अश्वस्तनविधानेन कर्त्तव्यं हीनकर्म्मणः ॥
खलात् क्षेत्रादगाराद्वा यतो वाऽप्युपलभ्यते ।
आख्यातव्यन्तु तत्तस्मै पृच्छते यदि पृच्छति ॥
ब्रह्मस्वं न च हर्त्तव्यं क्षत्रियेण कदाचन ।
दस्यु-निष्क्रिययोः स्वन्तु न जीवन् हर्त्तुमर्हति ॥

अश्वस्तनविधानेन एकदिनमात्रोपयोगेन। दस्युश्चौरः। निष्क्रियो विहितक्रियारहितः। तयोर्ब्राह्मणयोरपहर्त्तव्यमित्यर्थः।

तथा,—

अलिङ्गी लिङ्गवेषेण यो वृत्तिमुपजीवति ।
स लिङ्गिनं हरत्येनस्तिर्य्यग्योनौ च जायते ॥

याज्ञवल्क्यः,—

बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत् ।
प्रतिगृह्य तदाख्येयमभियुक्तेन धर्म्मतः

प्रतिगृह्य गृहीत्वा।

हारीतः,—

आरोग्यवृत्तिः चिकित्सितमुपपति-वृष-वेश्योपजीवनं वैतस्या वणिक् कैराटौ वार्द्धुषिकौ अनृतौ कितववृत्ति वाद-प्रेष्य-तार्किकाश्ववृत्तिः, राजपौरुष्यं दम्भजीवनं कल्कवृत्तिः। परस्वा-हरणं स्तेयवृत्तिर्वधवन्धोपपत्युजीववृत्तयश्चेताः किल्बिषवृत्तयो निरयानुशिष्टाः। पापयोनिषु जायन्ते तस्मात्तासद्वृत्तिः स्यात्।

आरोग्यवृत्तिरौषधविक्रयवृत्तिः। चिकित्सितं रुक्प्रतिक्रिया-वृत्तिः। उपपत्युपजीवनं स्वभार्य्याजारोपजीवनवृत्तिः। वृषोप-

जीवनं भाटकादिवृत्तिः । वेश्योपजीवनं मूल्येन स्त्रीसमर्पणम् । वैतस्या नामवृत्तिः । वणिक् पण्यजीवनवृत्तिः । कैराटी अविक्रय्यविक्रयवृत्तिः । वार्द्धुषिकी कुसीदवृत्तिः । अनृतवृत्तिः कपटवृत्तिः । कितववृत्तिः द्यूतकारवृत्तिः । वादवृत्तिः कलहेन वृत्तिः । प्रेष्यवृत्तिः सेवावृत्तिः । नार्क्किकोऽत्र कुहेतुवादवृत्तिः । आस्ववृत्तिः कलादिना परद्रव्योपमर्द्दनवृत्तिः । राजपौरुष्यं राजभयकथनेनोत्कोचादानम् । दम्भजीवनं कल्कवृत्तिरिति सामानाधिकरण्यं दम्भस्य व्यक्ता हि कल्कता । छलेन परस्वाहरणं स्तेयवृत्तिः । निरयानुशिष्टा नरकयातनां प्राप्ताः ।

देवलः,—

चिकित्सां ज्योतिषं रूपं शकटं तिलपीड़नम् ।
सुरान्तुलाञ्च नाजीवेत् पुचाचार्य्यत्वमेव च ॥
लाक्षा-मञ्जिष्ठ-मांसानि मधुलोहविषाणि च ।
आजीवन् वृषलोऽप्यार्य्यः कर्म्मणा तेन वर्जितः ॥

रूपं वेश्यादिरूपवज्जीवनोपायः । शकटनिषेधो दुर्भिक्षं विना । पुचाचार्य्यत्वं आचार्य्यतया पुचाङ्कनग्रहणम् ।

शङ्खलिखितौ,—

नान्तरितां नाविशिष्टां नाधिकां न समां न हीनां न कुत्सितां नानर्थकारीं वृत्तिं लिप्सेत् ।

अन्तरितां वर्णक्रमेण व्यवहिताम् । यथा ब्राह्मणस्य वैश्यवृत्तिः । अविशिष्टा सत्प्रतिग्रहादौ सम्भवति असत्प्रतिग्रहादिका । अधिका स्वोत्कृष्टवर्णसम्बन्धिनी । समा आवश्यककर्त्तव्योपसमर्था ।

हीना शूद्रसम्बन्धिनी। कुत्सिता निन्द्यकर्म्मत्वेनोपात्ता। अनर्थकरी बलवदनिष्टहेतुः।

मनुः,—

नेहेतार्थान् प्रसङ्गेन न विरुद्धेन कर्म्मणा।

न कल्प्यमानेष्वर्थेषु नार्त्तावपि यतस्ततः॥

प्रसङ्गेन गीतवाद्यादिना कल्प्यमानेष्वर्थेषु धनेषु सत्सु, यतस्ततोऽधिगस्तपतितादेः।

लघुहारीतः,—

अधिकारी तु यो यस्य स दासस्तस्य कीर्त्तितः।

तस्माद्द्विजोत्तमेनैतत्कार्य्यं कर्म्म न कर्हिचित्॥

अधिकारी तु यः पूर्त्तमिष्टं वा कर्म्म कारयेत्।

स गच्छेन्नरकं घोरं यस्यार्थस्तस्य तत् फलम्॥

इति जीवनार्थदत्तधनातिरिक्त-प्रभुधनेनाधिकारी न धर्म्म-माचरेदिति तात्पर्य्यम्।

व्यासः,—

वृद्धौ च मातापितरौ साध्वी भार्य्या सुतः शिशुः।

अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्॥

अकार्य्यशतं निन्दिता वृत्तिः।

दक्षः,—

इतश्चैव च ततो भाग पोष्यवर्गार्थसाधनम्।

माता पिता गुरुर्भार्य्या प्रजा दीनः समाश्रितः॥

अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः।

ज्ञातिर्बन्धुजनः क्षीणस्तथाऽनाथः समाश्रितः ॥
अन्येऽपि धनयुक्तस्य[1] पोष्यवर्ग उदाहृतः।
ज्ञानविद्भ्यस्च दातव्यमन्यथा नरकं व्रजेत् ॥
तस्मात् सर्व्वप्रयत्नेन पोष्यवर्गं सदा भरेत्।
भरणं पोष्यवर्गस्य स्वर्गसाधनमुत्तमम् ॥
नरकं पीडने चास्य तस्माद्यत्नेन तं भरेत्।
स जीवति पुमानेको बहुभिर्य्योऽनुजीव्यते।
जीवन्तोऽपि मृतास्त्वन्ये पुरुषाः स्वोदरम्भराः ॥
बह्वर्थं जीव्यते कैश्चित् कुटुम्बार्थे तथाऽपरैः।
आत्मार्थे न च शक्नोति स्वोदरेणापि दुःखितः ॥

अर्थसाधनं धनार्ज्जनं, दीनः समाश्रित इत्येको बोध्यः। तेनादीनः समाश्रितोऽपि न तथा। अभ्यागतोऽध्वगश्चान्यो ग्रामान्तरादागतः। ज्ञातिः पितृबन्धुः। बन्धुर्मातृबन्धुः। अनाथः पित्रादिपोषकशून्यः। ज्ञानवित् वेदशास्त्रवेत्ता।

॥ इति गृहस्थरत्नाकरेऽन्यापहृक्तितरङ्गः ॥

---

[1] मूले— अधनयुक्तस्य।

# अथ प्रतिग्रहविधिः ।

तत्र व्यासः,—

द्विजातिभ्यो धनं लिप्सेत् प्रशस्तेभ्यो द्विजोत्तमः ।
अथ राजादिपात्रेभ्यो न तु शूद्रात् कथञ्चन ॥

मनुः,—

राजतो धनमन्विच्छेत् संसीदन् स्नातकः क्षुधा ।
याज्यान्तेवासिनो वापि नत्वन्यत इति स्थितिः ॥

याज्ञवल्क्यः,—

राजान्तेवासि याज्येभ्यः सीदन्निच्छेद्धनं क्षुधा ।
दम्भि-हैतुक-पाषण्डि-वकवृत्तींश्च वर्ज्जयेत् ॥

राजशब्दः क्षत्रियनृपतिपरः ।

न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः ।

इतिवचनात् ।

लोकरञ्जनार्थमेव कर्म्मानुष्ठायी दम्भी । हैतुकः हेतुवादरतो युक्तिवलेन सर्व्वत्र संशयकारी । पाषण्डिनस्त्रयीवाह्याः । वकवदस्य वर्त्तनमिति वकवृत्तिः ।

नारदः,—

अर्थानां भूरिभावाच्च देवत्वाच्च[1] महात्मनाम् ।
श्रेयान् प्रतिग्रहो राज्ञां नान्येषां ब्राह्मणादृते ॥

देवत्वं अष्टलोकपालांशत्वात् मन्वादिभिः संस्तुतत्वाच्च ।

---

१ क्वचित् देयत्वाच्च।

ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ ।
नैतयोरन्तरं किञ्चित् प्रजा-धर्म्माभिरक्षणात्[१] ॥
धर्म्मज्ञस्य कृतज्ञस्य रक्षार्थं शासतोऽशुचीन् ।
मेध्यमेव धनं प्राहुस्तीक्ष्णस्यापि महीपतेः ॥

अशुचिरिह कृतापराधः ।

शुचीनामशुचीनाञ्च सन्निपातो यथाऽम्भसाम् ।
समुद्रे समतां याति तद्वद्राज्ञां धनागमः ॥
यथाग्नौ संस्थितं दीप्ते शुद्धिमायाति काञ्चनम् ।
एवं धनागमाः सर्व्वे शुद्धिमायान्ति राजनि ॥
स्वधर्म्मे ब्राह्मणस्तिष्ठन् वृत्तिमाहरते नृपात् ।
नासद्भ्यः प्रतिगृह्णीयाद्ब्राह्मणो विभवे सति[२] ॥
अशुचिर्वचनाद्यस्य शुचिर्भवति पुरुषः ।
शुचिश्चैवाशुचिः सद्यः कथं राजा न दैवतम् ॥
विदुर्य्य एवं दैवत्य राज्ञो ह्यमिततेजसः ।
तस्य ते प्रतिगृह्णन्तो न लिप्यन्ते कथञ्चन ॥

शिलोञ्छवृत्त्यनन्तरं मनुः,—

सीदद्भिः कुप्यमिच्छद्भिर्धनं वा पृथिवीपतिः ।
याच्यः स्यात् स्नातकैर्विप्रैरदित्संस्त्यागमर्हति ॥
अकृतञ्च कृतात् क्षेत्रात् गौरजाविकमेव च ।
हिरण्यं धान्यमन्नञ्च पूर्वं पूर्वमदोषकृत् ॥

१ मूले प्रजा धर्म्मेण रक्षतोः ।
२ (क) वर्णेभ्यो नियमे सति ।

कुप्यं सुवर्णरजताभ्यामन्यत् कांस्यादि। धनमदित्सन् दातुमवाञ्छन् त्यागमर्हति।

तस्य राष्ट्रे न वस्तव्यमिति मेधातिथिः। अकृतमकृष्टं कृतात् कृष्टात्। अन्नं पक्वम्।

बौधायनः,— तस्य वृत्तिर्ब्राह्मणक्षत्रियवैश्यरथकारेभ्यामं लिप्सेत भिक्षेत वाग्यतस्तिष्ठन्।

रथकारो माहिष्येण करण्यां स्त्रियां जातः। लिप्सेत अप्रार्थितमिति शेषः। भिक्षेत पक्वान्नमिति शेषः।

शङ्खलिखितौ,—

भिक्षमाणो वा निमित्तान्तरं ब्रूयात्। न रङ्गावतारं कुर्यात्। न स्त्रीं नाप्राप्तव्यवहारानपर्य्याप्तमन्निधानाननुद्दिश्यान्न भिक्षेत[1]।

यदर्थं भिक्षेत तमेवार्थं कुर्य्यात् शेषमृत्विग्भ्यो निवेदयेत्। यो वाऽन्यः साधुतमस्तस्मै दद्यात्।

निमित्तान्तरं भिक्षाप्रयोजकं विवाहयज्ञादि। रङ्गो नृत्यादिस्थानं तदवतारे भिक्षार्थन्तत्र गमनम्। अप्राप्तव्यवहारान् षोडशवर्षोनवयस्कान् अपर्य्याप्तमन्निधानान् दानायोग्यदेशकालस्थान् अनुद्दिश्यान्नं भिक्षानिमित्तं यज्ञविवाहाद्यतिरिक्तं 'निमित्तमनभिधाय भिक्षेतेति न स्त्रीमित्यादिभिरभ्यीयते।

मनुः,—

न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः।
शूनि-चक्रि-ध्वजवतां वेशेनैव च जीवताम्॥

1 मूले सूनाचक्र—।

दशसूनासमं चक्रं दशचक्रसमो ध्वजः ।
दशध्वजसमो वेशो[1] दशवेशसमो नृपः ॥

सूना प्राणिवधस्थानम् । चक्रं सर्षपादिवहनस्थानम् । तदस्यास्तीति चक्री । ध्वजवान् शौण्डिकः । वेशोऽत्र गणिकावृत्तिः ।

दशसूनासहस्राणि यो वाहयति शौण्डिकः[2] ।
तेन तुल्यः स्मृतो राजा घोरस्तस्य प्रतिग्रहः ॥
यो राज्ञः प्रतिगृह्णीयात् लुब्धस्योच्छास्त्रवर्त्तिनः ।
स पर्य्यायेण यातीमान्नरकानेकविंशतिम् ॥
तामिस्रमन्धतामिस्रम् महारौरव-रौरवौ ।
नरकं कालसूत्रञ्च महानरकमेव च ॥
संजीवनं महावीचीं तपनं सम्प्रतापनम् ।
संघातकञ्च काकोलं कुड्मल[3]म्पूतमृत्तिकम् ॥
लोहशङ्कुमृचीषञ्च पन्थानं शाल्मलीं नदीम् ।
असिपत्रवनञ्चैव लोहदारकमेव च ॥
एतद्विदन्तो विद्वांसो ब्राह्मणा वेदवादिनः ।
न राज्ञः प्रतिगृह्णन्ति प्रेत्य श्रेयोऽभिकाङ्क्षिणः ॥

यमः,—

अराजन्यप्रसूतस्य राज्ञः स्वच्छन्दवर्त्तिनः ।
घोरः प्रतिग्रहस्तस्य मध्वास्वादो विषोपमः ॥
राजकिल्बिष-दग्धानां विप्राणामकृतात्मनाम् ।

१ (क) समा वेश्या । २ (क) सौनिक ।
३ मूले कुड्मलं ।

छिन्नानामिव बीजानां पुनर्जन्म न विद्यते॥

तस्मात् प्रतिग्रहं राज्ञो वर्ज्जयन्ति मनीषिणः।

दैवताद्यैर्द्विजाद्यैश्च पुनरप्याश्रयन्ति ते॥

तथैव राजमहिषी-राजामात्यपुरोहिताः।

पापेनार्द्धेन संयुक्ताः सर्व्वे ते राजधर्म्मिणः॥

अकृतात्मनां निन्दितराजप्रतिग्रहाचरणेन पुनर्जन्मश्रेष्ठवताम्। दैवताद्यैरित्यादि देवस्व-ब्राह्मणस्वाभ्यामपि वरमात्मा पोषणीयो न तु राजप्रतिग्रहेणेति तात्पर्य्यार्थः।

हारीतः,—

दशशूना-सहस्राणि अक्षा राजा करोति वै।

तान्येव कुरुते राज्ञौ घोरस्तस्य प्रतिग्रहः॥

अर्द्धार्द्धन्तु ततोऽमात्यः सेनानी-दण्डनायकौ।

तदर्द्धार्द्धमथार्द्धार्द्धमाश्रितोपाश्रितेषु च॥

अङ्गिराः,—

षण्मासान् यो द्विजो भुङ्क्ते शूद्रान्नं ज्ञानदुर्बलः।

जीवन् स तु भवेच्छूद्रो मृतः श्वा चाभिजायते॥

एते दोषा भवन्त्यत्र शूद्रादेव प्रतिग्रहे।

अनुग्रहप्रवृत्तस्य न दोषोऽङ्गिरसो मतम्॥

अनुग्रहप्रवृत्तस्य अग्निसखण्डस्याग्न्यादिः।

तथा,—

संस्कारैः शुद्धाति ह्यामं धान्यं तेन शुचि स्मृतम्।

तस्मादामं ग्रहीतव्यं मृत-सूतान्तरेष्वपि॥

पक्वान्नवर्ज्जं विप्रेभ्यो गोधान्यं क्षत्रियात्तथा ।

वैश्येभ्यः सर्व्वधान्यानि शूद्रात्सम्यास्तथा पणाः ॥

संस्कारैः कन्धनादिभिः, पणस्तासिकः कार्षिकः । एतच्चाप-द्गतस्येति कल्पतरुः ।

यमः,—

अनिर्द्दशाहे प्रेतस्य प्रतिगृह्णन्ति वै द्विजाः ।

समाः शतसहस्रन्तु नरकं पर्य्युपासते[१] ॥

प्रेतस्यानिर्द्दशाहे मृतकाशौचमध्ये ।

अपांक्तेयानुवृत्तौ—शूद्रयाजनानन्तरं मनुः,—

वेदविद्यापि विप्रोऽस्य लोभात् कृत्वा प्रतिग्रहम् ।

विनाशं व्रजति क्षिप्रमामपात्रमिवाम्भसि ॥

हारीतः,— पतित-दुष्कृतेभ्यः प्रतिगृह्णीतमस्वर्ग्यमयाज्ञिकम् । न तेन पुण्यार्थानाप्नोति । अतिदेशवादाभ्यामर्थात् स्वयं ब्राह्मण-मभिजित्य नामसमन्यस्मै दीयमानं प्रतिषिध्य स्वयं प्रतिगृह्णन् तस्य दुष्कृतमाप्नोति । आनृशंस्यार्थे प्रतिगृह्य तेभ्योऽकृत्वोपयोगानां सैन्यमसत्कार्य्यार्थे निमज्जत्यात्मार्थे निबध्नाति । एतैः प्रतिग्रहोप-ायैः प्रतिगृह्णन्निरयाय कल्पते ।

दुष्कृतेभ्यः उपपातकिभ्यः ।

बृहस्पतिः,—

असतोऽपीदमादाय साधुभ्यः संप्रयच्छति ।

सनकामिनमात्मानं सन्तारयन्ति दुष्कृतात् ॥

१ क्वचित् प्रतिपद्यते ।

यमः,— यस्तु लब्धं पुनर्दद्यात् प्रतिगृह्य यतस्ततः।
[1]यः संपृच्छति राजानं का वा भवति दक्षिणा॥
जानताऽजानता वापि यत्किञ्चिद्दुष्कृतं भवेत्।
सर्व्वन्तरति धर्म्मात्मा प्रतिगृह्य पुनर्ददत्॥
सक्ताः प्रतिग्रहे ये च न तु दाने कथञ्चन।
तेषां वैवस्वतः प्राह नतूर्द्धं गमनं क्वचित्॥

सक्ता आमन्त्रवन्तः।

मनुः,—

गुरून् भृत्यानुज्जिहीर्षन्नर्च्चिष्यन् देवतातिथीन्।
सर्व्वथा प्रतिगृह्णीयान्न तु तृप्येत् स्वयं ततः॥
गुरुषु न व्यतीतेषु विना वा तैर्गृहे वसन्।
आत्मनो वृत्तिमन्विच्छन् गृह्णीयात् साधुतः सदा॥
एतेष्वपि च कार्य्येषु समर्थः सन् प्रतिग्रहे।
नादद्यात् कुलटा-षण्ड-पतितेभ्यस्तथा द्विषः॥

गुरवः पित्रादयः। उज्जिहीर्षन् क्षुधाद्यवसन्नानुद्धर्त्तुमिच्छन्। अर्च्चिष्यन् देवतातिथीनिति गुरुभृत्यप्रतिसन्धानमावश्यकं कार्य्यमित्यर्थः। सर्व्वतः सद्भ्योऽसद्भ्यः। न तृप्येत स्वयं तत इति प्राणरक्षातिरिक्तं भोगादि तेन न कुर्य्यादित्यर्थः।

गुरुषु न व्यतीतेषु विना वा तैर्गृहे वसन्निति तैर्विना वा गृहे वसन् जीवत्स्वपि गुर्व्वादिषु प्रकारान्तरेण संभवद्वृत्तिषु आत्मवृत्त्यर्थं साधुतः साधुभ्यो धार्म्मिकेभ्य एव प्रतिगृह्णीयादित्यर्थः।

१. क्वचित् यमं पृच्छति

गौतमः,—

एधोदक-मूल-फल-मध्वभयाभ्युद्यत-शय्यासनावसथ-यान-पयो-दधि-धान्य-[1]सर्षप-प्रियङ्गु मार्ग-शाकानि अप्रणोद्यानि सर्व्वेभ्यः। पितृदेवगुरुभरणे चान्यवृत्तिश्चेन्नान्तरेण शूद्रात्।

अभ्युद्यतं अभिमुखं दातुमानीतमेधोदकादन्यदपि। एधादीनि दातुर्गृहादिवर्त्तीनि। अभ्युद्यतानि अयाचितान्यपि अप्रणोद्यानि न प्रत्याख्येयानि। आवसथो गृहं, मार्गं मृगमांसम्। पितृदेवगुरुभरणे चान्यदिति श्राद्धाद्यर्थमन्यदपि न प्रत्याख्येयमित्यर्थः।

सुमन्तुः,—

अभोज्यान्नानामपि पुष्प-फल-मूल-शाक-तृण-काष्ठ-धान्यानि क्षेत्रस्थान्यम्बु तड़ागे गोष्ठस्थ पय आददतामदोषः।

क्षेत्रमत्रोत्पत्तिस्थानम्।

आपस्तम्बः,—

मध्वन्नं मार्गं मांसं भूमिर्मूलफलानि रक्षा गव्यूतिर्निवेशनं युग्यं वासश्चोद्यतः[2] प्रतिगृह्याणि एतान्यपि नानन्तेवास्युद्धृतानि।

रक्षा त्राणम्। गव्यूतिर्गोमार्गः। उपनक्षणमेतावत्तौ, अन्तेवासी शिष्यः। तेनोद्धृतानि प्रापितानि।

हारीतः,—

आमं वा गृह्णीरन् कृतान्नस्य वा विरसस्य न सुभिक्षाः।

---

१ प्राप्नरीति क्वचित् पाठः।

२ (क) उपग्रहः।

स्वयमप्रवृत्तौ सुवर्णं वा दत्त्वा पशुं वा भुञ्जीत। नात्यन्त-मभ्यसेद्वृत्तिं प्राप्य विरमेत्।

आमं व्रीहितण्डुलादि कृतान्नस्येत्यन्तर्भावितस्तोकयोगे षष्ठी। तेन कृतान्नस्य विरसस्य लवणादिरसशून्यस्य स्तोकं यावत्कुटुम्ब-भरणोचितं तावदुद्यतोऽपि ग्राह्यमित्यर्थः। न सुभिक्षाः स्युर्यदि सुखेनान्नदातारो लोका न स्युस्तेन दुर्भिक्ष इत्यर्थः।

आदित्यपुराणे,—

अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः।
पृथिवीं नान्यदिच्छन्ति पावनं ह्येतदुत्तमम्॥

मनुः,—

एधोदकं मूलफलं अन्नमभ्युद्यतञ्च यत्।
सर्व्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम्॥
शय्यां कुशं गृहान् गन्धानपः पुष्पमणीन्दधि।
धान्यान् मत्स्यान् पयो मांसं शाकञ्चैव न निर्नुदेत्॥

अभयमत्र दृष्टान्तार्थमुक्तं तस्य मुख्यदानासम्भवात्। मणयो रत्नानि। पयो दुग्धम्। न निर्नुदेत् न त्यजेत्।

अङ्गिरो-बौधायनौ,—

खलक्षेत्रगतं धान्यं वापीकूपगतं जलम्।
अभोज्यादपि तद्ग्राह्यं[1] यच्च गोष्ठगतं पयः॥
विच्छिन्नेषु च पक्षेषु हविराग्रयणेषु च।

---

१ (क) तद्भोज्यम्।

दृष्टिं न विकृतां कुर्यात् सुकृतञ्च न लोपयेत् ।
पक्वान्नवर्ज्जं विप्रेभ्यो हविर्वा क्षत्रियादपि ।
वैश्यात्तु सर्व्वधान्यानि शूद्राद्ग्राह्यं न किञ्चन ॥
राज्ञ क्षेत्रगतं धान्यं खले वाऽथ गृहाद्बहिः ।
सर्व्वकालं गृहीतव्यं शूद्रेभ्योऽप्यङ्गिरोमतम् ॥
प्रतिवर्णमिदं दृष्टं प्रतिग्राह्यं द्विजोत्तमैः ।
तथापि च पयः पेयं द्विजेभ्योऽप्यङ्गिरोमतम् ॥

विच्छिन्नेषु पक्षेषु पक्वादिकरणकालेषु । आश्रयणादिषु दर्श-पौर्णमाससम्पत्ति-र्यावता भवति तावदर्थमभोज्यान्नादपि यथोक्त धान्यादि प्रतिग्राह्यमित्यर्थः । पयो जलमिह ।

तथा रागीकृतं धान्यं खलक्षेत्रेऽथवा भवेत् ।
सर्व्वकालं गृहीतव्यं शूद्रेभ्योऽप्यङ्गिरोमतम् ॥
सुपात्रे यत्तु विन्यस्तं सुवं तच्छुचि नित्यशः ।
पात्रान्तरगतं ग्राह्यं शूद्रात् स्वगृहमागतम् ॥
शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि ।
निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम् ॥
आमं मांसं मधु घृतं धानाः क्षीरमथौषधम् ।
गुड़-तक्र-रसाः ग्राह्या निवृत्तेनापि शूद्रतः ॥
शाकञ्च मत्स्य मूलानि कटुकाः शक्तवस्तिलाः ।
इक्षुः फलानि पिण्याकं प्रतिग्राह्याणि सर्व्वतः ॥

सर्व्वकालं सूतकादावपि । सर्व्वतः सर्व्ववर्णेभ्यः । कटुका-स्तण्डुलानां कणाः ।

याज्ञवल्क्यः,—

कुशाः शाकं पयो मत्स्या गन्धः पुष्पं दधि क्षितिः।
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च॥
अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः।
अन्यत्र कुलटा-षण्ड-पतितेभ्यस्तथा द्विषः॥

जाबालः,—

अभ्युद्यतं गृहे भैक्ष्यं ग्राह्यं तत् सर्व्वतः स्वयम्।
आत्मनैव शुभायातं नियुञ्ज्याद्भृतके परम्॥

अभ्युद्यतं दातुमुपक्रान्तम्। शुभायातमनिषिद्धकमायातं आत्मनैवोपयोक्तव्यं नियुञ्ज्याद्भृतके परमशुभायातमित्यर्थः।

मनुः,—

आहृतामुद्धृतां भिक्षां पुरस्तादप्रवेशिताम्।
मेने प्रजापतिर्ग्राह्यामपि दुष्कृतकर्म्मणः॥
नाश्नन्ति पितरस्तस्य दशवर्षाणि पञ्च च।
न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते॥
चिकित्सक-कृतघ्नानां शल्यहर्त्तुस्तु वार्द्धुषेः।
षण्डस्य कुलटायाश्च उद्यतामपि वर्ज्जयेत्॥

आहृता ग्राहकसमीपमानीता। भिक्षाऽत्र ग्रासमात्रम्। ग्रासप्रमाणा भिक्षा स्यादिति स्मृतेः। अप्रवेशिता साक्षात् परम्परया वा न याचिता। चिकित्सको वैद्यः। शल्यहर्त्ता शिरावेधः।

यमः,—

चिकित्सकस्य मृगयोर्वेश्यायाः कितवस्य च ।
षण्ड-सूतिकयोश्चैव उद्यतामपि वर्ज्जयेत् ॥

वशिष्ठः,—

अश्रद्दधानस्य भोक्तव्यं चौरस्यापि विशेषतः ।
नत्वेवं बहुयाज्यस्य यश्चोपनयते बहून् ॥
चिकित्सकस्य मृगयोः शल्यहर्त्तुश्च पाशिनः ।
षण्डस्य कुलटायाश्च उद्यताऽपि न गृह्यते ॥

पाशिनो वागुरिकस्य ।

तथा—शस्त्रं विषं सुरा चाप्रतिग्राह्याणि ब्राह्मणस्य ।

शङ्खलिखितौ,—

न मद्यं प्रतिगृह्णीयात् ।

आदित्यपुराणे,—

किं करिष्यति विप्रोऽसौ गृह्णन्नुभयतोमुखीम् ।
सहस्रं वारुणाः पाशाः क्षुरधाराग्निसन्निभाः ॥
पूर्णे वर्षसहस्रे च पाश एकः प्रमुच्यते ।
एतामवस्थामाप्नोति गृह्णन्नुभयतोमुखीम् ॥

असत्प्रतिग्रहाश्चान्येऽस्माभिर्दानरत्नाकरे देयादेयतरङ्गे प्रदर्शिताः ।

याज्ञवल्क्यः,—

विद्या-तपोभ्यां हीनेन न च ग्राह्यः प्रतिग्रहः ।
गृह्णन् प्रदातारमधो नयत्यात्मानमेव च ॥

मनुः,—

न द्रव्याणामविज्ञाय विधिं धर्म्यं(र्म्यं) प्रतिग्रहे।

प्राज्ञः प्रतिग्रहं दद्यादवसीदन्नपि क्षुधा॥

विधिर्मन्त्रप्रयोगाद्यात्मिका इतिकर्त्तव्यता।

तथा,—

हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् गृहम्।

अविद्वान् प्रतिगृह्णानो भस्मीभवति दारुवत्॥

हिरण्यमायुरन्नञ्च भूर्गौश्चाप्योषतस्तनुम्।

अश्वश्चक्षुस्त्वचं वासो घृतन्तेजस्तिलाः प्रजाः॥

अतपास्त्वनधीयानः प्रतिग्रहरुचिर्नरः[2]।

अम्भस्यश्मप्लवेनेव सह तेनैव मज्जति॥

तस्मादविद्वान् बिभियाद्यस्मात्तस्मात् प्रतिग्रहात्।

स्वल्पकेनापि गृह्णन् हि पङ्के गौरिव सीदति॥

प्रतिग्रहसमर्थोऽपि प्रसङ्गन्तत्र वर्ज्जयेत्।

प्रतिग्रहेण ह्यस्याशु ब्राह्मं तेजः प्रशाम्यति॥

हिरण्यान्ने आयुरुषतो दहतः, भू-गावौ तनुमुषतो, यस्मात्तस्मा-दपि सुविशुद्धादपि। प्रसङ्गोऽभ्यासः।

याज्ञवल्क्यः,—

प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम्।

ये लोका दानशीलानां स तानाप्नोति पुष्कलान्॥

१ मूलपुस्तके वाप्योषतः। २ (ख) द्विजः।

यमः,—

सर्व्वदेवाभिगमनात् सर्व्वयज्ञनिषेवणात्।
गवां कोटिप्रदानाच्च श्रेयस्तस्य विनिग्रहः॥
यस्तु याचनको नित्यं न स स्वर्गस्य भाजनम्।
उद्वेजयति भूतानि यथा चौरस्तथैव सः॥

व्यासः,—

प्रतिग्रहरुचिर्न स्यात् याचार्थन्तु समाहरेत्।
स्थित्यर्थादधिकं गृह्णन् ब्राह्मणो यात्यधोगतिम्॥

महाभारते,—

धर्म्मार्थं यस्य वित्तेहा तस्यानीहा गरीयसी।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्॥

धर्म्मार्थं आवश्यककर्म्मातिरिक्त-कर्म्मार्थमित्यर्थः।

प्रयागतीर्थे प्रतिग्रहे तीर्थस्य निष्फलतामुक्त्वा—

मत्स्यपुराणे,—

तस्मात्तीर्थे न गृह्णीयात् पुण्येष्वायतनेषु च।
निमित्तेषु च सर्व्वेषु अप्रमत्तो भवेद्द्विजः॥

॥ इति गृहस्थरत्नाकरे प्रतिग्रह-तरङ्गः॥

## अथ क्षत्रिय-वैश्य-कर्म्म-धर्म्मवृत्तयः।

तत्र मनुः,—

त्रयो धर्म्मा निवर्त्तन्ते ब्राह्मणात् क्षत्रियं प्रति।
अध्यापनं याजनञ्च तृतीयश्च प्रतिग्रहः॥
वैश्यं प्रति तथैवैते निवर्त्तेरन्निति स्थितिः।
न तौ प्रति हि तान् धर्म्मान् मनुराह प्रजापतिः॥
शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्-पशु-कृषिर्विशः।
आजीवनार्थं धर्म्मस्तु दानमध्ययनं यजिः॥
वेदाभ्यासो ब्राह्मणस्य रक्षणं क्षत्रियस्य च।
वार्त्ता: कर्म्मैव वैश्यस्य विशिष्टानि स्वकर्म्मसु॥

ब्राह्मणस्येमे ब्राह्मणाः। वार्त्ता कृषि-पशुपाल्यवाणिज्याः। विशिष्टान्युत्कृष्टानि।

पराशरः,—क्षत्रियेण प्रजाः पाल्याः शस्त्रपाणिः प्रचण्डवान्।
निर्ज्जित्य परसैन्यानि क्षितिं धर्म्मेण पालयेत्॥
लौहकर्म्म तथा रत्न-पशूनां परिपालनम्।
वाणिज्य-कृषिधर्म्मान्नं वैश्यवृत्तिरुदाहृता॥

प्रचण्डवान् पुरुषसहायवान्।

दानमध्ययनं यजिरित्यनुवृत्तौ शङ्खलिखितौ।

पूर्व्वधर्म्मा एव क्षत्रियः, शस्त्रार्ज्जन-क्षतत्राण-व्यवहार-दण्डरक्षणानुशासनमिति वृत्तिः।

पूर्व्वधर्म्मा एव वैश्यः, कृषिः पशुपाल्यं वाणिज्यं योनिपोषणं वृत्तिप्रयोग इति वृत्तिः।

पूर्व्वधर्म्मोऽध्ययन-यज्ञदानादिः, शस्त्रेणार्ज्जनं शस्त्रार्ज्जनं, क्षत-त्राणं क्षतादभिभवाद्रक्षणम् । व्यवहारो वादिनोः शङ्कापकरणम् । अनुशासनं वर्णानां निजधर्म्मेण व्यवस्थापनम् । योनिपोषण वृद्ध्यर्थं वड़वादिपोषणम् । पाशुपाल्यं वेतनेन पशुरक्षणम् ।

हारीतः,— धनुर्वेदव्रतस्नातः क्षत्रियोऽध्ययन-यजन-दान धर्म्मशिष्टपरिपालनाशिष्टनिग्रहरतोऽभिजितषड्भागवृत्तिर्व्रतैकदेशी । वैश्योऽध्ययन-यजनदानधर्म्मकृषि-पशुपाल्य-वणिक्वृत्तिः ।

धनुःस्नातः अधिगतधनुर्वेदविद्यः । एवं वेदव्रतयोरपि । अभिजितानां शत्रूणां भूम्यादीनां षड्भागग्रहणम् ।

देवलः,—

क्षत्रधर्म्मोऽध्ययनेषु दानैर्देवपितृपूजनम् । ब्राह्मणशुश्रूषणं वैश्य-शूद्रपरिपालनम् । वणिक्शुल्कोपजीवनं वर्णाश्रमव्यवहारसंस्थापनं पापनिग्रहो गुणवत्परिग्रहो व्यवहारार्ज्जनं धर्म्मचरितानुपालनं हस्त्य-श्वरथप्रवरणशिक्षाऽभ्यासः । शस्त्रोपायाश्रयत्वं कोषदण्डावेक्षणम् । परचक्रापणाटवीतस्करदह्यमानाप्न कुलीनाध्यक्षप्रतिषेधलब्ध शूर-मिर्जैश्वरदण्डप्रणयनं धर्म्मविशुद्धौ चाधैर्य्यमुत्साहः । शौर्य्यं शक्तत्वं अयाचनमिति ।

वैश्यधर्म्मोऽध्ययनयजनप्रदानैर्धर्म्मानुष्ठानं ब्राह्मणक्षत्रियशुश्रू-षणम् । पापवर्ज्जनं कलत्रपोषणं कर्षणं पशुपालनं भारोद्वहन-पण्यव्यवहार-नर्त्तन-गायन-तालावतरण-रङ्गोपजीवनञ्चेति ।

॥ इति गृहस्थरत्नाकरे क्षत्रियवैश्यकर्म्म-धर्म्मतरङ्गः ॥

## अथ द्रव्याणां धर्म्याधर्म्यस्वत्वानि।

तत्र मनुः,—

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः।
प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव॥

वित्तागमो धनोपायः, दायः कुलक्रमागतं धनम्। लाभो निध्यादिलाभः। जयोऽत्र शत्रोरभिभवः[1]। प्रयोगः कुसीदम्। कर्म्मयोगः कृषिवाणिज्यादिः।

गौतमः,— स्वामी रिक्थ-क्रय-संविभाग-परिग्रहाधिगमेषु। ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्व्विष्टं वैश्य-शूद्रयोः।

स्वामी भवतीति शेषः। संविभागो भर्त्तृदाय इति भर्त्तृयज्ञः। परिग्रहः अनन्यपूर्व्वारण्यमहिष्यादिपरिग्रहः। अधिगम आकराधिलब्धः। एतानि सर्व्ववर्णतुल्यानि। ब्राह्मणस्याधिकमसाधारणं प्रतिग्रहादि। विजितं संग्रामे अधिकं क्षत्रियस्य। निर्विष्टमिह कर्म्मचरणेनोपात्तम्।

नारदः,—

धनमूलाः क्रियाः सर्व्वाः यत्नस्तस्यार्ज्जने[2] मतः।
रक्षणं वर्द्धनं भोग इति तस्य विधिः क्रमात्॥
तत् पुनस्त्रिविधं ज्ञेयं शुक्लं शवलमेव च।
कृष्णञ्च तस्य विज्ञेयो विभागः सप्तधा पुनः॥
श्रुत-शौर्य्य-तपः-कन्या-शिष्य-याज्यान्वयागतम्।
धनं सप्तविधं शुक्लमुदयस्तस्य तद्विधः॥

१ क्वचित् तत्साधने। २ (क), उद्योगः।

श्रुतागतमध्ययनादिलब्धम् । शौर्य्यगतं जयेन लब्धम् । तपसागतं जपहोमदेवार्चनादिलब्धम् । कन्यागतं कन्यया सह श्वशुरादितो लब्धम् । शिष्यागतं शिष्याल्लब्धं गुरुदक्षिणादि । याज्यागतं ऋत्विक्कर्म्मणा लब्धम् । अन्वयागतं दायलब्धम् । उदयः फलं । तद्विधः शुद्धः ।

तथा,—

कुसीद-कृषि-वाणिज्य-शुल्कशिल्पानुवृत्तिभिः ।
कृतोपकारादाप्तञ्च शवलं समुदाहृतम् ॥

अनुवृत्तिः सेवा ।

तथा,—

पार्श्विकद्यूतचौर्य्यार्त्ति प्रतिरूपकसाहसैः ।
व्याजेनोपार्ज्जितं यच्च तत् कृष्णं समुदाहृतम् ॥

पार्श्विकं उत्कोचादिलब्धं, आर्त्तिः परपीड़ा । प्रतिरूपकं द्रव्याभासः, साहसः चौर्य्यम् । व्याजः वहिश्चयाचादिव्याप्तोपद्रव्य-मिश्रीकरणम् ।

तथा,— तेन क्रयो विक्रयश्च दानं ग्रहणमेव च ।
विविधाश्च प्रवर्त्तन्ते क्रियाः संभोग एव च ॥

तेन त्रिविधेन शुक्लादिना ।

तथा,—

यथाविधेन द्रव्येण यत् किञ्चित् कुरुते नरः ।
तथाविधमवाप्नोति स फलं प्रेत्य चेह च ॥
तत् पुनर्द्वादशविधं प्रतिवर्णाश्रयात् स्मृतम् ।

साधारणं स्यात्त्रिविधं शेषं नवविधं स्मृतम् ॥

शेषमसाधारणक्रमागतं प्रीतिदायप्राप्तञ्च सह भार्य्ययागतम्।

अविशेषेण वर्णानां सर्व्वथा त्रिविधं धनम्।
वैशेषिकं धनं विद्याद्ब्राह्मणस्य त्रिलक्षणम्[1] ॥

प्रतिग्रहेण यल्लब्धं याज्यतः शिष्यतस्तथा।
त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम् ॥

युद्धोपलब्धं कारात्र दण्डाच्च व्यवहारतः।

करेण लब्धः कारः कारशब्दः करपरः। व्यवहारतो न्यायात् तेनार्हो दण्ड इत्यर्थः।

तथा,—

वैशेषिकं धनं ज्ञेयं वैश्यस्यापि त्रिलक्षणम्।
कृषिगोरक्षवाणिज्यैः शूद्रस्यैषामनुग्रहात्[2] ॥

अनुग्रहात् शुश्रूषाहेतुकात्। एतच्च नवविधत्वं द्विजाति-रूप-वर्णत्रयविषयम्। शूद्रे तु शुश्रूषाजनितानुग्रहादेव लब्धमसाधारणम्।

तथा,—

सर्व्वेषामेव वर्णानामेष धर्म्यो धनागमः।
विपर्य्ययादधर्म्यः स्यान्न चेदापद्गरीयसी ॥

वृहस्पतिः,—

वृत्त्युपात्तेन लब्धार्थं कुर्य्यात् पालनवर्द्धनम्।
भोगञ्च बन्धुभिः सार्द्धं दीनानाथार्थिभिस्तथा ॥

१ मूले शुभं त्रिधा। २ (ग) शूद्रस्यापि त्वनुग्रहात्।

वृत्त्युपात्तेन विहितवृत्त्युपात्तेन ।

विष्णुपुराणे,—

पाकसंस्था हविःसंस्थाः सोमसंस्थाश्च संस्थिताः ।
धने यतो मनुष्याणां यतेतातो धनार्ज्जने ॥

महाभारते,—

धनेन तु विहीनस्य पुरुषस्याल्पमेधसः ।
उच्छिद्यन्ते क्रियाः सर्व्वा ग्रीष्मे कुसरितो यथा ॥
दुर्भिक्षादेव दुर्भिक्षं क्लेशात् क्लेशं भयाद्भयम् ।
मृतेभ्यः प्रमृता यान्ति दरिद्राः पापकारिणः ॥
उत्सवादुत्सवं यान्ति स्वर्गात् स्वर्गं सुखात् सुखम् ।
श्रद्दधानाश्च दान्ताश्च धनाढ्याः शुभकारिणः ॥
अहिरण्यमदासीकमन्पानाढ्यमगोरसम् ।
गृहं कृपणवृत्तीनां नरकस्यापरो विधिः ॥
धर्म्मार्थः समाहार्य्यो धर्म्मलब्धं त्रिधा धनम् ।
कर्त्तव्यं धर्म्मपरमं मानवेन प्रयत्नतः ॥
एकेनांशेन धर्म्मस्तु कर्त्तव्यो भूतिमिच्छता ।
एकेनांशेन कामस्याप्येकमंशं विवर्द्धयेत् ॥

मार्कण्डेयपुराणे,—

पादेन तस्य पारक्यं कुर्य्यात् सञ्चयमात्मवान् ।
अर्द्धेन चात्मभरणं नित्यं नैमित्तिकन्तथा ॥
पादञ्चार्द्धार्द्धमर्थस्य मूलभूतं विवर्द्धयेत् ।
एवञ्चाचरतः पुत्र अर्थः साफल्यमृच्छति ॥

भविष्यपुराणे,—

वित्तसाध्यं न यः कुर्य्याद्धर्म्मंमाढ्योपि हि द्विजः।
न तत् फलमवाप्नोति प्रलोभाक्रान्तमानसः॥
तस्मात्त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत्।
भागद्वयञ्च धर्म्मार्थमनित्यं जीवनं यतः॥

॥ इति गृहस्थरत्नाकरे स्वत्वास्वत्वतरङ्गः॥

---

## अथ शूद्र-धर्म्म-कर्म्मवृत्तयः।

तत्र मनुः,—

विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम्।
शुश्रूषैव तु शूद्रस्य धर्म्मो निःश्रेयसः परः॥
शुचिरुत्कृष्टवर्णेषु मृदुवागनहङ्कृतः।
ब्राह्मणापाश्रयो नित्यमुत्कृष्टजातिनोऽश्नुते॥

उत्कृष्टवर्णेषु क्षत्रियवैश्यात्मकेषु ब्राह्मणापाश्रयः वृत्त्यर्थं क्षत्रियादिशुश्रूषापरोऽपि ब्राह्मणे निवेदितात्मा जातितः उत्कृष्ट-जातित उत्कृष्टः। उत्सृष्टमिति क्वचित् पाठः। उत्सृष्ट-मुत्कृष्टम्।

वृहस्पतिः,—

शौचं ब्राह्मणशुश्रूषा मन्युमक्रोध एव च।
शूद्रकर्म्म तथा मन्त्रो नमस्कारोऽत्र दर्शितः॥

हारीतः,—

न शूद्राय वृत्तिं प्राहुः त्रिवर्णशुश्रूषा वाऽस्य वृत्तिः। दानधर्म्म इत्येके।

वशिष्ठः,— एतेषां परिचर्य्या शूद्रस्य। अनियता वृत्तिः। अनियतकेशवेशाः। सर्व्वेषां वा मुक्तशिखावर्ज्जम्।

एतेषां त्रैवर्णिकानां अनियता एतावद्दातव्यमिति नियम-शून्या। अनियतकेशवेशाः। अनियताः केशाः वेशाः शूद्रस्ये-त्यन्वयः। सर्व्वेषां ब्राह्मणादीनां मुक्तशिखावर्ज्जं मुक्तशिखत्वं तैरपि न कार्य्यमित्यर्थः।

मनुः,—

शूद्रस्तु वृत्तिमाकाङ्क्षन् क्षत्रमाराधयेद्यदि।
धनिनं वाऽप्युपाराध्य वैश्यं शूद्रो जिजीविषेत्॥
स्वर्गार्थमुभयार्थं वा [१]विप्रमाराधयेत्तु सः।
जातब्राह्मणशब्दो हि स ह्यस्य कृतकृत्यता॥

तथा,—

विप्रसेवैव शूद्रस्य विशिष्टं कर्म्म कीर्त्यते।
यत्ततोऽन्यद्धि कुरुते तद्भवत्यस्य निष्फलम्॥
कल्प्यते तस्य तैर्वृत्तिः स्वकुटुम्बाद्यथार्हतः।
शक्तिश्चाप्यवेक्ष्य दाक्ष्यञ्च भृत्यानाञ्च परिग्रहम्॥
उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च।
पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः॥

---

१ (ग) पुस्तके ब्राह्मणानेव वाधयेत्।

यातंब्राह्मणशब्दस्य यातः प्राप्तो ब्राह्मणशब्दो ब्राह्मणशूश्रूष-कोऽयमित्याकारः शब्दो येन स तथा। ब्राह्मणसेवनादन्य-द्व्रतोपवासादि। तैर्द्विजातिभिः। स्वकुटुम्बात् कुटुम्बार्थधनात्। शक्तितः सामर्थ्यात्। दाक्ष्यं कार्य्येषु पाटवम्। भृत्यानाञ्च परिग्रहं पुत्रदारादि, उच्छिष्टं भुक्तशेषम्। एतच्चोच्छिष्टाशनं अकृतदार-परिग्रहस्य। इतरस्य पाकयज्ञाधिकारात्। पुलाका इक्षासार-धान्यानि। परिच्छदाः छत्रोपानहादयः।

गोतमः,— शूद्रश्चतुर्थो वर्ण एकजातिः। तस्यापि सत्यम-सत्यमक्रोधः शौचमाचमनार्थे पाणिपादप्रक्षालनमेवैके। श्राद्धकर्म भृत्यभरणमुदारवृत्तिः। परिचर्य्या चोत्तरेषां तेभ्यो वृत्तिं लिप्सेत। जीर्णान्युपानच्छत्रवासकूर्चादीनि। उच्छिष्टाशनं शिल्पवृत्तिश्च पश्चार्य्यमाश्रयेत्॥

कर्त्तव्यस्तेन चीर्णोऽपि तेन चोत्तरतस्तदर्थोऽस्य निचयः स्यात् अनुज्ञातोऽस्य नमस्कारो मन्त्रः पाकयज्ञैः 'स्वयं यजेतेत्येके।

एकजातिरेकजन्मा उपनयनात्मकद्वितीयजन्मविरहात्। आच-मनार्थे आचमनेतिकर्त्तव्यतायां पाणिपादप्रक्षालनमेवेत्येवकारबलेन मुखादिस्पर्शननिवृत्तिः। एके इतिवचनाद्गोतममते मुखादिस्पर्शः सदार्य्यपरिगृहीतशूद्रविषयः।

तदाह बौधायनः।

शूद्राणामार्य्याधिष्ठानात् मासि मासि वापनमार्यवदाचमन-कल्प आचमनेतिकर्त्तव्यता। उपवीतवस्त्रविन्यासादि। आर्य्य-परतन्त्राणां शिल्पजीविनां आर्य्यवदित्यादि।

यथा द्विजानामास्यस्पर्शसहितश्चाचमनविधिरेवं शूद्राणान्त-दाश्रितानामित्यर्थः ।

तेनाचमनार्थं आचमनकार्य्ये शूद्रस्य जलाद्याहरणमन्तरेणैव पाणिपादप्रक्षालनेनैवाचमनकार्य्यसिद्धिरिति कल्पतरुकारादीनां व्यवस्था न युक्ता आचारविरोधात् वचनविरोधाच्च ।

उत्तरेषामुत्कृष्टानां ब्राह्मणादीनां कूर्चतृणमयमासनं तेनार्षेण क्षीणो वृत्तिहीनः । तेन शूद्र उत्तर [1]आर्षः क्षीण इत्यनुषज्यते । तदर्थस्तार्य्यप्रयोजकः । अस्य शूद्रस्य निचयो धनसञ्चयः, स्वयं स्वयमेव न पत्नीपुत्रद्वारेण । एके स्वयमित्युक्तेर्गौतममते ब्राह्मणद्वारा पाकयज्ञान् कारयेत् । प्रतिष्ठाहोमादौ तथा-दर्शनात् । एष विकल्पो व्यवस्थितः— अशक्तावन्यद्वारा शक्तौ तु स्वयमेव । अथवा सच्छूद्रविषयतया व्यवस्थितविषयः ।

मनुः,—

शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनाम् ।
वैश्यवच्छौचकल्पस्तु द्विजोच्छिष्टञ्च भोजनम् ॥

न्यायवर्त्तिनामतिशयित-द्विजशुश्रूषापराणाम् । शौचकल्पः सूतकापगमाद्याचारकल्पः ।

याज्ञवल्क्यः,—

शूद्रस्य द्विजशुश्रूषा तयाऽजीवन् वणिग् भवेत् ।
शिल्पैर्वा विविधैर्जीवेत् द्विजातिहितमाचरन् ॥
भार्य्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियारतः ।

१ (ख) आचार्य्यः ।

नमस्कारेण मन्त्रेण पञ्चयज्ञान् हापयेत् ॥

भार्य्याहविः स्वभार्य्याहविः। श्राद्धक्रिया श्राद्धकरणम्। नमस्कारेण मन्त्रेण नम इत्यनेनैव पूज्यवाचकचतुर्थ्यन्तपद-सहितेन।

मनुः,—

अशक्नुवंस्तु शुश्रूषां कर्त्तुं शूद्रो द्विजन्मनाम्।
पुत्रदारात्ययं प्राप्तो जीवेत् कारुककर्म्मभिः॥
यैः कर्म्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः।
तानि कारुककर्म्माणि शिल्पानि विविधानि च॥

अत्ययोऽत्यन्तपीड़ा।

पराशरः,—

लवणं मधु तक्रं वा दधि मद्यं घृतं पयः।
न दुष्येत् शूद्रजातीनां कश्चित् सर्व्वेषु विक्रय..

कालिकापुराणे,—

विक्रयं सर्व्वपण्यानां कुर्व्वन् शूद्रो न दोषभाक्।
मधु-चर्म्म-सुरा-लाक्षामुक्ता मांसञ्च पञ्चमम्॥

अयञ्च सर्व्वनिषेधः शूद्रस्यानापदि, नात्यन्तापदि बोद्धव्य इति कल्पतरुः।

मद्ये विधिनिषेधयोर्दर्शनात्तादृशविषयपरमेवेदमुचितमिति तु प्रमाणविदः।

देवलः,—

लाक्षामाञ्जिष्ठमांसानि मधुक्षौद्रविषाणि च।

आजीवन् वृषलोऽप्यार्य्यैः कर्म्मणा तेन वर्ज्जितम् ॥

अयञ्च विधिनिषेधः सच्छूद्रस्य । पूर्व्वं लवणं मधुमद्य-मित्यनुज्ञानमसच्छूद्रविषयमिति पारिजातः । इदमपि मधुमात्र एवेति प्रमाणविदः ।

शूद्रं प्रकृत्य विष्णुपुराणे,—

भक्ष्याभक्ष्येषु नास्यास्ति पेयापेयेषु वै पुनः ।
नियमो मुनिशार्दूल तेनासौ साध्वितीरितम् ॥

एतच्चावश्यं सङ्कोचनीयं काकादिभक्षणस्य शूद्रेऽपि शिष्टा-चारात् प्रायश्चित्तोपदेशान्निषेधाच्च ।

व्यासः,— न चेह शूद्रः पततीति निश्चयो ।
न चैव संस्कारमथार्हतीति ॥
श्रुतिप्रयुक्तं न च धर्म्ममश्नुते ।
न चैव धर्मात् प्रतिषेधनं श्रुतौ ॥

न चैव शूद्रः पततीति मांसादिविक्रयेणापि । संस्कारमिहोप-नयनं श्रुतिप्रयुक्तं श्रुतिबोध्यमग्निहोत्रादि । धर्म्मात् श्रुतिकथितात् ।

मनुः,—

न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति ।
नास्याधिकारो धर्म्मेऽस्ति न धर्म्मात् प्रतिषेधनम् ॥
धर्म्मेप्सवस्तु धर्म्मज्ञाः सतां धर्म्ममनुष्ठिताः ।
मन्त्रवर्ज्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥
यथा यथा हि सद्वृत्तमातिष्ठत्यनसूयकः ।
तथा-तथेमञ्चामुञ्च लोकमाप्नोत्यनिन्दितः ॥

अक्षेनापि हि शूद्रेण न कार्य्यो धनसञ्चयः।
शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते॥

धर्म्मे श्रौते धर्म्मात् श्रौतात्। मन्त्रवर्ज्जं वैदिकमन्त्रवर्ज्जम्।

मनुः,—

अनार्य्यमार्य्यकर्म्माणमार्य्यं वाऽनार्य्यकर्म्मिणम्।
संप्रधार्य्याब्रवीद्धाता न समौ नासमाविति॥

अत्र समत्वविरह आर्य्यस्य उत्कृष्टजातीयत्वात्। असमत्वविरह आर्य्यस्यापि नीचकर्म्मकारित्वात्॥ तेन तस्योत्तरेण शुश्रूषादिकं न कार्य्यमित्यर्थः।

शूद्राधिकारे नरसिंहपुराणे,—

अयाचितः प्रदाता स्यात् कृषिवृत्तिं समाश्रयेत्।
पुराणं शृणुयान्नित्यं नरसिंहस्य पूजनम्॥

कुर्य्यादिति शेषः।

महाभारते,—

दूराच्छूद्रेणोपचर्य्यो ब्राह्मणोऽग्निरिव ज्वलन्।
संस्पृश्य परिचर्य्यस्तु वैश्येन क्षत्रियेण च॥

पैठीनसिः,—

ब्राह्मं प्राजापत्यं वा स्थानं ब्राह्मणस्य। ऐन्द्रं राजन्यस्य। मारुतं वैश्यस्य। गान्धर्व्वं शूद्रस्य।

स्वे स्वे कर्म्मण्यभिरताः स्वं स्वं स्थानं व्रजन्ति ते।

॥ इति गृहस्थरत्नाकरे शूद्रधर्म्मकर्म्मवर्त्तितरङ्गः॥

———

## अथ स्नातकव्रतानि ।

तत्र मनुः,—

ततोऽन्यतमया वृत्त्या जीवंस्तु स्नातको द्विजः ।
स्वर्गायुष्ययशस्यानि व्रतानीमानि धारयेत् ॥
वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः ।
तद्धि कुर्व्वन् यथाशक्ति प्राप्नोति परमां गतिम् ॥

स्वकमाश्रमविहितं, नित्यं यावज्जीवम् । अतन्द्रितः अनालस्यः । यथाशक्ति-असम्भवे किञ्चिदङ्गहीनमपि । एतच्च नित्यविषयम् ।

व्यासः,—

वर्णाश्रमाश्रितो धर्म्मो वेदकर्म्माश्रितो मतः ।
विद्वान् हि वैदिकं कर्म्म कुर्व्वाणोऽभीष्टमश्नुते ॥
प्रमाणं[१] वैदिकं कर्म्म गुणनिष्ठं[२] तथेतरत् ।
गुणभूतोऽतिप्रमाणं वाधयन् यात्यधोगतिम् ॥

वेदकर्म्माश्रितो वैदिककर्म्मणि गुणभूतः । इतरत् स्मार्त्तादि गुणनिष्ठम् स्मृत्याचारनिष्ठम् । अतिप्रमाणं वेदम् ।

मनुः,—

वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाः क्षमाः ।
नाशयन्त्याशु पापानि महापातकजान्यपि ॥

वेदाभ्यासोऽत्र ब्रह्मयज्ञादिः ।

विष्णुः,—

श्रुतिस्मृत्युदितः सम्यक् साधुभिर्यश्च सेवितः ।

१ (ग) पुस्तके गुणभूतं ।

तमाचारं निषेवेत धर्म्मकामो जितेन्द्रियः ॥

सत्कर्म्मोपदेशे दक्षः,—

सन्ध्या स्नानं जपो होमः स्वाध्यायो देवतार्च्चनम् ।
वैश्वदेवेक्षणातिथ्यमुद्धृतञ्चाथ शक्तितः ॥

आतिथ्यासम्भवे स्तोकमप्यन्नमुद्धरणीयम् ।

संवर्त्तः,—

कुर्य्याद्गृह्याणि कर्म्माणि स्वभार्य्यापोषणं परम् ॥
ऋतुकालाभिगामी स्यात् प्राप्नोति परमां गतिम् ।

परं श्रेष्ठं धर्ममाहुरिति शेषः । इति लक्ष्मीधरः ।

सुमन्तुः,—

शेषान्नमृतुगामित्वं पञ्चयज्ञाः स्वकर्म्म च ।
तुल्यैश्च सह सम्बन्धो गृहस्थस्य विधीयते ॥

तुल्यैश्च सह सम्बन्धोऽसत्युत्तमे ।

मनुः,—

उत्तमैरुत्तमैर्नित्यं सम्बन्धानाचरेत् सह ।
निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत् ॥
उत्तमानुत्तमान् गच्छन् हीनान् हीनांश्च वर्ज्जयन् ।
ब्राह्मणः श्रेष्ठतामेति प्रत्यवायेन शूद्रताम् ॥

प्रत्यवायोऽत्र विपरीतकरणम् ।

तथा,—

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यति ॥

न रिष्यति न बाध्यते। इदं वैकल्पिकविषयम्। येन धर्म्मा।

तथा,— इन्द्रियार्थेषु सर्व्वेषु न प्रसज्येत कामतः।

अतिप्रसक्तिश्चैतेषां मनसा संनिवर्त्तयेत्॥

बृहस्पतिः,—

सख्यं समधिकैः कुर्य्यादुपेयादीश्वरं सदा।

वैरं निर्हेतुकं वादं न कुर्य्यात् केनचित् सह॥

ज्ञाति-बन्धु-विवाह्येभ्यो मित्रमभ्यधिकं स्मृतम्।

समानमसमानं वा प्रकुर्व्वीत प्रयत्नतः॥

शोकाराति-भय-त्राण प्रीति-विस्रम्भभाजनम्।

आपद्गतस्य मित्रस्य लोके बह्वधिकस्य तत्॥

असमानोऽधिविस्रम्भो विश्वासस्तस्य गर्हितः।

वशिष्ठः,— आहार-निर्हार विहार-योगाः

सुसंवृता धर्म्मविदा तु कार्य्याः।

वाग्बुद्धिवीर्य्याणि तपस्तथैव

धनायुषी गुप्ततमे च कार्य्ये॥

निर्हारो मूत्रपुरीषोत्सर्गः। विहारोऽत्र स्त्रीसेवा। योगः समाधिः। वाग्गुप्तिरसत्प्रलापत्यागेन। बुद्धिगुप्तिरसद्बुद्धिवर्ज्जनेन। वीर्य्यगुप्तिरस्थाने तन्निमियोगविरहः। तपोगुप्तिस्तपसि विस्मयाकरणेन तद्रक्षा। गुप्ततमे अप्रकाशिततमे।

दक्षः,—

आयुर्वित्तं गृहच्छिद्रं मन्त्रो मैथुनमौषधम्।

तपो धर्म्मो विमानश्च नव गोप्यानि सर्व्वदा॥

प्रकाश्यानि चेत्युक्ता स एव—

प्रायोग्यमृणसंशुद्धी च दानाऽधमन-विक्रयाः।
कन्यादानं वृषोत्सर्गो रहःपापञ्च कुत्सितम्॥

गृहच्छिद्रमनर्थहेतुकमभ्यसूयादि। प्रायोग्यं वृद्ध्या धनप्रयोगः। ऋणमृणग्रहणम्। संशुद्धिस्तन्निस्तारः। आधमनं भूम्यादेः स्थावरस्याधिः। दानस्योक्तत्वेऽपि कन्यादानस्य पुनर्ग्रहणमत्यन्तप्रकाशनार्थम्।

विष्णुः,—

वयोऽनुरूपञ्च वेषं कुर्य्याच्छ्रुतस्याभिजनस्य च।

मनुः,—

वयसः कर्म्मणोऽर्थस्य श्रुतस्याभिजनस्य च।
वेषवाग्बुद्धिसारूप्यमाचरन् विचरेदिह॥

तेन वयसाद्युचिता वेषादयः करणीया इत्यर्थः। वेषो वस्त्रालङ्कारादिधारणम्। सारूप्यमनौचित्यम्।

मङ्गलाचारयुक्तः स्यात्प्रयतात्मा जितेन्द्रियः।
जपेच्च जुहुयाच्चैव नित्यमग्निमतन्द्रितः॥
मङ्गलाचारयुक्तानां नित्यञ्च प्रयतात्मनाम्।
जपतां जुह्वताञ्चैव विनिपातो न विद्यते॥

मङ्गलाचार उपसि गोरोचनालम्भनादिः। विनिपातोऽनिष्टसम्बन्धः।

देवीपुराणे,—

पठने यजने सक्तो लेखने श्रवणे तथा

नित्यं दैवतपूजायामौषधव्यञ्जने तथा ॥
जपहोमार्च्चने सक्तः प्राप्नोति परमं सुखम् ।

विष्णुः,—

गावः पवित्रं माङ्गल्यं गोषु लोकाः प्रतिष्ठिताः ।
गावो वितन्वते यज्ञं गावः सर्व्वाघसूदनाः ॥
गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना ।
षडङ्गमेतत् परमं माङ्गल्यं सर्व्वदा गवाम् ॥
शृङ्गोदकं गवां पुण्यं सर्व्वाघविनिसूदनम् ।

रत्नोपानि-मजावलि-वृष-सुवर्ण-रजत-ताम्र-चन्दन-मणयः, सर्पिः-सर्षप-क्षौम-कृष्णाजिन-नाग-यव-लाजादर्श-प्रियङ्गु-रोचना मनःशिलाः । कपिला गौः पूर्णकुम्भ-शमी-नाग-दर्भपुष्पाणि । सदा स्वाध्यायो धन्यः । त्रयाणां वर्णानां पूर्व्वरात्रौ जागरणम् ।

नागो हस्ती, दर्भः कुशः ।

पृथ्वीं प्रति लक्ष्मीवाक्ये विष्णुः,—

वसाम्यथार्क्के च निशाकरे च
तारागणाढ्ये गगने विमेघे ।
तथा लसल्लम्बपयोधरे च
शक्रायुधाढ्ये सतडित्प्रकाशे ॥
तथा सुवर्णे विमले च रौप्ये
रत्नेषु वस्त्रेष्वमलेषु भूमौ ।
प्रासादमालासु च पाण्डरासु
देवालयेषु ध्वजभूषितेषु ॥

सद्यःकृते वाऽप्यथ गोमयेन
मत्ते गजेन्द्रे तुरगे प्रहृष्टे।
वृषे तथा दर्पसमन्विते च
विप्रे तथैवाध्ययनोपपन्ने[1] ॥
सिंहासने चामलके च विल्वे
चक्रे च शङ्खे च सदैव पद्मे।
दीप्ते कृताशे विमले च खड्गे
आदर्शविम्बे च सदा स्थिताऽहम् ॥
पूर्णोदकुम्भेषु सचामरेषु
सतालवृन्तेषु विभूषणेषु।
भृङ्गारपत्रेषु मनोरमेषु
मृदि स्थिताऽहञ्च नवोद्धृतायाम् ॥
क्षीरे तथा सर्पिषि शाद्वलेषु
क्षौद्रे तथा दध्नि पुरन्ध्रिगात्रे।
देहे कुमार्य्याश्च तथा सुराणाम्
तपस्विनां यज्ञकृताञ्च देहे ॥
शूरे च संग्रामविनिर्गतेऽहम्
स्थिता मृते स्वर्गमितःप्रयाते।
वेदध्वनौ चाप्यथ शङ्खशब्दे
[2]पुण्याहशब्दे च स वाद्यशब्दे ॥

१ (क) अध्ययनप्रपन्ने।
२ मूले स्वाहास्वधायामथ वाद्यशब्दे।

राजाभिषेके च तथा विवाहे
यज्ञे नवे स्नातगिरस्यशुक्के ।
पुण्येषु शुक्लेषु च पर्व्वतेषु
फलेषु पक्केषु सरिद्वरासु ॥

सरःसु पूर्णेषु तथार्ज्जुनीषु
सशाद्वलाद्यां भुवि पद्मषण्डे ।
बाले च वत्से च शिशौ प्रहृष्टे
साधौ नरे धर्म्मपरायणे च ॥

आचारसेविन्यथ शास्त्रनित्ये
विनीतवेषे च तथा सुवेषे ।
सुशुद्धदन्ते मलवर्ज्जिते च
मिष्टाशने चातिथिपूजके च ॥

स्वदारतुष्टे निरते च धर्म्मे
सत्त्वोत्कटे[१] चात्यशनादिमुक्ते ।
सदा सुपुण्ये[२] च सुगन्धिपात्रे
नित्यानुलिप्ते च विभूषिते च ॥

सत्यस्थिते भूतहिते निविष्टे
क्षमायुते क्रोधविवर्ज्जिते च ।

१ (ख) धर्म्मोत्कटे । २ (ख) सपुण्ये ।

स्वयं यथार्थं परकार्य्येदत्ते
[1]कल्याणचित्ते च सदा विनीते ॥

मेघे लम्बपयोधरे लम्बमांसपयोधरवति, सद्यःकृते गोमयेनाभिलिप्ते। आमलके विल्वे वृक्षात्मके। पुरन्ध्रिः कुमार्य्यऽन्या मनोरमा। स्नातशिरस्यशुक्ले स्नानार्द्रकेशे। अर्ज्जुनी गौः। पद्मषण्डे पद्मवने, शास्त्रनित्ये शास्त्रनित्यसङ्गवति।

महाभारते,—

वसामि सत्ये सुभगे प्रगल्भे
दक्षे नरे कर्म्मणि वर्त्तमाने।
अक्रोधने देवपरे कृतज्ञे
जितेन्द्रिये नित्यमुदीर्णसत्ये ॥
नाकर्म्मशीले पुरुषे वसामि
न नास्तिके सांकरिके कृतघ्ने।
न भिन्नवृत्ते न नृशंसवृत्ते
न चापि चौरे न च नग्नमूर्खे ॥
ये वा न तेजोबलसत्वसारा
हृष्यन्ति कुर्व्वन्ति च यत्र तत्र।

१ मूले अधिकमिदं श्लोकद्वयं—
नारीषु नित्यं सुविभूषितासु पतिव्रतासु प्रियवादिनीषु।
अमुक्तहस्तासु सुतान्वितासु सगुप्तभाण्डासु बलिप्रियासु ॥
सम्मृष्टवेश्मासु जितेन्द्रियासु कलिव्यपेतासु पथिस्थितासु।
धर्म्मव्यपेक्षासु दयान्वितासु स्थिता सदाऽहं मधुसूदने च ॥

न देवि तिष्ठामि तथाविधेषु
नरेष्वसंप्राप्तमनोरमेषु ॥
यस्यात्मनः प्रार्थयते न किञ्चित्
यश्च स्वभावोपहतान्तरात्मा ।
तेष्वल्पसङ्कल्प[1]परेषु नित्यं
नरेषु नाहं निवसामि देवि ॥
वसामि धर्म्मशीलेषु धर्म्मज्ञेषु कृतात्मसु ।
वृद्धसेविषु दान्तेषु सर्व्वज्ञेषु महात्मसु ।
स्त्रीषु कान्तासु दान्तासु देवद्विजपरासु च ॥
प्रकीर्णभाण्डामनवेक्ष्यकारिणीं
सदा च भर्त्तुः प्रतिकूलवादिनीम् ।
परस्य वेश्माभिरतामलज्जा-
मेवंविधां स्त्रीं परिवर्ज्जयामि ॥
लोलामधोऽचीमवगाहिनीञ्च
व्यपेतशीलाङ्कलहप्रियाञ्च ।
निद्राभिभूतां सततं शयाना-
मेवंविधां स्त्रीं परिवर्ज्जयामि ॥
सत्यासु नित्यं प्रियदर्शनासु
सौभाग्ययुक्तासु गुणान्वितासु ।
वसामि नारीषु पतिव्रतासु
कल्याणशीलासु विभूषितासु ॥

१ (ख) पुस्तके सन्तोषपरेषु।

तथा,—

यस्मिन् गृहे हूयते हव्यते च
गोब्राह्मणं चार्च्यते देवताश्च।
कालेषु पुष्पैर्बलयः क्रियन्ते
तस्मिन् गृहे वासमुपैमि नित्यम्॥
स्वाध्याययुक्तेषु द्विजेषु नित्यं
क्षत्रे तु धर्म्माभिरते सदैव।
वैश्ये च कृष्याभिरते वसामि
शूद्रे च शुश्रूषणनित्ययुक्ते॥
नारायणे त्वेकमना वसामि
सर्व्वेण भावेन शरीरभूता।
यस्मिन् हि धर्म्मः सुमहान्निविष्टो
ब्रह्मण्यता चात्र तथा प्रियत्वम्॥
नाहं शरीरेषु वसामि देवि
नैतन्मया शक्यमिहाभिधातुम्।
यस्मिन् स्वभावेन वसामि पुंसि
स वर्द्धते धर्म्मयशोऽर्थकामैः॥

तथा भारतवाक्यम्,—

गृहे पारावता धन्याः शुका वै सारिकास्तथा।
गृहे एते प्रशस्ताः स्युस्तथा वै तैलपायिकाः॥

हारीतः,—

आद्या व्याहृतयस्तिस्रः स्वधा स्वाहा नमो वषट्।

यस्यैता वेश्मनि सदा ब्रह्मलोकस्थ एव सः॥

आद्या भूर्भुवःस्वरिति तिस्रो व्याहृतयः।

तथा,—

यस्य वेदमयश्चक्षुर्बीजञ्च व्याहृतीमयम्।

तपोमयं शरीरञ्च स कस्मादवसीदति॥

पैठीनसिः,—

हुताग्निहोत्रस्य हुताग्निकस्य

समाप्तजप्यस्य पथिस्थितस्य।

ये ब्राह्मणस्योपरि दिव्यलोकाः

काङ्क्षन्ति तान् वै ऋषयः समस्ताः॥

महाभारते,—

उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम्।

दत्तं वा दापितं वापि वाक् सत्याऽपि च जल्पिता॥

प्रत्यहं प्रत्यवेक्षेत मनश्चरितमात्मनः।

किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरितम्॥

सुदुर्लभतरं प्राप्य मानुष्यमिह यो नरः।

धर्माऽनमन्ता कामात्मा स भवेत् खलु वञ्चितः॥

इहैव नरकव्याधेश्चिकित्सां न करोति यः।

गत्वा निरौषधं देशमवशः किं करिष्यति॥

नावसीदति चेद्धर्मः कपालेनापि जीवतः।

आढ्योऽस्मीत्यवगन्तव्यं धर्मवित्ता हि साधवः॥

आढ्याश्च बलवन्तश्च ये वनस्थाश्च भारत।

ये वै जितेन्द्रिया धीरास्ते नराः स्वर्गगामिनः॥
प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते नरः।
कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्॥

वृद्धशातातपः,—

श्वः कार्य्यमद्य कुर्व्वीत पूर्व्वाह्णे चापराह्णिकम्।
न हि प्रतीक्षते मृत्युः कृत वास्य न वाऽकृतम्॥

इदं श्वःकार्य्यादावावश्यककरणार्थम्।

मनुः,—

यद्यत् परवशं कर्म्म तत् प्रयत्नेन वर्ज्जयेत्।
यद्यदात्मवशं तु स्यात्तत् सेवेत यत्नतः॥
सर्व्वं परवशं दुःखं सर्व्वमात्मवशं सुखम्।
एतद्विद्यात् समासेन लक्षणं सुखदुःखयोः॥
यत् कर्म्म कुर्व्वतोऽस्य स्यात् परितोषोऽन्तरात्मनः।
तत् प्रयत्नेन कुर्व्वीत विपरीतन्तु वर्ज्जयेत्॥

परवशमिह परप्रार्थनया लभ्यम्। एतच्च यथाकथञ्चिद्धनसम्भवे सन्तोषपरताबोधनार्थम्। यत् कर्म्म कुर्व्वत इत्यादिना तुष्टेः पुनर्वचनन्तु स्नातकव्रतत्वख्यापनाय।

लघुहारीतः,—

वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः।
अकुत्सिते कर्म्मणि यः प्रवर्त्तते
निवृत्तरागस्य गृहन्तपोवनम्॥

यत् कर्म्म कुर्व्वंश्च नाप्नोति जुगुप्सामेति पुत्रक ।
तत् कर्त्तव्यमशङ्केन यन्न गोप्यं महाजने ॥

मनुः,—

परित्यजेदर्थकामौ यौ स्यातान्धर्म्मवर्ज्जितौ ।
धर्म्ममप्यसुखोदर्कं लोकविक्रुष्टमेव च ॥

धर्म्मवर्ज्जितौ धर्म्मविरोधिनौ, असुखोदर्कमनुशयहेतुं लोकविक्रुष्टं देशकालाननुरूपत्वेन लोकगर्हितम् । यथा कस्मिंश्चिद्देशे महिषमांसेन श्राद्धाचरणम् । ईदृशं धर्म्ममपि त्यजेदित्यर्थः ।

यमः,— किं ब्रह्मचर्य्यैर्यदि दारसेवी
किञ्चोपवासैर्यदि शेषभोजी ।
मौनेन किं स्याद्यदि सत्यवादी
सत्येन वा किं यदि चानृशंसः ॥

हारीतः,—

सत्यवादी सदातुष्टः ऋतुकालाभिगामी नित्यं स्नानशीलो नित्यं चाक्रोधनोऽपरोपताप्यकुहकोऽखर्व्वो नित्योदकी नित्यं यज्ञोपवीती नित्यं स्वाध्यायी धर्म्मान्वेषी पतितान्नवर्ज्जी निवृत्तरागमोहोऽनृतसाध्यवर्ज्जितोऽनसूयको गृहस्थो भवति ।

कुहको मायावी । खर्व्वो वक्रः । नित्योदकी सोदककमण्डलुवहनशीलः ।

कश्यपः,—

आहिताग्निः स्वदारनिरतः ऋतुकालाभिगामी देव-पितृ-भूत-मनुष्य-ब्रह्म-यज्ञाननुसेवमानः एक-द्वि-त्रि-चतुर्णां ब्राह्मणाना-

मातिथ्यं कुर्व्वाणो व्रत-नियम-होम-जप्यमन्त्रपरो मातापितृभक्ति-परो भृत्याऽपत्ययोः शेषान्नभोजी न चासूयको यत्किञ्चाशी तोलक-भेदक-वेधक-सूचकान् परिहरमाणः श्रेयसा युज्यते।

व्रतमिह-यमाः पञ्च। जप्यमन्त्रा गायत्र्यादयः। यत्किञ्चाशी अलोलुपः। भेदकः समयादिभेदकः। वेधकः परमधर्मवेधकः। एतदन्यः पिशुनः सूचको बोध्यः।

उशना,—

तत्र वेदविद्याव्रतस्नातकः शुचिर्नित्योदकी नित्ययज्ञोपवीती उभयकालसन्ध्यामुपासीनः।

गोतमः,—

सत्यधर्म्मा आर्य्यवृत्तः शिष्टाध्यापकः शौचशिष्टः शुचिर्निरतः स्यात्। नित्यमहिंस्रो मृदुर्दृढ़कारी दम-दानशीलः। एवमाचारो मातापितरौ पूर्व्वापरान् दुरितेभ्यो मोचयिष्यन् स्नातकः शश्वद्ब्रह्म-लोकान्न च्यवते।

सत्यधर्म्मा सत्यमन्त्रः। आर्य्यवृत्तः आर्य्यप्रियकारिचरितः। शिष्टाध्यापकः साधूनामध्यापयिता। शौचशिष्टः शौचार्थमनुशासनवान्। मृदुः पारुष्यशून्यः। दृढ़कारी आवश्यसमापनग्राहकः, मोचयिष्यन् मोचयितुम्, एवमाचार इति सम्बन्धः।

तथा,— त्रिवर्गसेवां सततान्नदानं
सुरार्च्चनं ब्राह्मणपूजनञ्च।
स्वाध्यायसेवां पितृतर्पणञ्च
कृत्वा गृही शक्रपदं प्रयाति॥

बौधायनः,—

अथ स्नातकः सान्तर्वास उत्तरं वैणवञ्च दण्डं सोदकञ्च कमण्डलुं द्वे यज्ञोपवीते उष्णीषमजिनमुत्तरमुपानहौ छत्रञ्च। धारयेदिति शेषः। सान्तर्वास. अधोवस्त्रवान्। उत्तरं उत्तरीयम्।

तथाच श्रुतिः,—

अजिनञ्चोत्तरीयञ्च वाससा सह कल्पितम्।
[अजिनं वामे वा दक्षिणे उपवीते इति॥][1]

मनुः,— सत्यधर्म्मार्य्यवृत्तेषु शौचे चैव वसेत् सदा।
शिष्यान् शिष्याच्च धर्म्मेण वाग्बाहूदरसंयतः॥

शिष्याः. शासनीयाः पुत्रादयः। वाक्संयमो मितभाषिता। बाहुसंयमो बाहुबलेन परस्याधर्षणम्। उदरसंयमोऽभक्ष्याभक्षणादिः।

पराशरः,—

यावज्जुहोत्यधीते च ददात्यध्यापयत्यपि।
यजत्यतिथि-देवांश्च तावत् स द्विज उच्यते॥

यमः। ऋषयः ऊचुः,—

किं लक्षणो भवेद्धर्म्मः क्व वा धर्म्मः प्रतिष्ठितः।
कः सर्व्वसम्मतो धर्म्मः किञ्च धर्म्मपरायणम्॥

यम उवाच,—

तपःपरमको धर्म्मो दानेच्छाऽलोभलक्षणः।

१ [ ] चिह्नितांशः क्वचिदधिकः।

यमादाय स्थितो धर्म्मः संस्थायै च प्रवर्त्तते ॥
सत्यं सर्व्वहितो धर्म्मः सत्यं धर्म्मपरायणम् ।

तपःपरमकः तपःप्रधानः । संस्था मर्य्यादा । सत्यं भूतार्थवादित्वम् । द्वितीयसत्यशब्दो ब्राह्मणपरः ।

दक्षः,—

विभागशीलो यो नित्यं क्षमायुक्तो दयालुकः ।
गृहस्थः स समाख्यातो न गृहेण गृही भवेत् ॥
दया लज्जा धृतिः श्रद्धा पूजा त्यागः कृतज्ञता ।
एते यस्य गुणाः सन्ति गृहस्थो मुख्य उच्यते ॥

पूजा त्याग इति स्थाने प्रज्ञा योग इति क्वापि पाठः ।

यमः,—

शौचमध्ययनं दानं नित्यं विषयसंयमः ।
अत्र यत्नेन संभाव्यं ब्राह्मण्यं प्राप्य दुर्लभम् ॥

अत्र यत्नेन संभाव्यम्— अत्र शौचादौ यत्नवता भवितव्यमित्यर्थः ।

शातातपः,—

भवेच्छौचपरो नित्यं तथा चेह जितेन्द्रियः ।
अक्रोधः सर्व्वभूतेषु साधुकारी प्रियम्वदः ॥

बृहस्पतिः,—

सत्यं यज्ञस्तपो दानमेतद्धर्म्मस्य साधनम् ।
धर्म्मात् सुखञ्च ज्ञानञ्च ज्ञानान्मोक्षो विधीयते ॥
तपो धर्म्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतम् ।

द्वापरे चाध्वरः प्रोक्तस्तिष्ये दानं दया दमः ॥
कृते षडब्दात् यो धर्मः स त्रेतायामृतुत्रयात् ।
द्वापरे तु त्रिपक्षेण कलावह्ना च तत् फलम् ॥
दानेन भोगी भवति मेधावी वृद्धसेवया ।
अहिंसया च दीर्घायुरित्थं प्राहुर्मनीषिणः ॥

तिष्यः कलिः ।

यमः,—

(?) यदा धर्म्मेण दानेन व्रतेन ब्रह्मचर्य्यया ।
शमयित्वेन्द्रियग्रामं ब्रह्मलोकमवाप्नुयात् ॥

मनुः,—

दृढकारी मृदुर्दान्तः क्रूराचारैरसंवसन् ।
अहिंस्रो दम-दानाभ्यां जयेत् स्वर्गन्तथा व्रतैः ॥

हारीतः,—

दमो दया दानं दृढव्रतत्वञ्चेति । ब्राह्मणस्य कुलशीलश्रुतवृत्ता(व)वस्थानं दम इत्याहुः । त्रिसन्ध्यमस्कन्दनं देवतार्चन-जप-होमाध्ययननियमानुष्ठानं दृढव्रतत्वम् । तथा त्रिसन्ध्यं वै नियमिनां पाप्मा शीर्य्यते तपोभूयस्त्वमुपैति ब्रह्म प्रकाशतां गच्छति । तस्मात्त्रिसन्ध्यं नियमी स्यादिति ।

सर्व्वभूतानुकम्पा दया, संविभागो दानमिति कल्पतरुः । ब्राह्मणस्येति ब्राह्मणग्रहणमेतेषु तस्य यत्नातिशयार्थं, शीलं ब्राह्मण्यादि, अस्कन्दनं सर्व्वाङ्गोपेतमस्खलितं वा । देवार्चन-जपहोमाध्ययनान्येव नियमः, तेषामनुष्ठानं वा नियमेनानुष्ठानं

त्रिसन्ध्यमिति सन्ध्यात्रयकाले यथायोग्यमेषामनुष्ठानं कर्त्तव्यमित्यर्थः।

पुनर्हारीतः,—

स्थितिरविच्छिन्नवेदवेदिता अयोनिसङ्करिता अविच्छिन्नावंयत्वं वा इति कुलगुणाः। वेदाङ्गानि धर्माध्यात्मज्ञानं स्थितिश्चेति षड्विधं श्रुतम् (?)।

क्षमा दमो दया दानमहिंसा-गुरुपूजनम्।

शौचं स्नानं जपो होमः तपः स्वाध्यायः सत्यवचनम् सन्तोषो दृढव्रतलक्षेति॥

गोतमः,— सर्व्वत एवात्मानं गोपायेत[१]।

यमः,—

धर्म्मचैत्रं शरीरं हि यत्नेन परिपालयेत्।
शरीरात् स्रवते धर्म्मः पर्व्वतात् सलिलं यथा॥

व्यासः,—

विषयेषु न सज्जेत मनःसंयममाचरेत्।
मनःसंयममातिष्ठन् ब्रह्मलोकमवाप्नुयात्॥

विष्णुपुराणे,—

सदाऽनुपहते वस्त्रे प्रशस्ताश्च तथौषधीः।
गारुड़ानि च रत्नानि बिभृयात् प्रयतो नरः॥
सुप्रउद्धामलकेशश्च सुगन्धिश्चारुवेषधृक्।
सिताः सुमनसो हृद्या बिभृयाच्च सदा नरः॥

१ (ग) पुस्तके गोतमवाक्यं नास्ति।

मार्कण्डेयपुराणे,—

न चापि रक्तवासाः स्यात् चित्रासितधरोऽपि वा ।
न च कुर्य्याद्विपर्य्यासं वाससोर्न च भूषणे ॥
वर्ज्ज्यञ्च विदग्धं वस्त्रमत्यन्तोपहतञ्च यत ।

अत्यन्तोपहतं मद्यादिलिप्तम् ।

मनुः,— उपानहौ च वस्त्रञ्च धृतमन्यैर्न धारयेत् ।
उपवीतमलङ्कारं स्रजं कनकमेव च ॥

देवलः,—

कुण्डिकां मण्डलौं शाटीं प्रसाधनमुपानहौ ।
वर्ज्जयेत् परभुक्तानि अनिर्णिक्तानि वै बुधः ॥

मण्डलौ कंकतिका ।

मनुः,— क्लृप्तकेशनखश्मश्रु दान्तः शुक्लाम्बरः शुचिः ।
स्वाध्याये चैव रक्तः स्यान्नित्यमात्महितेषु च ॥

क्लृप्तं छिन्नं, एतच्च साग्निविषयं, न समावृत्ता वपेरन्नित्याप-स्तम्बवाक्यात् । आत्महिते व्याधिप्रतीकारादौ ।

धारयेद्वैणवीं यष्टिं सोदकञ्च कमण्डलुम् ।
यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले ॥

वेदोऽत्र दर्भवटुः । रौक्मे सौवर्णे ।

गोतमः,—

[१]नित्यशुचिः सुगन्धिः स्नानशीलः, सति विभवे न जीर्ण-मलवद्वासाः स्यात् । न रक्तमसुगन्धमन्यधृतं वासो विभृयात् । न

[१] मूले—स्नातको नित्यं शुचिः सुगन्धः ।

मृगुपानहौ [निर्मिञ्यात्][१]। अशक्तौ न कूर्द्धश्मश्रुरकस्मात् स्यात्।
[२]शास्त्रीयनियमव्यतिरेकेण न दीर्घश्मश्रुः स्यात्।

मार्कण्डेयपुराणे,—

प्राङ्मुखोदङ्मुखो वापि श्मश्रुकर्म्म च कारयेत्।

महाभारते,—

अन्यदेव भवेद्वासः शयनीये सदैव तु।
अन्यद्रथ्यासु देवानामर्च्चायामन्यदेव हि॥

रथ्यासु यथेष्टचेष्टासु।

कालिकापुराणे,—

कायस्थेनैव हेम्ना तु कर्म्म यत् कुत्सितं नरः।
आचरेत्तदघं तस्य वज्रकल्पं भविष्यति॥
अनामाङ्गुलिकायन्तु धारयेद्दक्षिणे करे

कायोऽत्रानामाङ्गुलिकाऽन्यः कायभागः, तत्र सुवर्णं धारयता कुत्सितं कर्म्म कृतं। तत् कुत्सितेन कर्म्मणा जपापेक्षयाऽधिकपापो भवतीत्यर्थः। एतच्च दीक्षितं विहाय।

भविष्यपुराणे,—

यः कुर्य्यात् सर्व्वकर्म्माणि वस्त्रपूतेन वारिणा।
स मुनिः स महान् साधुः स याति परमां गतिम्॥

तथा,—

सोपानत्को देवगृहमारोहेद्यस्तु मानवः।
स याति नरकं घोरं तामिस्रं नाम नामतः॥

१ मूले—[ ] चिह्नितांशो नास्ति। २ क्वचिन्नास्ति।

शिरःस्नातस्तु तैलेन नाङ्गं किञ्चिदपि स्पृशेत्।
तिलपिण्डञ्च नाश्नीयात् तथायुर्विन्दते महत्॥
स्नातस्य वर्णकं कृत्यं नित्यं कुर्य्याद्दिशाम्पते।
प्रियङ्गु चन्दनाभ्याञ्च बिल्वेन तगरेण च॥
पृथगेवावलिप्येत केशरेण च बुद्धिमान्।

पद्मपुराणे सप्तर्षिशपथेषु,—

अनृतौ मैथुनं याति दिवास्वप्नं निषेवते।
अन्योन्यातिथ्यमभ्येति विप्रस्तौल्यं करोति यः॥

तथा,—

गो-ब्राह्मणांश्च तीर्थानि पर्व्वतांश्च नदीस्तथा।
देवांश्चैव सदा वन्दन् न प्रेतो जायते नरः॥

याज्ञवल्क्यः,—

गोब्राह्मणानलाऽन्नानि नोच्छिष्टो न पदा स्पृशेत्।

भविष्यपुराणे,—

श्लेष्म-मूत्र-पुरीषाणि समुत्सृजति यस्तु वै।
देवस्यायतने भानोः स गच्छेन्नरकं क्रमात्॥
उच्छिष्टो नालपेत् किञ्चित् स्वाध्यायञ्च विवर्जयेत्।
नोत्क्षिप्तपादजङ्घस्तु प्राज्ञस्तिष्ठेत्कथञ्चन॥

विष्णुपुराणे,—

प्रदीप्तं वेश्म न विशेन्नारोहेच्छिखरन्तरोः।
न कुर्य्याद्दन्तसंघर्षं न कुष्णीयाच्च[1] नासिकाम्॥

१ (ग) पुस्तके कुष्णीयाच्च।

नासंवृतमुखो जृम्भेत् श्वास-कासौ न वर्त्तयेत् ।
नोच्चैर्हसेत् सशब्दञ्च न मुञ्चेत्पवनं बुधः ॥
[1][न स्नायाच्च स्वपेन्नग्नो न चैवोपस्पृशेद्बुधः] ।
न फुत्कुर्य्याच्छवं प्राता शवगन्धो हि सोमजः ।
उपसर्पेच्च च व्यालांश्चिरन्तिष्ठेच्च चोत्थितः ॥
अतीव जागर-स्वप्ने तद्वत् स्नानाशने बुधः ।
न सेवेत तथा शय्यां व्यायामञ्च नरेश्वर ! ॥
दंष्ट्रिणः शृङ्गिणश्चैव प्राज्ञो दूरेण वर्ज्जयेत् ।
अवश्यायञ्च राजेन्द्र पुरो वातातपौ तथा ॥
मुक्तकच्छस्तु नाचामेद्देवाद्यर्च्चाञ्च वर्ज्जयेत् ।
श्लेष्म-सिंहानिकोत्सर्गो नान्नकाले प्रशस्यते ।
बलि-मङ्गल्यजप्यादौ न होमे न महाजने ॥

न कुष्णीयाच्च नासिकां, नासिकां न निष्कोषयेदित्यर्थः । देवाद्यर्च्चां मुक्तकच्छ इत्यनुषङ्गः । महाजने महाजनमध्ये ।

देवीपुराणे,—

न विषं भक्षयेत् प्राज्ञो न भुजङ्गैश्च क्रीडयेत्
नेत्राञ्जनं निषेवेत दन्तधावनपूर्व्वकम् ॥

विष्णुपुराणे,—

द्विषीषु-पतितोन्मत्त-रङ्ग-वैराति-कीकटैः ।
बन्धकी-[2]बन्धुभृच्छुद्रानृतकैर्भर्त्तकैः सह ॥

१ [ ] चिह्निता पङ्क्तिः पुस्तकद्वये नास्ति ।
२ (ग) बन्धकी भर्त्तृचुद्र-।

तथातिव्ययशीलस्य परदाररतः शठः।

बुधो मैत्रीं न कुर्व्वीत नैकः पन्थानमाव्रजेत्।

वैरातिः-वैरान् अतति सततं वैरशील इत्यर्थः। 'कीकटः क्षपणः। बन्धकी असती।

मैत्रीं कुर्य्यादित्यनुवृत्तौ-मार्कण्डेयपुराणे,—

न सर्व्वशङ्किभिर्नित्यं न च दैवपरैर्नरैः।

ब्रह्मपुराणे,—

यदाकाशः स्मृतो भौमस्तस्मात्सम्वृते क्वचित्।

कुर्य्यान्मूत्रं पुरीषञ्च न भुञ्जीत पिवेन्नरः॥

मैथुनञ्चापि न चरेदुच्छिष्टानि च वर्ज्जयेत्।

उच्छिष्टानि उपभुक्तशेषभूतानि।

मार्कण्डेयपुराणे,—

यज्ञ-दान-तपांसीह पुरुषस्य न भूतये।

भवन्ति यः सदाचारं समुल्लङ्घ्य प्रवर्त्तते॥

वायुपुराणे,—

—एकस्यार्थाय यो हन्यादात्मनो वा परस्य वा।

एकं प्राणं बहून् वापि कामन्तस्यास्ति पातकम्॥

यस्मिंस्तु निहतेऽभद्रे एधन्ते बहवः सुखम्।

तस्मिन् हतेऽशुभे नास्ति पातकञ्चोपपातकम्॥

महाभारते,—

यः प्रवृत्तां श्रुतिं हन्यात् शास्त्रञ्च मुनिभाषितम्।

श्रेयस्तमनभिज्ञाय तं विद्याद्ब्रह्मघातकम्॥

तत्रैव बलिं प्रति श्रीवाक्यानि—

यदा शुश्रूषया वृद्धः परिवारेण योज्यते ।
पुत्रश्च पितरं मोहात् प्रेषयिष्यति कर्म्मसु ॥
ब्राह्मणैः कारयिष्यन्ति वृषलाः पदधावनम् ।
शूद्रश्च ब्राह्मणीं भार्य्यामुपयास्यति निर्भयः ॥
वियोनिषु च बीजानि मोक्ष्यन्ते पुरुषैर्यदा ।
संकरं कांस्यभाण्डैश्च बलिश्चापि कुपात्रकैः ॥
चातुर्वर्ण्यं तदा कृत्स्नमुन्मर्य्यादम्भविष्यति ।
एकैकस्य तदा पाशः क्रमशः परिमोक्ष्यते ॥

विष्णुपुराणे,—

देवादिनिश्वासहतं शरीरं यस्य वेश्म च ।
न तेन सङ्करं कुर्य्याद्गृहासनपरिच्छदैः ॥

देवादिनिश्वासहतं तदुचितपूजादिविरहाद्देवाद्यसन्तोषविषयम् ।

मनुः,—

नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च कुत्सनम् ।
द्वेषं दम्भञ्च मानञ्च क्रोधं भैक्ष्यञ्च वर्ज्जयेत् ॥

नास्तिक्यं नास्ति परलोक इति धीः । द्वेषः परानिष्टफलको गुणविशेषः । मानं स्वाभाविकगुणारोपान्मन्यूत्कर्षधीः । क्रोधो बलवती पराचिकित्सा ।

इति गृहस्थरत्नाकरे स्नातकव्रततरङ्गः ॥

———

## अथ यमाः।

तत्र मनुः,—

यमान् सेवेत सततं नित्यञ्च नियमान् बुधः।
यमान् पतत्यकुर्व्वाणो नियमान् केवलं भजन्॥

केवलान् नियमान् कुर्व्वाणः पततीति युज्यते। ततो यमसहिता एव नियमाः कार्य्या इत्यर्थः। सततमापद्यपि।

व्यासः,—

अहिंसा सत्यवचनं ब्रह्मचर्य्यमकल्कता।
अस्तेयमिति पञ्चैते यमाश्चैव व्रतानि च॥
अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम्।
अप्रमादो हि नियमाः पञ्चैवोपव्रतानि च॥

ब्रह्मचर्य्यमिह प्रतिषिद्धमैथुनत्यागः। ध्यानमात्मचिन्तनं कल्कशब्दो दम्भपरः।

याज्ञवल्क्यः,—

ब्रह्मचर्य्यन्दया क्षान्तिर्ध्यानं सत्यमकल्कता।
अहिंसाऽस्तेयमाधुर्य्ये दमश्चेव यमः स्मृतः॥
स्नानं मौनो परा सेव्या स्वाध्यायोपस्थनिग्रहः।
नियमो गुरुशुश्रूषा शौचाक्रोधाप्रमादिता॥

माधुर्य्यं प्रियवादित्वादि। अप्रमादः कर्त्तव्येष्ववधानम्॥

हारीतः,— अहिंसा सत्यमस्तेयं शौचं ब्रह्मचर्य्यमिति यमाः। कूर्म्म इवाङ्गानि कर्म्मभ्यः संहृत्य रूपेभ्यो दृष्टिं, मूक इव वाचालेभ्यो वाचं, कर्म्मेन्द्रिय-बुद्धीन्द्रियाणि मनश्च संयम्य अहिंसा भवति।

एवं व्याह,—

कर्म्मणा चक्षुषा चैव वाचाऽथ मनसा तथा।
यो वै न कुरुते पापं सा ह्यहिंसा चतुर्विधा॥ इति।

देवलः,— तत्र दशविधा हिंसा। उद्वेगजननं सन्तापजननं, रुजाकरणं शोणितोत्पादनं, पैशुन्यकरणं सुखापाकरणं, अतिक्रमः संरोधो हितप्रतिषेधो वध इति।

तत्र श्लोकः,—

कायक्लेशं मनोदुःखं वधं वा प्राणिनां पुनः।
यत्र वर्द्धयति द्वेषात् सा हिंसेति समासतः॥

उद्वेगो मनसोऽसुस्थता। सन्तापो यस्मिन् दुःखे उत्पन्ने आकुलितमिवात्मानं मन्यते। रुजा शारीरं दुःखम्। अतिक्रमो मान्यावज्ञा। संरोधः स्वाच्छन्द्यनिषेधः। हितप्रतिषेधः हितं तर्कशुद्धमभिमतम्।

महाभारते,—

यूक-मत्कुण-दंशादीन् खादतस्त्वात्मनस्तनुम्।
पुत्रवत् परिरक्षन्ति ते नराः स्वर्गगामिनः॥

हेतुमुक्त्वा हारीतः,—

तस्मान्नानृतं वदेत्। सोमविक्रय-विवाह-मैथुनं बालप्रबोधनम्। अनिन्दितं ग्लानित्वादिशून्यम्। स्वभावतः छलशून्यम्।

मनुः,— सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्।
प्रियञ्च नानृतं ब्रूयादेष धर्म्मः सनातनः॥

एतेन प्रियं सत्यञ्च सम्वलितं वक्तव्यमित्युक्तम्।

यमः,—

सुभाषितसहस्राणि सुभाषितशतानि च ।
सर्व्वाण्यव्याहृतस्येह कलां नार्हन्ति षोडशीम् ॥
दया हि सर्व्वभूतानामनृतेन च शाम्यति ।
सत्येनाऽपि विनश्येत हिंसा यत्र प्रवर्त्तते ॥

एतेन सत्यानृतयोर्दयामौनप्राशस्त्यमुक्तम् ।

हारीतः,—

ऋतमिति सम्भूताभिधानम् । नात्र ऋतमस्तीत्यनृतम् । तच्चतुर्विधम् । साक्ष्यानृतम् । पणितानृतम् । सुहृतानृतम् । साधारणानृतमिति । क्रयविक्रयकितववृत्तित्वं पणितानृतम् । तस्मान्न व्यसनादिभिः क्रीणीयान्न विक्रीणीयात् न कितववृत्तिः स्यात् ।

एवं शाङ्खः,—

विक्रयी शंसते पण्यं क्रयी निन्दति तद्गुणान् ।
व्याजयोगाच्च कितवमश्रद्धेयं प्रजापतिः ॥ इति ।

विश्रम्भानृतम् साक्ष्यानृतमिति व्यवहारानृतमिति त्रिविधं प्रत्ययानृतम् ।

यद्विश्रम्भादस्मात् कीर्त्तिं करोति कारयति वा तद्विश्रम्भानृतमित्युच्यते ।

यत् साक्ष्यकर्म्मण्यवस्थितोऽनृतम् व्यवस्यति जानन्नप्यपलपति कूटसाक्ष्यं वोपैति तत् साक्ष्यानृतमित्युच्यते ।

द्वयोर्विवदमानयोर्मैत्राद्द्वेषाल्लोभाद्वा सम्भूतं व्युदस्यासम्भूतं व्यवस्थापयति तद्व्यवहारानृतमित्युच्यते ।

एवं ह्याह,—

विश्रम्भात्त्रियुगं हन्ति पश्च मिथ्यापलापतः।
क्षणात् सप्तयुगं हन्ति अनृतं व्यवहारतः॥

न व्यसनादिभिरित्यत्र व्यसनं वञ्चना। अनृतमध्यवस्यति वदति। जानन्नपि अपलपति मौनमाश्रयते। एतदेव कूट-साक्ष्यता। युगं जन्म।

नारदः,—

पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते॥
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्।
सर्व्वं भूम्यनृते हन्ति मास्म भूम्यनृतं वदेः॥
अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने।
[1]अब्जेषु चैव रत्नेषु सर्व्वेष्वश्ममयेषु च॥

यमः,—

पशुवच्च चौरहृतं सर्व्वस्य पशुसम्भवम्॥
गोवद्वस्तुषु सर्व्वेषु शयनेष्वासनेषु च।
अश्ववत् सर्व्वदानेषु खरोष्ट्राश्वतरेषु च॥

आदित्य-चन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च।
पश्यन्ति नित्यं पुरुषस्य वृत्तम्
तस्मान्न वाच्यं त्वनृतं कदापि॥

१ (क) पुस्तके पद्यमिदं नास्ति।

यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्व्वदा।
तपो वेदाः स्मृतिस्त्यागः स तेभ्यः सर्व्वमश्नुते॥

पञ्च पश्वनृते हन्तीति पश्वादिविषयमनृतं वदन् पञ्चत्वादि-संख्यावतो बान्धवान् हन्ति नरके पातयतीत्यर्थः।

हन्ति जातानजातांश्च इत्यादिना हिरण्यानृते ततोऽप्यधिकं पापं दर्शितम्। एवं सर्व्वं भूम्यनृतं हन्तीत्यनेन ततोप्यऽधिकं दर्शितमिति ज्ञेयम्। भोगे मैथुनजन्ये भोग इत्यर्थः। सर्व्वञ्च पशुसम्भवं चीरदध्यादि। शयनीयेषु कम्बलादिषु।

देवलः,—

अनृतं द्विविधमसत्यं विसम्वादश्चेति। तत्र दृष्टश्रुतकृताना-मन्यथाचरणमसत्यं, प्रागभ्युपगतानामसंप्रवर्त्तनं विसंवाद इति।

रागाद्द्वेषाद्भयाल्लोभाद्दाक्षिण्यात् शङ्कया क्रिया।
दम्भात् प्रमादतश्चैव नरस्योत्पद्यतेऽनृतम्॥
परप्राणोपघातार्थं परद्रव्यापहारकः।
विशिष्टोऽनृतवादस्तु न वृथाकथनादिषु॥
तस्मादनृतहेतूंस्तांस्त्वात्मन्युत्पादयेत् क्वचित्।
उत्पन्नार्थान् प्रशमयेत् कारणैस्तद्विघातिभिः॥

हारीतः,—

दानानृतमिज्यानृतं तपोऽनृतमिति त्रिविधं कृतानृतम्। अन्न-धान्य-वासो-रत्न-हिरण्य-गोऽश्व-कन्या-भूम्यभयदानानामेकतमं वा यो न ददाति न प्रतिपद्यते न मया दत्तमित्युच्यते।

एवं ह्याह,—

अन्नानृते जन्महानिर्द्दे तु वामोऽनृते तथा।
त्रीणि रत्नानृते हन्ति चतुरः काञ्चनानृते॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते॥
एतत्तु द्विगुणं हन्ति कृत्वा भूम्यनृतं नरः।
ततस्तु द्विगुणं भूयोऽभयं दत्वा छिनत्ति यः॥

यो यक्ष्ये इत्युक्त्वा न यजेन्महान्तं वा क्रतुमभिवीक्ष्य स्वल्पेनेष्ट्वा न सर्व्वमुपयुनक्ति तत्र त्रैधातवीप्रायश्चित्तिः।

यस्तु तप उत्पत्य न यथार्थं तपस्यत्यन्यथा वा चरते। असमाप्तकारी निवर्त्तते तत्राग्नेयो विधिः। चान्द्रायणं वा साधारणं नाम। यो गो-ब्राह्मणहितमापत्कल्पः स्वैराभिधानं भवत्येवं ह्याह—

न नर्म्मयुक्तं वचनं हिनस्ति
न स्वैरवाक्यं न च मैथुनार्थे।
प्राणात्यये सर्व्वधनापहारे
पञ्चानृतान्याहुरपातकानि॥

अन्नधान्यार्थे तत्रान्नपदमन्नार्थपरम्। दत्वा 'प्रतिश्रुत्य। साधारणत्वं गुणदोषानुबन्धात्। यथा गोब्राह्मणानृतमज्ञातमपि। गुरोरहितं सदोषमितरत्रादोषम्। एवमापदनृत-स्वैराभिधानानृतयोरपि बोद्धव्यम्।

यमः,— न नर्म्मयुक्तं वचनं हिनस्ति
न स्त्रीषु नित्यं न विवाहकाले।

[1]प्राणात्यये सर्व्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥

देवलः,—

विवाहे ब्राह्मणस्यार्थे प्राणिनां जीविताय च।
आत्मनः प्राणहेतोर्वा न मौदेदनृतं वदन् ॥

विवाहे मैथुने।

गोतमः,—

विवाहे मैथुने नर्म्मार्त्तिसंयोगेषु दोषमेके, नानृतं वदेत् गुर्व्वर्थेषु. सप्तमं पुरुषमितश्च परतो हन्ति मनसाऽपि गुरोरनृतं वदन्नर्थेषु।

याज्ञवल्क्यः,—

न संशयं प्रपद्येत न कर्भ्मं चाप्रियं वदेत्।
नाहितञ्चानृतञ्चैव न स्तेनः स्यान्न वार्द्धुषिः ॥

अथ देवलः,—

ततः स्थूल-मध्य-क्षुद्राणां पदार्थानां प्रसह्य तुष्णीं प्रच्छन्नं वा हरणं स्तेयम्।

रत्न-क्षेत्र वेश्म हे मरूप्याभरणादीनि स्थूलानि, चतुष्पादान्न-वस्त्रलोहकार्षापणोपकरणानि मध्यानि। दन्त-शृङ्ग-दारु-चर्म्म-पाषाण-मृण्मयादीनि क्षुद्राणि।

प्रसह्य बलात्कारेण। तुष्णीं हरणं स्वामिना दृश्यमानस्यैव बलात्कारं विना। प्रच्छन्नं समक्षं वञ्चयित्वा हरणम्।

१ (क) रोगात्यये।

हारीतः,—

द्विविधमेव द्रव्यमाहुः— सचेतनं निश्चेतनञ्च। सचेतनं जङ्गमम्। निश्चेतनं-जरायुजमाद्यं तैजसमपि शैलौषधं वानस्पत्यं मृण्मयं रसमयञ्च एवं सम्भूतस्य दशविधानात् स्तेयं भवति—

अदत्तादानात्। अनतिसृष्टग्रहणात्। अनिर्द्दिष्टोपयोगात्। भृत्येभ्यो भृत्यदानात्। याचितानिर्य्यातनात्। न्यासापलापात्। छद्मव्यसनयोरनुपायग्रहणाच्चेति। प्रतिश्रुत्यादाना-द्दत्ताऽनभिसम्बन्धाच्चेति[1] दशविधं भवति।

एवं ह्याह,—

प्रतिश्रुत्याप्रदानेन दत्तस्याच्छेदनेन च।
विविधान्नरकान् याति तिर्य्यग्योनौ च जायते॥
वाचा यच्च प्रतिज्ञातं कर्म्मणा नोपपादितम्।
ऋणान्तद्धर्म्मसंयुक्तमिह लोके परत्र च॥

स्वामिनाऽदत्तस्यादानमदत्तादानम्। अनतिसृष्टग्रहणं परिमाणातिरिक्तग्रहणम्। देवपितृमनुष्यार्थं भिक्षयित्वा स्वयमुपभुञ्जतोऽनिर्द्दिष्टोपयोगः। भृत्यानां कर्म्म कारयित्वा भृतेरदानम्। याचित्वा नेष्यामीत्यनिर्य्यातनं याचितानिर्य्यातनम्। विद्या मित्रकुलप्रत्ययान्न्यस्तस्यापलपनम् न्यासापलपनम्। कूटमानतुला-तस्करत्वम् छद्म। व्यसनेन चाब्रह्मचारिणो हिरण्यादीनामात्मार्थं प्रतिग्रहो, यतीनाञ्चानुपायग्रहणम्।

---

१ (ग) चैतत्। २ (ग) मलम्।

स्तेयिनो हि प्रमीताः पूर्व्वधनिनामुपकाराय जायन्ते। तस्मात् स्तेयं न कारयेत्। नानुमन्येत।

अस्यार्थः— सचेतनं जीवं जीवाधिष्ठितं जङ्गमङ्गतिमत् पुरुष-गवादि। जरायुजमण्डजादि। आप्यं शङ्खशुक्त्यादि, तैजसं सुवर्णादि, औषधं व्रीहियवादि, वानस्पत्यं तृणकाष्ठादि, मृण्मयं घटादि, रसमयं क्षीरादि। एवम्भूतस्य दण्डविधानात् वक्ष्य-माणादत्तादानादिप्रकरणे चौर्य्यम्भवतीति।

प्रतिश्रुत्यादानं तदेव मया देयमिति प्रतिज्ञाय यददानम्। देवतानभिसम्बन्ध इति यज्ञाय द्रव्यमिति निधाय तस्य देवतयाऽनभिसम्बन्धो यागाकरणात्। धर्म्मसंयुक्तञ्च प्रतिज्ञात-मित्यर्थः। कारयित्वेत्यत्र कर्म्मेति शेषः। अनिर्य्यातनम-प्रत्याख्यानम्। उपकाराय जायन्ते पशुदासत्वेनेति शेषः।

यमः,—

सुवर्णमेकं गामेकां भूमेरप्यर्द्धमङ्गुलम्।
हरन्नरकमाप्नोति यावदाहूतसंप्लवम्॥
हिरण्यं पशुधान्यानि स्त्रियो वासांसि यो हरेत्।
स पर्य्यायेण यातीमान्नरकानेकविंशतिम्॥

नरकाश्च राजप्रतिग्रहप्रस्तावे तत्रैव प्रागुक्ताः।

आपस्तम्बः,—

स्तेनोऽभिशस्तो ब्राह्मणो राजन्यो वैश्यो वा परस्मिँल्लोकेऽपरि-मिते निरये वृत्ते जायते चाण्डालो ब्राह्मणः। पौल्कसो राजन्यः। वैणो वैश्यः। स्तेनः सन् यो लोके प्रसिद्धः।

विष्णुः,—

यद्यत्परेभ्यो न दद्यात् पुरुषस्तु निरङ्कुशः।
तेन तेनाथ हीनः स्याद्यत्र तत्राभिजायते ॥
जीवितं धर्म्म-कामौ च धने यस्मात् प्रतिष्ठितौ।
तस्मात् सर्व्वप्रयत्नेन धनहिंसां विवर्ज्जयेत् ॥
प्राणिहिंसापरो यस्तु धनहिंसापरस्तथा।
महद्दुःखमवाप्नोति धनहिंसापरस्तयोः ॥

यमः,—

देवद्रव्यापहर्त्तारं परस्वहरणे रतम्।
पुरुषं पापकर्म्माणं नरकः प्रतिपद्यते ॥
यस्तु लब्धं पुनर्दद्याद्देवद्रव्यं यतस्ततः।
गुरुद्रव्यं द्विजद्रव्यं सोऽश्वमेधफलं लभेत् ॥
यदेतद्धनमित्याहुः प्राणास्तेते बहिश्चराः।
स तस्य हरति प्राणान् यो यस्य हरते धनम्
अपहृत्य परस्यार्थं यस्तु दानं प्रयच्छति।
स दाता नरकं याति यस्यार्थस्तस्य तत्फलम् ॥
परस्वपरितुष्टास्तु जीवितान्तकरास्तु ये।
तेषां रजः पतेद्यत्र तदमेध्यतरम्भवेत् ॥
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च।
ब्रह्मस्वहर्त्ता नरके सततं परिवर्त्तते ॥

तथा,—

षष्टिवर्षसहस्राणि ब्रह्मघ्ना नरकं पतेत्।

यस्तु ब्राह्मणवृत्तिघ्नो यो वै पतितयाजकः॥

बृहस्पतिः,—

शोध्यं शुद्ध्यति सत्तोयैः प्रायश्चित्तैश्च पातकम्।
ब्रह्मस्व-न्यासहर्त्ता वा दत्त्वं हृत्वा न शुद्ध्यति॥
ब्रह्महा वृत्तिहा चोभौ समौ स्यातां न वा समौ।
कल्पान्ते ब्रह्महा शुध्येत् वृत्तिहा न कदाचन॥
एवं ज्ञात्वा परस्वानि मनसाऽपि न चिन्तयेत्।
परस्त्रियो विशेषेण धर्मसारमिदं स्मृतम्[१]॥
जातान्धो वधिरश्चैव मूकः सङ्कुचिताङ्गुलिः।
परदारापवादेषु परच्छिद्रानुहिंसने॥
नैवंविधस्तु स्वपितृन् त्रायते महतो भयात्।
वितत्येह यशो दीप्तं ब्रह्मलोके महीयते॥

पद्मपुराणे,—

सामान्यदक्षिणां लब्ध्वा गत्वात्येकं विमोहितः।
नास्तिक्यभावनिरतः सन् स वै प्रेतोऽभिजायते॥

यमः,—

देवद्रव्यं गुरुद्रव्यं यद्द्रव्यं पार्षदं भवेत्।
हृत्वाऽमुत्र नरो लोभात्प्रेतोच्छिष्टेन जीवति॥
चाण्डालो विजगौ गाथां मनुः स्वायम्भुवः पुरा।
प्रभवामीति योऽश्नाति बहु-सामान्यमेककः॥

१ (का) शुभम्।

पूयं रजस्वलानाञ्च छर्हितं मलदूषितम्।
तस्य संहरतो लोके वृत्तिरेका विधीयते॥

देवद्रव्यादिकं हृत्वा चाण्डालः सन् एतदुच्छिष्टेन जीवतीति मनुर्विजगादुक्तवानित्यर्थः।

बृहस्पतिः,—

हरते हारयेद्भूमिं मन्दबुद्धिस्तमोवृतः।
स बद्धो वारुणैः पाशैस्तिर्य्यग्योनिषु जायते॥
स्वदत्तां परदत्तां वा यो हरेत वसुन्धराम्।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः॥
षष्टिवर्षसहस्राणि स्वर्गे वसति भूमिदः।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्॥

तान्येव षष्टिवर्षसहस्राण्येव।

तड़ागानां सहस्रेण अश्वमेधशतेन च।
गवां कोटिप्रदानेन भूमिहर्त्ता न शुद्ध्यति॥
अन्यायेन हृता भूमिरन्यायेन च हारिता।
हरन्तो हारयन्तश्च हन्युस्त्रिपुरुषं कुलम्॥
ब्रह्मस्वं प्रणयाद्भुक्तं दहत्यासप्तमं कुलम्।
विक्रमेण च भुक्तन्तु दशपूर्व्वान् दशापरान्॥
ब्रह्मस्वे मा मतिं कुर्य्यात् प्राणैः कण्ठगतैरपि।
अग्निदग्धानि रोहन्ति ब्रह्मदग्धं न रोहति॥

ब्रह्मदग्धं ब्रह्मस्वहरणदग्धम्।

तथा,—

न विषं विषमित्याहु-र्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥
लोहचूर्णाश्मचूर्णं च विषञ्च जरयेन्नरः ।
ब्रह्मस्वं त्रिषु लोकेषु कः पुमान् जरयिष्यति ॥
विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिनः ।
कृष्णसर्पाश्च जायन्ते ब्रह्मदायाऽपहारकाः ॥

दायोऽत्र धनम् ।

हारीतः,—

अस्तेयं परमो धर्म्म इति धर्म्मविदो विदुः ।
परद्रव्यस्य हर्त्तॄणां न शुभा विद्यते गतिः ॥

॥ इति गृहस्थरत्नाकरे यमतरङ्गः ॥

## अथ स्तेयापवादाः।

तत्र यमः,—

अस्तेयमग्नये काष्ठमस्तेयञ्च गवे तृणम्।
कन्याहरणमस्तेयं यो हरत्यनलङ्कृताम्॥
पुष्पंकाष्ठोदके शाके तथा मूलफले तृणे।
अदत्तादानमेतेषामस्तेयञ्च यमोऽब्रवीत्॥
तृणकाष्ठं फलं पुष्पं प्रकाशं वै हरन् वरः।
गो-ब्राह्मणार्थं गृह्णन् वै स न पापेन लिप्यते॥

यो हरति वरो गुणवानिति शेषः। अनलङ्कृतामन्यस्मै विवाहयितुमलङ्कृता या तदन्याम्।

मनुः,—

वानस्पत्यं मूलफलं दार्व्वग्न्यर्थन्तथैव च।
तृणं गोभ्यश्च ग्रासार्थमस्तेयं मनुरब्रवीत्॥

वानस्पत्यमत्र वनस्पतिप्रभवं पत्रादि। अग्न्यर्थं आवश्यकसम्बर्द्धनीयाग्न्यर्थम्।

देवलः,—

अस्तेयमग्नये काष्ठमस्तेयं पशवे तृणम्।
अस्तेयं फलमारण्यं अस्तेयं पार्थिवं जलम्॥

पार्थिवं पृथिवीस्थं परकूपादिस्थितम्। तेनानुत्सृष्टमपि।

गोतमः,—

गोऽग्न्यर्थे तृणमेधान्वीरुद्वनस्पतीनां पुष्पाणि स्ववदाददीत फलानि चापरिवृत्तानाम्।

स्ववदात्मवत् । अपरिवृत्तानां अरचितानाम् ।

याज्ञवल्क्यः,—

द्विजस्तृणैधःपुष्पाणि सर्व्वतः समुपाहरेत् ।

सर्व्वतः रक्षितादरक्षितादपि ।

हारीतः,—

पूर्व्वाश्रमयोर्न्नचुद्वयग्रहणे स्तेयम् ।

तथा, मूत्रपुरीषाणाम् । पाण्योः शाकपरिमाणे एकपाणेः शमीनां बहुवस्तद्देके । रक्षावृक्षाणां तत्स्थानतक्षणेऽस्तेयम् । अन्येषाञ्च सुमनसामर्च्चापिनद्धने । अग्न्यर्थं तृणकाष्ठानां यवसोदकेन गवाञ्चास्तेयम् ।

पूर्व्वाश्रमयोर्ब्रह्मचारि-गृहस्थयोः पाण्योः शाकपरिमाणे पाणिद्वयपरिमितशाक इत्यर्थः । पाणेः शमीनां परिमाणे इत्यनुषङ्गः । तेनैकपाणिपरिमितशमीनामित्यर्थः । रक्षावृक्षो रक्षणीयतरुः । अर्च्चा प्रतिमा, पिनद्धनमाच्छादनम् ।

शङ्खलिखितौ,—

तिल-मुद्ग-माष-मसूर-यव गोधूमानां शस्यमुष्टिग्रहणेषु, पथिकानामप्यपत्रदलानां तथेक्षोर्मूलकयोः पुष्पफलप्रचयने च, विदितस्य प्रकाशं गृह्णतो न दोषः ।

शस्यं फलं अपत्रदलानां पत्रदलशून्यानां शाखामन्त्वलहीनानामिति यावत् । विदितस्य ख्यातस्य साधुतयेति शेषः ।

वृहस्पति-कात्यायनौ,—

त्रपुषोर्व्वारुके द्वे तु पञ्चाम्रं पञ्च दाड़िमम् ।

खर्जूरदाड़ीमादीनां मुष्टिं गृह्णन्न दुष्यति ॥

उर्वारुकं कर्कटी ।

नारदः,—

शालि-व्रीहि-मसूराणां मुष्टिग्राह्यो विधीयते ।

यव-गोधूमयोर्वापि यद्वाऽथो मुद्ग-माषयोः ॥

एतेषां मानवैर्मुष्टिर्ग्रहीतव्या पथिस्थितैः ।

शाकं शाकप्रमाणेन गृह्णमाणं न दुष्यति ॥

ग्रहीतव्यानि पुष्पाणि देवतार्च्चनकारणात् ।

अदत्तादायिनं विद्याद्यदि लधिकमिच्छति ॥

शाकप्रमाणं हारीतोक्तं मुष्टिद्वयम् ।

वृद्धमनुः,—

चणक-व्रीहि-गोधूम-यवानां मुद्ग-माषयोः ।

अनिषद्धैर्ग्रहीतव्यो मुष्टिरेकः पथिस्थितैः ॥

अनिषद्धैः स्वामिभिरिति यावत् ।

यमः,—

पथिकः क्षीणवृत्तिश्च द्वाविचू द्वे च मूलके ।

आददानः परक्षेत्रे न दोषं ब्राह्मणोऽर्हति ॥

॥ इति गृहस्थरत्नाकरे स्तेयापवादतरङ्गः ॥

---

## अथ शौचम्।

तत्र हारीतः,—

शौचं नाम धर्म्मादिपथो ब्रह्मायतनं श्रियोऽधिवासो[1] मनसः प्रसादनम्, देवानां प्रियं, शरीरे क्षेत्रदर्शनं बुद्धिप्रबोधनम्। तच्च शौचमुपरिष्टाद्वक्ष्यामः॥

एवं ह्याह,—

शुचिं देवाऽभिरक्षन्ति पितरः शुचिमन्वयुः।
शुचेर्बिभ्यति रक्षांसि ये चान्ये दुष्टचारिणः॥

धर्म्मादिपथः-धर्म्मस्य प्रथमः पन्था उपाय इति यावत्। शुचेरेव कर्म्माधिकाराद्ब्रह्मायतनं ब्रह्मणो वेदस्य आयतनं आधारः। क्षेत्रदर्शनं आत्मनो दर्शनं तच्च द्विविधं हारीतेनैव वक्ष्यमाणं बाह्यमाभ्यन्तरञ्च।

तत्र बाह्यं कुलशौचमर्थशौचं शारीरञ्च। तत्र कुलशौचं सूतकाद्यशौचशून्यत्वम्। अर्थशौचं भाजनादिद्रव्याणां शुद्धिः। शारीरादिशौचममेध्याद्यलेपनम्।

---

१ (ग) पुस्तके 'श्रियोऽधिवासः।

## आभ्यन्तरञ्च शौचं पञ्चविधम्।

तद्यथा,—

मानसं चाक्षुषं घ्राण्यं वाच्यं स्वाद्यञ्च। तत्र मानसं अपुण्याभिधानदोषविरहः। चक्षुरादिशौचञ्चानवलोक्यावलोकनादिविरहः। चाक्षुषवत् स्पर्शनीयमप्यत्र द्रष्टव्यं न्यायसाम्यात्।

दक्षः,—

शौचे यत्नः सदा कार्य्यः शौचमूलो द्विजः स्मृतः।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः॥

हारीत,—

भ्रष्टशौचं नरं दृष्ट्वा प्रहरन्तीह राक्षसाः।
यक्षाः पिशाचा भूतानि ये चान्येऽप्येवमादयः॥
[1]स्नानं दानं तपस्त्यागो मन्त्र-कर्म्म-विधि-क्रियाः।
मङ्गलाचारनियमाः शौचभ्रष्टस्य निष्फलाः॥
इष्टं निवेदितं दत्तं भुक्तं जप्तं तपः श्रुतम्।
यातुधानाः प्रलुम्पन्ति शौचभ्रष्टाद्विजन्मनः॥

निवेदितं नैवेद्यं कृतम्।

शातातपः,—

शौचहीनाश्च ये विप्राः न च यज्ञोपवीतिनः।
कृतं दत्तं तपस्तेषां विनश्येच्चात्र संशयः॥

॥ इति गृहस्थरत्नाकरे शौचतरङ्गः॥

---

१ (ख) पुस्तके ध्यानम्।

## अथ ब्रह्मचर्य्यम्।

तत्र हारीतः—

ब्रह्मचर्य्यं नाम दिव्यमानुषीणां चित्रस्थ-काष्ठस्थ-पोतस्थ-मृण्मयादीनामप्यप्रार्थनमस्मरणमसंकल्पनमनभिप्रेक्षणमसङ्कीर्त्तनमनभिभाषणमनभिगमनमसन्दर्शनमसमागमश्चासाम्।

तच्च ब्रह्मचर्य्यं चतुर्विधं भवति। कृष्णं रक्तं शुक्लं विमलमिति। तत्र परदारवर्ज्जनं नित्यं स्वदारगमनं कृष्णम्। पर्व्वणि नियमे वर्ज्जनं रक्तम्। ऋतुकालाभिगमनं शुक्लम्। ऊर्द्ध्वरेतस्त्वं विमलम्।

एवं ह्याह,—

कृष्णेनेमं जयेल्लोकं मध्यं रक्तेन वै जयेत्।
शुक्लेन तु जयेत् स्वर्गं विमलान्मोक्षमाप्नुयात्॥

दिव्या उर्व्वश्याद्याः शास्त्रप्रसिद्धाः। पोतस्थाः पोतं प्रतिमाकरणयोग्यं रजतादि तत्रस्थास्तन्निर्म्मिताः। अप्रार्थनं सा मम भूयादित्याशंसाविरहः। असङ्कल्पनमहमेवं करिष्यामीत्यभिसन्धिविरहः। अनभिप्रेक्षणमाभिमुख्येनावलोकनविरहः। अनभिभाषणमाभिमुख्येन साभिलाषभाषणविरहः। अनभिगमनमाभिमुख्येनानागमनम्। असन्दर्शनं सकलावयवावलोकनविरहः। असमागमः संयोगविरहः।

सर्व्वे चैते रागजा निषेध्या इति ज्ञेयम्। पर्व्वणि नियमे वर्ज्जनम् पर्व्वण्यमावास्यादौ नियमे द्वादशीव्रतादौ च वर्ज्जनं त्यागः।

॥ इति गृहस्थरत्नाकरे ब्रह्मचर्य्यतरङ्गः॥

## अथ नियमः ।

तत्र हारीतः,—

क्रोधनियमवर्ज्जनमकल्कता सन्तोषो गुरुशुश्रूषा चेति नियमः । कर्म्मनियमो वाङ्नियमश्चेति क्रोधनियमः । मानसात् क्रोधाच्चित्त-परितापात् पीड्यमानस्य वैवर्ण्य-वैकल्यादयो व्याधयः संभवन्ति ।

अहङ्कारेर्ष्याऽसूया-द्वेष-परोपतापादीनि च क्रोधरूपाणि । वाग्लक्षणादप्रियपरुषवादिता नानाविधवाक्यदर्शनादयः । कर्म्म-लक्षणाः केशग्रहणसंप्रहरणादयः । अपरशरीरत्रिप्रयोगकराश्चेति ।

यैरुपसृष्टः सुविद्वानप्यत्रमादमुपैति तस्मादेतान् वर्ज्जयेत् ।

एवं ह्याह,—

आक्रुष्टस्ताड़ितः क्षिप्तः क्षमते यो न कुप्यति ।
स तस्य दुष्कृतं दत्त्वा सुकृतं सर्व्वमाप्नुयात् ॥

इति तस्याक्रोशनादिकर्त्तुः ।

यमः,—

यत् क्रोधनो जपति यज्जुहोति यद्वा तपस्तप्यति यद्ददाति वैरोचनिस्तद्धरतेऽस्य सर्व्वम्, मोघंश्रमो भवति ।

अस्य क्रोधनस्य वैरोचनिर्बलिः ।

हारीतः,—

[१]कृतिर्नियमो शौच्यं नियमार्ज्जवं कपट माया व्याजयुक्ता निकृतिः काठिण्यासाध्य-वैषम्यदौर्ज्जं सद्भावयुक्तं कृतनियमार्ज्जवं भवति ।

१ (ख) निष्कृतिः ।

एवं ह्याह,—

जैह्म्यं मृत्युपदं प्राहुर्निष्कृतिस्तमसः पदम् ।
सर्व्वभूतात्मभूतत्वादार्ज्जवं ब्रह्मणः पदम् ॥

स्मयनियमः शूनानियमः सेवानियमोऽदम्भस्वेत्यकल्कता ।

ज्ञान-दान-तप-ऐश्वर्य्य-भोगविशेषैः स्मयं वर्ज्जयेत् । स्मयोपपन्नास्तेजसाऽवपन्नाः सम्भवन्ति पञ्चशूनासम्पन्नं सम्भूतं पापमयमित्युच्यते । ऋषिणो हि प्रेतीभूता बीजवज्जायन्ते तस्मात्स्वात्मार्थं शूनां कारयेत् । विविधशिल्पप्रयोगैः सेवाविशेषैः परानत्यर्थं नोपासरेत् । अविद्वान् विद्वत्तां ख्यापयति, अदाता दानं, अयज्वा यज्ञम् । तपस्वी तपोऽनाश्रम्याश्रममलिप्सन् । तेनैवं वृत्तानां दुष्कृतं कृतं भवति ।

एवं ह्याह,—

किं तेन न कृतं पापं चौरेणात्मापहारिणा ।
योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते ॥

कल्क कल्कपरमतितिरोधानमिति यावत् । व्याजोऽर्थान्तरेणोपन्यासः । काठिन्यं करुणाविरहः । असाध्यं अयथाहृदयं नागादिप्रदर्शनं, वैषम्यं निगूढपराभिधानम् ।

दौश्यं परसुखासहिष्णुता । निकृतिः जैह्म्यं स्मयो दर्पः । अवपन्ना हीनाः, अज्ञानुमित्यर्थग्रहादिशाठ्यं न दोषः । एवंवृत्तानां विद्वदादीनाम् । अन्यथा प्रतिपद्यते अन्यथा ख्यापयति ।

मनुः— न धर्म्मस्यापदेशेन पापं कृत्वा व्रतञ्चरेत् ।
व्रतेन पापं प्रच्छाद्य कुर्व्वन् स्त्री-शूद्र-दम्भनम् ॥

प्रेत्येह चेदृशो विप्रो गर्ह्यते ब्रह्मवादिभिः।
छद्मना चरितं यच्च व्रतं रक्षांसि गच्छति॥
अलिङ्गी लिङ्गवेषेण यो वृत्तिमुपजीवति।
स लिङ्गिनां हरत्येनस्तिर्य्यग्योनौ च जायते॥

यमः,—

सर्व्वत्र विद्यते व्याजो धर्म्मे व्याजो न विद्यते।
व्याजोपहतधर्म्माणां स्वर्गे वासो न विद्यते॥
तपो न कल्कोऽध्ययनं न कल्कः
स्वाभाविको वेदविधिर्न कल्कः।
प्रसह्य वित्ताहरणं न कल्कः
तान्येव भावोपहतानि कल्कः॥

कल्कः पापं, स्वाभाविको नौपाधिकः। प्रसह्यवित्ताहरणं भ्रान्त्या नर्म्मणा वा स्वाम्यननुमतवस्तुग्रहणम्।

हारीतः,—

शूनानियमौ सेवानियमौ स्तेयाविक्रयविक्रयौ। अयाज्य-याजनासत्प्रतिग्रह-शूद्रश्रावण-म्लेच्छाध्यापनार्थयोगपरिग्रहनिवृत्त्या लोभनियमे सन्तुष्टो भवति।

एवं ह्याह,—

सन्तोषः परमो धर्म्मः सन्तोषः परमं पदम्।
सन्तोषः परमं कर्म्म सन्तोषः परमन्तपः॥
सन्तोषः परमं श्रेयः सन्तोषः परमं यशः।
सन्तोषः परमा सिद्धिः सन्तोषः परमं सुखम्॥

शूद्रश्रावणं सुपाचताख्यापनार्थं शूद्रस्याग्रे वेदपाठः। अर्थयोगपरिग्रहः पाठनिष्ठापूर्व्वकः परिग्रहः। सन्तोषः परमो धर्म्म इति धर्म्मादीनां सन्तोषमूलत्वादभेदोपचारः।

पुनर्हारीतः,—

यमेषु नियमेषु चाप्रमत्त-
स्तिष्ठति याति लोकान् वरिष्ठान्।
भ्रष्टस्तेभ्यो वि[1]विधा याति योनी-
र्यासूत्पन्नो मज्जते यातनासु?॥
तेभ्यो धीरः शुश्रूषावाञ्छ्यायवृत्तो
यस्मिन् यशो न व्ययते नापि धर्म्मः।
धर्म्मो ह्येषः सुसहायो जनानां
य एतान् घोरात् त्रायते मृत्युयोगात्॥ इति।

तेभ्यो यमनियमेभ्यः शुश्रूषावान् श्रुतवान्॥

॥ इति गृहस्थरत्नाकरे यमनियमतरङ्गः॥

---

१ (ग) पुस्तके विधवायोनीर्याति।

## अथ कुलनाशनानि।

तत्र यमादयः,—

देवद्रव्यविनाशेन परस्वहरणेन च।
कुलान्यकुलतां यान्ति ब्राह्मणाऽतिक्रमेण च॥

मनुः,—

कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च।
कुलान्यकुलतां यान्ति ब्राह्मणाऽतिक्रमेण च॥
शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया॥
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्म्मणा।
कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः॥
मन्त्रतस्तु समृद्धानि कुलान्यल्पधनानि च।
कुलसंख्याञ्च गच्छन्ति कर्षन्ति च महद्यशः॥

ब्राह्मणातिक्रमेण ब्राह्मणावज्ञानेन। शिल्पं चित्रादिकर्म्म। व्यवहारोऽनापदि ऋणादानादिरूपः। गोभिरश्वैरित्यत्र वृत्त्यर्थमुपात्तैरित्यर्थः। सेवाऽन्यद्भावपूर्व्वकं पराराधनम्। नास्तिक्यं कर्म्म, नास्ति परलोक इति बुद्ध्या व्यापारः।

दक्षः,—

अनृतं पारदार्य्यञ्च तथाऽभक्ष्यस्य भक्षणम्।
[1]अगम्यागमनञ्चैव हिंसा स्तेयं तथैव च॥

१ मूलपुस्तके पाठः— अगम्यागमनापेयपानं स्तेयञ्च हिंसनम्।

अश्रौतधर्म्माचरणं मैत्रधर्म्मबहिष्कृतम् ।
एतानि नव कर्म्माणि विकर्म्माणि विवर्ज्जयेत् ॥
मैत्रधर्म्मबहिष्कृतं मैत्र-धर्म्मयोर्बहिष्करणं त्याग इत्यनुषङ्गः ॥

॥ इति गृहस्थरत्नाकरे कुलनाशतरङ्गः ॥

---

## अथ निवासः ।

तत्र बृहस्पतिः,—

निवासमुख्यो वर्णानामाचारः समुदाहृतः ।
गुणदोषसमुद्भूतिर्लोके संसर्गजा स्मृता ॥
भूमि-माल्य-कुशेधाम्ब-शस्याम्बु-द्विजनैगमे ।
निष्कण्टके च धार्म्मिक्ये वसेत् स्थाने निरामये ॥

निवासोऽत्र ग्रामः । नैगमोऽत्र वालकः । कण्टकोऽत्र उपतापाग्निप्रदचौरादिः । धार्म्मिक्ये धर्म्मिजनप्रधाने । निरामये देशे स्वभावज-रोगशून्ये ।

आपस्तम्बः,—

प्रभूतैधोदके ग्रामे यत्रात्माधीनं प्रयमणं तत्र वासो ब्राह्मणस्य ।

प्रयमणं पावित्र्यहेतुः कुशगोमयादिः ।

१ (ग) पुस्तके दक्षिणा ।

बौधायनः,—

प्रभूत-यवसेधोदकसमित्कुशमाल्योपनिष्क्रमणमाढ्यजनाकुलमनलस-समृद्धमदस्युप्रतिवेशं[1] ग्राममावसितुं यतेत धार्म्मिकः।

उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः।

उषित्वा द्वादशसमाः शौद्रं साधर्म्म्यमृच्छति॥

पुररेणु-गुण्ठितशरीरः तत्परिपूर्णनेत्र-वदनस्तु नगरे वसन् सुनियतात्मा सिद्धिमवाप्स्यतीति। न च तदस्ति।

रथाश्वगजधान्यानां गवाञ्चैव रजः शुभम्।

अप्रशस्तं समूहिन्याः श्वाऽजाऽवि-खर-वाससाम्॥

उपनिष्क्रमणं 'निष्क्रमणधर्म्मः'। अनलसं 'सोद्योगजनम्'। अदस्युप्रतिवेशं चौरसान्निध्यशून्यम्'

उदपानोदके कूप एव यत्रोदकं, नगरे पुरे। पुरस्य विवादरत्नाकरे विवृतम्। नगरे वसन् सन् नियतात्मा सिद्धिमाप्नोति यद्यपि। तथापि समूहिन्यादिरजसां सम्पर्कस्यापरिहार्य्यतया नगरे न वस्तव्यमिति तात्पर्य्यम्।

यमः,— एककूपोदके ग्रामे ब्राह्मणो वृषलीपर्तिः

वर्षेण शूद्रो भवति कृष्णवर्णमुपाश्रितः॥

कृष्णवर्णः शूद्रः।

आपस्तम्बः,—

क्षुद्रान् क्षुद्रचरितान् देशान् न वसेत्। असतां सभाजनं न गच्छेत्। प्रदक्षिणीकृत्योपेयात्। नगरप्रवेशनानि च वर्ज्जयेत्।

---

[1] मूले प्रवेशम्।

क्षुद्रान् जलादिनारुद्धगतागतमार्गान् चाण्डालादिभिरध्युषितान् न सेवेत। वासार्थं नगरप्रवेशनभूमौर्वर्ज्जयेत्।

मनुः,—

नाधार्म्मिके वसेद्ग्रामे न व्याधिबहुले भृशम्।
नैकःप्रपद्येताध्वानं न चिरं पर्व्वते वसेत्॥
न शूद्रराज्ये निवसेन्नाधार्म्मिकजनावृते।
न पाषण्डिजनाक्रान्ते नोपसृष्टेऽन्त्यजैर्नृभिः॥
न संवसेच्च पतितैर्न चाण्डालैर्न पुक्कशैः।
न मूर्खैर्नावलिप्तैर्वा नान्त्यैर्नान्त्यावसायिभिः॥

विष्णुः,—

न शूद्रराज्ये निवसेन्नाधार्म्मिकजनाकीर्णे न सांवत्सरिक-वैद्य-विहीने नोपसृष्टे न चिरं पर्व्वते।

व्यासः,—

तत्र तावन्न वस्तव्यं यत्र नास्ति चतुष्टयम्।
ऋणप्रदाता वैद्यश्च श्रोत्रियः सजला नदी॥
तत्र तात न वस्तव्यं यत्रैतत्त्रितयं[1] सदा।
विजिगीषुः पूर्व्ववैरी जनश्च सततोत्सवः।
सजला सर्व्वदा सेव्यजला जनो मूर्खः॥

मार्कण्डेयपुराणे,—

जितामित्रो नृपो यत्र बलवान् धर्म्म-तत्परः।
तत्र नित्यं वसेत्प्राज्ञः कुतः कुनृपतौ सुखम्॥

१ (ग) सन्तत।

यत्राप्रधृष्यो नृपतिर्यत्र शस्यप्रदा मही।
पौराः सुसंयता यत्र सततं न्यायवर्त्तिनः॥
यत्रामत्सरिणो लोकास्तत्र वासः सुखोदयः।
यस्मिन् कृषीवला राष्ट्रे प्रायशो नातिभोगिनः॥
यत्रौषधान्यशेषाणि वसेत्तत्र विचक्षणः।
वसेन्नित्यं सुशीलेषु सद्वासिषु पण्डितः॥

महाभारते,—

यत्रागमयमानानामसत्कारेण पृच्छताम्।
प्रब्रूयाद्ब्राह्मणो धर्म्मन्त्यजेत्तं देशमात्मवान्॥

आगमयमानानां तर्ज्जनं कुर्व्वताम्।

तथा,—

शिष्योपाध्यायिका वृत्तिर्यत्र स्यात्सुसमाहिता।
यथावच्छास्त्रसम्पन्ना कस्तं देशं परित्यजेत्॥
आकाशस्थोऽब्रुवन् (?) यत्र ब्रूयाद्दोषं विपश्चित
आत्मपूजातिकामो वै को वसेत्तत्र पण्डितः॥

आकाशस्थो निमित्तशून्यः।

तथा,—

यत्र सन्तापिता लुब्धैः प्रायशो धर्म्मसेतवः।
प्रदीप्तमिव चेलान्तं कस्तं देशं न सन्त्यजेत्॥

धर्म्मसेतवः धर्म्ममर्य्यादास्थापकाः। प्रदीप्तमग्निना चेलं वस्त्रम्॥

तथा,—

यत्र धर्म्ममनाशङ्क्य चरेयुर्वीतमत्सराः।

चरेत्तत्र वसेन्नैव पुण्यशीलेषु साधुषु ॥
धर्म्ममर्थनिमित्तञ्च चरेयुर्यत्र वा नराः।
न तत्र तु वसेज्जातु ते हि पापकृतो नराः ॥
कर्म्मणा यत्र पापेन वर्त्तन्ते जीवितेप्सवः।
व्यवधारेत्ततस्तूर्णं ससर्पाच्छरणादिव ॥

व्यवधारेत् झटित्यपसरेत्।

तथा,—

यत्र राजा च राज्ञश्च पुरुषाः प्रत्यनन्तराः।
कुटुम्बिनामग्रभुजः त्यजेद्राष्ट्रं तदात्मवान् ॥
श्रोत्रियास्त्वग्रभोक्तारो धर्म्मनित्याः सनातनाः।
याजनाध्यापनायुक्ता यत्र तद्राष्ट्रमावसेत् ॥
स्वधा स्वाहा वषट्कारा यत्र सम्यगनुष्ठिताः।
अजस्रं चैव वर्त्तन्ते वसेत्तत्राविचारयन् ॥
[१]अशुचीन् यत्र पश्येत ब्राह्मणान् वृत्तिकर्षितान्।
त्यजेत्तद्राष्ट्रमासन्नमुपसृष्टमिवामिषैः ॥
प्रीयमाणा नरा यत्र प्रयच्छेयुरयाचिताः।
सुस्थचित्तो वसेत्तत्र कृतकृत्य इवात्मवान् ॥
दण्डो यत्राविनीतेषु सत्कारश्च कृतात्मसु।
चरेत्तत्र वसेच्चैव धर्म्मशीलेषु साधुषु ॥

अविनीता दण्डोचितापराधवन्तः।

१ (ग) पुस्तके अधिकं पद्यद्वयं।

देवलः,—

अरण्यं देवतास्थानं तीर्थान्यायतनानि च।
यस्मात्तेषु मृता लोका लोकान् यान्ति दिवौकसाम्॥

अरण्यं नैमिषादि, देवतास्थानं पुरुषोत्तमादिस्थानं, तीर्थं गङ्गादि, आयतनं काश्यादि। एतेषु मृता लोका यस्माद्दिवौकसां लोकान् यान्ति तस्मादेतेषु वसेदिति तात्पर्य्यम्॥

॥ इति गृहस्थरत्नाकरे निवासतरङ्गः॥

---

## अथ वाच्यावाच्ये।

तत्र मनुः,—

भद्रभद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत्।
शुष्कवैरं विवादञ्च न कुर्य्यात्केनचित् सह॥

भद्रं वस्तु भद्रमिति ब्रूयात् न त्वभद्रम्। अथ प्रथमं भद्रपदं भद्रेतरवस्तुपरं[1] तेन यच्च मन्दं तद्भद्रमित्येव वक्तव्यम्। भद्रं वस्तु भद्रमिति वक्तव्यमेवेत्यर्थः। शुष्कं निष्प्रयोजनम्।

आपस्तम्बः,—

न-भद्रं भद्रं ब्रूयात्। पुण्यं प्रशस्तमित्येव ब्रूयात्।

१ (क) पुस्तके तदितरवस्तुपरम्।

विष्णुपुराणे,—

विरोधं नोत्तमैर्गच्छेन्नाधमैश्च सदा बुधः।
विवादश्च विषादश्च तुल्यरूपैर्नृपेष्यते॥
नारभेत कलिं प्राज्ञः शुष्कवैरञ्च वर्ज्जयेत्।
अप्यर्थहानिः सोढ़व्या वैरेणार्थागमं त्यजेत्॥

विष्णुः— नाश्लीलं कीर्त्तयेत् नानृतं नाप्रियम्। न कश्चिन्मर्म्माणि स्पृशेत्।

अश्लीलमकीर्त्तनीयम्। तच्चानृताप्रियाभ्यां भिन्नमिह बोद्धव्यम्। मर्म्माऽप्यत्र गोप्यदूषणम्।

आपस्तम्बः,—

गोर्दक्षिणानां कुमार्य्याश्च परीवादान् वर्ज्जयेत्।

स्पृहयन्तीञ्च गां नाचक्षीत। संसृष्टां वत्सेनानिमित्ते। नाधेनुमधेनुरिति ब्रूयात्। धेनुं भव्येत्येव ब्रूयात्।

गोरदक्षिणारूपायास्त्वपि दक्षिणानां वस्त्रहिरण्यादीनां दक्षिणात्वेन कल्पितानाम्। स्पृहयन्तीं धान्यादि भक्षयितुं प्रवृत्ताम्, स्पृष्टां वत्सेन पाययितुमिति शेषः। अनिमित्ते क्रतुवैगुण्यनिमित्ताभावे। धेनुंभव्येति शब्दो धेनुर्भविष्यतीत्यर्थे धेनोर्भव्यायां नुम् वक्तव्यमिति नुमागमः।

शङ्खलिखितौ,—

नेन्द्रधेनुश्चन्द्रसूर्य्यपरिवेषोल्काः परस्मै कथयेत्। नात्मनः प्रतिकूलं न महाजनप्रतिकूलं कुर्य्यात्। न गोष्ठीभिः सम्बध्येत।

महाजनप्रतिकूलं महाजनविरोधः। महत्त्वं वेदार्थज्ञानादिना। गोष्ठीभिर्दुष्टकथाभिः।

पैठीनसिः,—

मत्तोन्मत्त-प्रमत्तैस्सह सम्भाषणं न कुर्य्यात्। न परस्त्रियं रहसि सम्भाषयेत्। प्रमत्तोऽनवहितः।

सांख्यायनगृह्यम्। सूतिकोदक्याभ्यां न संवदेत्।

गौतमः,—

न म्लेच्छाशुच्यधार्म्मिकैः सम्भाषेत। सम्भाष्य पुण्यकृतो मनसा ध्यायेत्। ब्राह्मणेन सह संभाषेत। अधेनुं धेनुंभव्येति ब्रूयात्। अभद्रम्भद्रमिति कपालम्भगालमिति। [1]मामधनुरितीन्द्रधनुः। गां धयन्तीं परस्मै नाचक्षीत। न चैनां धारयेत। म्लेच्छास्तु पुक्कसादयः। अधार्म्मिकाः पतितादयः। सह तैर्न संभाषेत। संकथां न कुर्य्यादित्यर्थः।

तदुक्तं पाषण्डाधिकारे विष्णुपुराणे,—

पुण्यं नश्यति सम्भाषादेतेषान्तद्दिनोद्भवम्। इति।

पारस्करः,—

गर्भिणीं विजन्येति ब्रूयात्। सकुलमिति न कुलम्।

यमः,—

तिथिं पक्षस्य न ब्रूयात् नक्षत्राणि न निर्द्दिशेत्।

जीवनार्थमद्येयं तिथिरद्येदं नक्षत्रमिति न ब्रूयादित्यर्थः।

[2]देवलः,—

जीवेति ब्रुवतो ब्रूयात् जीवेत्युक्तः सहेति च।

सहेत्येकवचनजनितक्रोधप्रतिषेधः।

१ क्वचित् मणिधनुः। २ (ग) पुस्तके देवलस्थाने शङ्खलिखितपदम्।

न परस्यैवागारे गां चरन्तीं परस्मै कथयेत्। न गोब्राह्मणो-परोधेऽश्नीयात्। न वाद्यमाने वाद्यतामिति ब्रूयात्। उपरोधे आसने सति।

बौधायनः,—

नायुक्ता रूक्षाः परुषा वाचो ब्रूयात्।

हारीतः,—

न गां चरन्तीं परस्यैवावतीर्णाम्बाचक्षीत पिबन्तं परवत्सकम्।

आपस्तम्बः,—

वर्ज्जयेत् स्तुतिं गुरोः सुस्नातमिति।

सुस्नातमिति स्नानप्रशंसनम्।

तथा वाक्येन वाक्यस्य प्रतिघातमाचार्य्यस्य विवर्ज्जयेत्। श्रेयसाञ्च। सर्व्वभूतपरीवादाक्रोशांश्च। विद्यया च विद्यानाम्।

श्रेयसां प्रशस्तानां प्रतिघातं विवर्ज्जयेत् सर्व्वभूतपरी-वादाक्रोशांश्च वर्ज्जयेदित्यर्थः। विद्यया विद्यानां प्रतिघातं वर्ज्जयेत्।

सांख्यायनगृह्यम्,—

न जनसमवायं गच्छेत्। नोपविशेत्। समेनेत्याक्रोशनो-ऽपिशुनोऽकुलं कुलं नेतिहेतिह स्यात्।

कुलं कुलप्रयोजनं विना परगृहगमनशीलः। इतिहेतिह इतिहत्तमिति प्रकाशनशीलः।

महाभारते,—

पद्मानां शोभनं पद्मं ऋषीणां सिध्यतां ऋषिः।
बहुकारञ्च शस्यानां वाह्येऽवाह्यं यथा गवाम्॥

सम्पन्नं भोजने ब्रूयात् पानीये तर्पणन्तथा।
अमृतं पायसे ब्रूयात् यवाग्वां कृशरे तथा॥
श्मश्रुकर्म्मणि सम्प्राप्ते व्रते स्नाने च भोजने।
व्याधितानाञ्च सर्व्वेषामायुष्यमभिनन्दनम्॥
महात्मनाञ्च गुह्यानि न वक्तव्यानि कर्हिचित्।
लङ्कारं नामधेयञ्च ज्येष्ठानां परिवर्ज्जयेत्॥
अधराणां समानानामुभयेषां न दुष्यति।

पण्यानामिति पण्यानां कृते शोभनं पण्यमिति बहुकारञ्च शस्यानामिति भोजने भोजनसाधने भक्ष्यादौ सम्पन्नमिति ब्रूयात्। पानीये पातव्ये दुग्धादौ तर्पणमिति, व्याधितानां रोगिणां कृते आयुष्यमभिनन्दनमिति ब्रूयात्। अधराणां वयोगुणादिभिरेवं समानानामपि॥

विष्णुः,—

न विग्टह्य कथां कुर्य्यात्।

विग्टह्य आक्षिप्य विवादकारणं विनेति पारिजातः।

यमः,—

अनिन्द्या ब्राह्मणा गावः काञ्चनं सलिलं स्त्रियः।
पृथिवीं वनितामापि यो निन्दति स निन्दितः॥

हारीतः,—

न देव गो गुरु ब्राह्मणपरीवादं कुर्य्यात्। न चैषां दीयमानमपि वारयेत्॥

चाण्डाल-शपथे ब्रह्मपुराणे,—

पूर्व्वभुक्तां स्त्रियं यस्तु निन्देत् सर्व्वाङ्गसुन्दरीम् ।
[1][ तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥ ]
भुक्त्वा पश्येति चान्नानि यस्तु निन्दति निर्गुणः ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥
श्रुत्वा परस्य वाक्यानि भवेद्यन्मन्त्रभेदनम् ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥
विद्यां गृह्य यथान्यायं निन्दते च पुनर्गुरुम् ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥
यस्तु निन्दति राजानं ब्राह्मणं यस्तु निन्दति ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥

ब्रह्माण्डपुराणे,—

मा स्मै देहीति चैवं यः प्रब्रवीति दुरात्मवान् ।
अपि जातिशतं गत्वा न स मुच्येत किल्बिषात् ॥

विष्णुः,—

देव-ब्राह्मण-महात्मनां परीवादं परिहरेत् ।

[ शास्त्रं विद्यास्थानमिति लक्ष्मीधरः ]

मार्कण्डेयपुराणे,—

वेद-देव-द्विजातीनां साधु-सत्य-महात्मनाम् ।
गुरोः पतिव्रतानाञ्च तथा यज्वि-तपस्विनाम् ॥

---

१ क्वचित् [ ] चिह्नितांशोऽधिकः ।

परीवादं न कुर्व्वीत परिहासेऽपि पुत्रक।
कुर्व्वतामविनीतानां न श्रोतव्यं कथञ्चन॥

महाभारते,—

सदा नारायणन्देवं सर्व्वपापहरं प्रभुम्।
निन्दमानो नरः शीघ्रं नरकेषूपपद्यते॥

वराहपुराणे,—

विष्णु-रुद्रान्तरं ब्रूयात् लक्ष्मी[1] गौर्य्यन्तरन्तथा।
तन्नास्तिकानां मर्त्त्यानां काव्यं शास्त्रविगर्हितम्॥

अन्तरं भेदं, काव्यं कल्पितं न प्रमाणमित्यर्थः।

यमः,—

यस्तु निन्द्यात् परं जीवन् प्रशंसत्यात्मनो गुणान्।
स वै वार्द्धुषिको नाम ब्रह्मवादिषु गर्हितः॥

तथा,—

परोक्षाणि परेषाञ्च परीवादञ्च वर्ज्जयेत्।
नैवं ब्रूयान्न शृणुयात् दुष्टवाक्यं कथञ्चन॥
ब्राह्मणानां विशेषेण कदाचिदपि केनचित्।
दुष्टवाक्यं न वक्तव्यं ब्राह्मणानां कदाचन॥
तुष्णीमासीत निन्दायां न ब्रूयात् किञ्चिदुत्तरम्।
ब्राह्मणानां परीवादं न कुर्य्यान्नैव कारयेत्॥
यद्ब्राह्मणेषु कुशलं सदेवाशु समाचरेत्।
ब्राह्मणानां परीवादो निन्दा यत्र प्रवर्त्तते॥

---

१ क्वचित् परीहासश्च। २ (ग) यत्र —।

नृप-बन्धु-गुर्व्वमात्य-भिषक्-ज्योतिः पुरोहितैः ।
विरोधात् सुमहद्दुःखं प्रीत्या सुखमवाप्नुते ॥

बन्ध्वादयो नृपसम्बन्धिनः । ज्योतिरिह ज्योतिषिकः ।

तथा च,—

न च वाचं वदेद्दुष्टां न च दीनां न कर्कशाम् ।

विष्णुपुराणे,—

शमं नयति यः क्रुद्धान् सर्व्वबन्धुरमत्सरी ।
भीताश्वासनकृत् साधुः स्वर्गस्तस्याल्पकं फलम् ॥

शममुपशान्तिम् ।

मत्स्यपुराणे,—

कार्त्तवीर्य्यार्ज्जुनो नाम राजा बाहुसहस्रभृत् (धृक्) ।
योऽस्य सङ्कीर्त्तयेन्नाम कल्य उत्थाय मानवः ॥
न तस्य वित्तनाशः स्यान्नष्टञ्च लभते पुनः ।

स्कन्दपुराणे,— नन्दिनं प्रति महेश्वरः ।

अनामयश्चेतनावान्नामकीर्त्तयिता तव ।
सोऽश्वमेधफलञ्चैव लप्स्यते नाऽत्र संशयः ॥

पापदोषा इत्यनुवृत्तौ देवलः,—

तत्र परुषवचनमपवादः पैशून्यमनृतं वृथालापो नैष्ठुर्य्यमिति वाङ्मयाः षट् । परेषां देश जाति कुल विद्या शिल्प रूप-वृत्ताचारपरिच्छेद शरीरकर्म्माजीवानां यत्प्रत्यक्षं दोषवचनं तत् परुषम् ।

यच्चान्यत् क्रोध-सन्ताप-त्रास-संजननं वचः।
परुषन्तच्च विज्ञेयं तथान्यच्च तथाविधम्॥
चक्षुष्मानिति लुप्ताक्षं चाण्डालं ब्राह्मणेति च॥
प्रशंसा निन्दनं द्वेषात् परुषात्तद्विशिष्यते।
वृषलं वृषलेत्युक्त्वा पतितं पतितेति च॥
सत्येनापि च दोषः स्यान्मिथ्या द्विगुणभाग्भवेत्।

तेषामेव परुषवचनानां परोक्षमुदाहरणमपवादः। गुरु-नृपतिबन्धुसकाशेषु अर्थोपघातार्थं दोषाख्यानं पैशून्यम्। अनृतं विविधमर्थवादश्चेति।

तथा,—

देश राजप्रवादाच्च परार्थपरिकल्पनात्।
नर्महासप्रसङ्गाच्च विज्ञेयं व्यर्थभाषणम्॥
गुह्याङ्गाऽमेध्यसंज्ञानां वचनं निष्ठुरं विदुः।
यदन्यद्वा वचो नीचं स्त्रीपुंसोर्मिथुनाश्रितम्॥
इत्येवं यदि (?) कल्पस्य दुष्टवाक्यस्य भाषणात्।
इह चामुत्र च क्रूरमनर्थमधिगच्छति॥
हिताहितं मनुष्याणां केवलं वचसि स्थितम्।
तस्मात् संयोजयेद्वाचमप्रमत्तः परीक्ष्य च॥
दुश्चिकित्स्यतमं पश्चाद्दुरुक्तं हि वचो भवेत्।
क्षिप्रं विनिपतेच्चापि वचनं दोषसंस्थितम्॥

वृत्तं शीलं, आचारो नित्यनैमित्तिकानुष्ठानं, आजीवो जीविका।

यमः,—

पापं पापस्त्वमित्युक्त्वा चौरं चौरेति वा द्विजः
वचनात्तुल्यदोषः स्यान्मिथ्याद्विर्दोषतां व्रजेत् ॥
प्रत्यक्षं वा परोक्षं वा पतितं यदि पश्यति ।
प्रत्यादेशो न कर्त्तव्यो रक्षेदात्मानमात्मना ॥
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् ।
तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसिनाम् ॥

याज्ञवल्क्यः,—

मिथ्याभिशंसिनो दोषा द्विःसमो भूतवादिनः ।
मिथ्याभिशस्तदोषञ्च समादत्ते मृषां वदन् ॥

शातातपः,—

स्नातस्तु वरुणस्तेजो जुह्वतोऽग्निः श्रियं व्रजेत् ।
भुञ्जानस्तु यमस्त्वायुस्तस्मान्न व्याहरेत्त्रिषु ॥
स्नातः स्नानं कुर्व्वतः, न व्याहरेत् न भाषेत ॥

॥ इति गृहस्थरत्नाकरे वाच्यावाच्यतरङ्गः ॥

## अथ गमन-प्रवेशनविधिः।

तत्र मनुः,—

नाविनीतैर्व्रजेद् धूर्य्यैर्न चक्षुर्व्याधिपीड़ितैः।
न भिन्नशृङ्गाचिखुरैर्न बालधिविरूपितैः॥
विनीतैस्तु व्रजेन्नित्यमाशुगैर्लक्षणान्वितैः।
वर्णरूपोपसम्पन्नैः प्रतोदेनातुदन् भृशम्॥
नातिकल्यं नातिसायं नातिमध्यन्दिने स्थितम्।
नाज्ञातेन समं गच्छेन्नैको न वृषलैः सह॥

अविनीतैर्दोषवद्भिरशिक्षितैरिति पारिजातः। धूर्य्यैः पूर्व्वगृहीतैः, बालधिविरूपितैः छिन्नपुच्छैर्लक्षणान्वितैः प्रशस्तावर्त्तादियुतैः, वर्णः श्वेतशोणादिः, रूपं संस्थानविशेषः, प्रतोदनेन प्राजननेनातिमध्यन्दिने दुःसहादित्ये।

तथा,—

गवां यानञ्च पृष्ठेन सर्व्वत्रैव विगर्हितम्।

विष्णुः,—

नैकोऽध्वानं प्रपद्येत नाधार्म्मिकैः सार्द्धं न वृषलैः न विद्विड्भिः नातिप्रत्युषसि नातिसायं न सन्ध्ययोः। न मध्याह्ने नासन्निहितपानीयं नातितूर्णं न सततम्। न व्यालव्याधिताऽशस्तैः गोभिर्वा नादान्तैः।

असन्निहितपानीयमिति क्रियाविशेषणं सततमविश्रान्तं, व्यालः क्रूरः। अशस्तैरप्रशस्तैर्न्यूनच्छादिभिरिति यावत्। अदान्तैरवशैः।

हारीतः,—

पूर्व्ववृत्तिषु वृत्त्यर्थं नासूर्य्यमध्वानं गच्छेत्। न नियमवेलायां नानुदको नायज्ञोपवीती न वृषलैः सह।

पूर्व्ववृत्तिषु सतीषु असूर्य्यं रात्राविप्यर्थः। नियमवेला नित्यकर्म्मकालः।

विष्णुपुराणे,—

वर्षातपादिषु च्छत्री दण्डी रात्र्यटवीषु च।
शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत्॥
न चोर्द्धं तिर्य्यग् दूरं वा निरीक्षन् पर्य्यटेद्बुधः।
युगमात्रं महीपृष्ठं नरो गच्छेद्विलोकयन्॥

तथा,—

न दुष्टयानमारोहेत्। न कूलच्छायाः संश्रयेत्।
नैकः शून्याटवीं गच्छेन्न तु शून्यगृहं वसेत्॥

देवीपुराणे,—

नासहायो व्रजेद्रात्रौ नोत्पथे न चतुष्पथे।

स्कन्दपुराणे,—

सौमनन्दीति यः प्रोक्ता कान्तारं प्रतिपद्यते।
न तस्य द्वीपि-शार्दूल-सिंहाः कुर्य्युर्भयं क्वचित्॥

जावालः,— नैकोऽध्वानं प्रपद्येत
न रात्रौ नाऽरिणा सह।
न महावृक्षमारोहे-
न्न बाहुभ्यां नदीन्तरेत्॥

बौधायनः,—

नैकोऽध्वानं व्रजेन्न पतितैर्न स्त्रिया न शूद्रेण। न प्रतिषायं व्रजेत्।

पैठीनसिः— न गो-ब्राह्मणाग्नीनामन्तरेणोपेयात् ।

वशिष्ठः,—

नाग्निं ब्राह्मणञ्चान्तरेण व्यपेयात् । नाग्न्योर्न ब्राह्मणयोरनुज्ञाप्य वा ।

बौधायनः,—

पुरद्वारेन्द्रकील परिघान्तरेण नाभीयात् ।

प्रेषयोरन्तरेण न गच्छेत्। वत्सतन्त्रीं नो परिगच्छेत्। इन्द्रकील इन्द्रयष्टिः। परिघो मुद्गरः। प्रेषा हिन्दोला, वत्सतन्त्री अत्र वत्सबन्धनार्थं दाममाला। नाभीयात् नाभिमुखं गच्छेत् ।

आपस्तम्बः,—

गार्द्दभं यानमारोहणं विषमारोहणावरोहणानि च वर्ज्जयेत् । बाहुभ्यां न नदीतरं नावञ्च सांशयिकीम्।

आरोहणे कार्य्ये इति शेषः। तरं तरणं, सांशयिकी यस्यामारोहणेऽनिष्टस्योत्कटाशङ्का सा।

विष्णुः,—

न प्रवर्षति धावेत। न वृथा नदीन्तरेत्। न देवताभ्यः पितृभ्यश्च उदकमप्रदाय च। बाहुभ्यां भिन्नया नावा वा।

न तरेदिति प्रत्येकमनुषज्यते॥

याज्ञवल्क्यः,—

अयमेव वज्र इत्येवं मन्त्रं कृत्स्नमुदाहरेत् ।

वर्षत्यप्रावृतो गच्छेत् पुण्यात् प्रत्यक्त्विवा नरा ॥

स्वयमेव वज्रः सर्व्वं पाप्मानमपहन्ति इति सर्व्वं मन्त्रं पठन् वर्षत्यप्रावृतो गच्छेत् यावन्मन्त्रसमाप्तिः, ऊर्द्ध्वमनियमः । तावतै-वातिपाप्मनोपहतत्वादिति विश्वरूपाचार्य्यः ।

आपस्तम्बः,—

अभिमुखमग्निमाह्रियमाणं प्रतिष्ठितं भूमौ नाप्रदक्षिणीकृत्यो-पेयात् ।

भूमौ प्रतिष्ठितमग्निं प्रदक्षिणीकृत्वैव गच्छेदित्यर्थः ।

तथा,—

मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् ।
प्रदक्षिणानि कुर्व्वीत प्रज्ञातांश्च वनस्पतीन् ॥

प्रदक्षिणानि स्वशरीरापेक्षया दक्षिणपार्श्ववर्त्तीनि । प्रज्ञातान् प्रसिद्धान् वनस्पतीन् विना पुष्पं फलिनोऽश्वत्थादीन् ।

मार्कण्डेयपुराणे,—

विद्याऽधिकं गुरुञ्चैव द्विजं कुर्य्यात् प्रदक्षिणम् ।

प्रदक्षिणीकुर्य्यादित्यनुवृत्तौ विष्णुः,—

अग्नि-ब्राह्मण-गणिका-पूर्णकुम्भादर्श-च्छत्र-ध्वज-पताका-श्रीवृक्ष-वर्द्धमान-नन्द्यावर्त्तान् तालवृन्त-चामर-गजाज-गो-दधि-क्षीर-घृत-मधु-सिद्धार्थकांश्च वीणाचन्दनायुधार्द्रगोमयफलपुष्पार्द्रशाक-रोचनादूर्व्वाप्ररोहान् । उष्णीषालङ्कार-मणि-कनक-रजत-वस्त्रा-सन-यानामिषाणि च प्रज्ञारोद्धृतोर्व्वीवद्धैकपशुकुमारीमीनांश्च

श्रीवृक्ष-वर्द्धमान-नन्द्यावर्त्ताः सुवर्णदार्व्वादिनिर्म्मिताः छत्र

रत्नाकरादावस्माभिरुक्ताः ज्योतिःशास्त्रप्रसिद्धाः । श्रीवृक्षो वृक्षस्तु इति पारिजातः । भृङ्गारः सुवर्णकरकः । अलङ्कारो मुकुटम्" ।

मत्स्यपुराणे,—

अथेष्टानि प्रवक्ष्यामि माङ्गल्यानि यथाऽनघ ।
श्वेताः सुमनसः श्रेष्ठाः पूर्णकुम्भस्तथैव च ॥
[1]जलजानि च पुष्पाणि मांसमत्स्याश्च पार्थिव ।
गावस्तुरङ्गमा नागा बद्ध एकः पशुस्त्वजः ॥
त्रिदशाः सुहृदो विप्राः ज्वालितश्च हुताशनः ।
गणिका च महाभाग दूर्व्वा चार्द्रञ्च गोमयम् ॥
रुक्मं रौप्यं तथा ताम्रं सर्व्वरत्नानि वाऽनघ ।
औषधानि च सर्व्वाणि यवाः सिद्धार्थकास्तथा ॥
नृवाह्यमानं यानञ्च भद्रपीठन्तथैव च ।
खड्गं छत्रं पताकाश्च मृदश्चायुधमेव च ॥
राजलिङ्गानि सर्व्वाणि शवं रुदितवर्ज्जितम् ।
घृतं दधि पयश्चैव फलानि विविधानि च ॥
स्वस्तिकं वर्द्धमानञ्च नन्द्यावर्त्तं स कौस्तुभम् ।
मयश्चरितविन्यस्ता माङ्गल्यान्यपराणि च ॥
अक्षताः श्वेतमुख्याश्च तथा दर्पणमेव च ।
अञ्जनं रोचना चैव भृङ्गारो मक्षिकास्तथा ॥
वादित्राणां सुखः शब्दो गम्भीरश्च मनोरमः ।

१ क्वचित् पुस्तके जलजाः पक्षिणश्चैवः ।

गान्धार षड्ज ऋषभा ये च शस्तास्तथा स्वराः ॥
मेघाः शस्ता घनाः स्निग्धा गजबृंहितनिस्वनाः ।
अनुलोमा तड़ित् शस्ता शक्रचापस्तथैव च ॥
अनुलोमा ग्रहाः शस्ता दिक्पतिस्तु[१] विशेषतः ।
आस्तिक्यं श्रद्दधानत्वं तथा पूज्याभिपूजनम् ॥
शस्तान्येतानि सर्व्वज्ञ यच्च स्यान्मनसः प्रियम् ।
मनसस्तुष्टिरेवात्र परमं जयकारणम् ॥
एकतः सर्व्वलिङ्गानि मनसस्तुष्टिरेकतः ॥

आशोत्सुकत्वं मनसः प्रकर्षः
शुभस्य लाभो विजयप्रवादः ।
माङ्गल्यलाभश्रवणञ्च राजन्
ज्ञेयानि नित्यं विजयावहानि ॥

नृवाह्यमानं यानमिह नरेषितं यानं भद्रपीठः। स्वस्तिक-कौस्तुभाः स्वस्ववर्णादिघटिताः सन्निवेशविशेषाः। अनुलोमाः पृष्ठस्थाः। दिक्पतयः—

रविः शुक्रो महीसुनुः स्वर्भानुर्भानुजो विधुः ।
बुधो वृहस्पतिश्चैव दिशामीशास्तथा ग्रहाः ॥

इति वाक्यबोधिता बोध्याः। अस्त्रं शरादि वेध्यमायुधं तदन्यत्। तथापि खड्गस्य पुनरुपादानं मङ्गलातिशयत्वबोधाय।

विष्णुः,—

अथ मत्तोन्मत्तव्यङ्गान् दृष्ट्वा निवर्त्तेत। वान्त-विविक्त-मुण्ड-

१ (ग) वाक्पतिश्च ।

जटिल-वामनांश्च। काषायि-प्रव्रजित-मलिनांश्च। तैल-गुड़-शुष्क-गोमयेन्धनतृणपर्णभस्माङ्गारकांश्च। लवणक्लीवासव-नपुंसक-कार्पासरज्जुनिगड़मुक्तकेशांश्च।

क्लीवः स्त्रीपुंसव्यञ्जनवानपि रेतःशून्यः। आसवः सन्धानकः। नपुंसकः स्त्रीपुंसव्यञ्जनरहितः।

मत्स्यपुराणे,—

औषधानि च युक्तानि धान्यं कृष्णञ्च यद्भवेत्।
कार्पासञ्च तृणं शुष्कं गोमयेन्धनमेव च॥
इन्धनञ्च तथाङ्गारलगुड़ाश्च तथाऽशुभाः।
अभ्यक्तं मलिनं मुण्डं तथा नग्नञ्च मानवम्॥
मुक्तकेशं जरार्त्तञ्च[1] काषायाम्बरधारिणम्।
उन्मत्तकं तथा षण्डं[2] दीनञ्चाथ नपुंसकम्॥
अन्धः पङ्गुस्तथाचर्म्मकेशं बन्धनमेव च।
तथैवोद्धृतसाराणि पिण्याकादीनि यानि च।
चाण्डालाः श्वपचाश्चैव राजबन्धनपालकाः।
वधकाः पापकर्म्माणो गर्भिणी स्त्री तथैव च॥
तुष-भस्म-कपालास्थि भिन्नभाण्डानि यानि च।
रिक्तानि चैव भाण्डानि मृतं मारकमेव च॥
एवमादीनि चान्यानि न शस्तान्यपि दर्शने।
अशस्तो वाद्यशब्दश्च भिन्नभैरवजर्ज्जरः॥
एहीति पुरतः शब्दः शस्यते न तु पृष्ठतः।

१ (क) रुजार्त्तञ्च। २ (क) तथासत्वं।

गच्छेति पश्चाद्धर्म्मज्ञ पुरस्ताच्च विगर्हितः ॥
क्व यासि तिष्ठ मा गच्छ किन्ते तत्र गतस्य तु ।
अन्ये शब्दाश्च येऽनिष्टाः ते विपत्तिकराः पथि ॥
ध्वजादिषु तथा स्थानं क्रव्यादानां विगर्हितम् ।
स्खलनं वाहनानाञ्च वस्त्रसङ्गस्तथैव च ॥
निर्गतस्य च द्वारादौ शिरसश्चाभिघातिता ।
छत्रध्वजानां शस्त्राणां पतनञ्च तथाऽशुभम् ॥
वायुः सशर्करो रूक्षः सर्व्वदिग्भ्यः समुत्थितः ।
प्रतिलोमस्तथा नीचो विज्ञेयो भयकृद्द्विजः ॥
अनुकूलो मृदुः स्निग्धः सुखस्पर्शः सुखावहः ।
रूक्षा रूक्षस्वराश्चण्डाः क्रव्यादाश्च विगर्हिताः ।
अप्रशस्ते तथा ज्ञेये परिवेष-प्रवर्षणे ॥

औषधानि च युक्तानि परस्परमसक्तानि दशमूलीप्रभृतीनि । कृष्णधान्यं कालिङ्गादि (?) गोमयेन्धनं शुष्कगोमयम् । द्वितीयमिन्धनपदं तदितरेन्धनपरं, बन्धनं निगडादि, क्रव्यादा गृध्रादयः ।

दृष्टे निमित्ते प्रथममसङ्गल्यविनाशनम् ।
शङ्करं पूजयेद्विद्वान् तथैव मधुसूदनम् ।
द्वितीये च तथा दृष्टे प्रतीपे प्रविशेद्गृहम् ॥

मनुः,—

यज्ञं गच्छेच्च चावृत्तः ।

नमस्कर्त्तुं व्रजेत् कामं दिदृक्षुर्यज्ञकर्म्म च ।
कुलात्कुलं रहस्यार्थी सञ्चरेन्नानिमित्ततः ॥

अवृत्तोऽनाहूतः। कुलात्कुलं गृहाद्गृहं रहस्यं गोप्यम्। अनिमित्ततः प्रयोजनं विना।

शङ्खलिखितौ,—

न वधबन्धनसमवायं गच्छेत्। न दावं न वनस्पत्योरन्तरम्। न ऋषीणां प्रभवम्। न ऋषीणां वधबन्धनसमवाये।

वधबन्धनार्थो जनसमूहः। दावो वह्निः तत् समीपं न गच्छेत्। प्रभव उत्पत्तिस्थानं, कलापग्रामादिकमिति माधवस्वामी।

मनुः,—

अद्वारेण तु नातीयात् ग्रामं वा वेश्म वावृतम्।
रात्रौ च वृक्षमूलानि दूरतः परिवर्जयेत॥

शङ्खलिखितौ,—

न रात्रौ विचरेत्।

आपस्तम्बः,—

न कुसृत्या ग्रामं गच्छेत्। यदि प्रविशेत् नमो रुद्राय वास्तोष्पतय इत्येतामृचं जपेत्। अन्यां वा रौद्रीम्।

कुसृतिः कुमार्गः।

शङ्खलिखितौ,—

न वाह्यैरयुक्तैरपीतपानीयं पिबेत्। न ग्राममदत्वाऽश्नीयात्।

एकसार्थप्रयातं ये निःस्वमन्नार्थिनं नरम्।
अपास्य स्वादमश्नन्ति न इमे स्वर्गभोजनाः॥

देवलः,—

स्नावांसे भोजने चैव न त्यजेत् सहयायिनम्।
देवांत्रृपानृषींश्चैव आसन्नमपदं व्रजेत्॥

दक्षपुत्राणां भ्रात्रन्वेषणे प्रवृत्तानामनिवृत्तिमभिधाय—

विष्णुपुराणे,—

ततः प्रभृति वै भ्राता भ्रातुरन्वेषणे द्विजः।
प्रयातो नश्यति तथा तन्न कार्य्यं विजानता॥

॥ इति गृहस्थरत्नाकरे गमन-प्रवेशनतरङ्गः॥

---

## अथानाक्रमणीयानधिष्ठेयानि।

तत्र मनुः,—

देवतानां गुरोः प्राज्ञः[१] स्नातकाचार्य्ययोस्तथा।
नाक्रामेत् कामतश्छायां बभ्रुणो दीक्षितस्य च॥
स्वान्तु नाक्रामयेच्छायां क्लीवेन पतितेन च।
चण्डालेन भिषग्भिश्च नित्यरोगान्वितेन च॥

गुरुरिह पित्रादिः, आचार्य्यस्य पृथगुपादानात्। प्राज्ञः प्रशस्तमतिः। कामतो बुद्धिपूर्व्वकम्।

१ राज्ञ इति क्वचित् पाठः।

याज्ञवल्क्यः,—

देवर्त्विक् स्नातकाचार्य्य-राज्ञां छायां परस्त्रियाः ।
नाक्रमेद्रक्त-विण्मूत्र-ष्ठीवनोद्वर्त्तनानि च ॥

मनुः,—

मध्यन्दिनेऽर्द्धरात्रन्तु श्राद्धं भुक्ता तु सामिषम् ।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथम् ॥
उद्वर्त्तनमपस्नानं विण्मूत्रं रक्तमेव च ।
श्लेष्म-निष्ठ्यूत-वान्तानि नाधितिष्ठेत कामतः ॥
वैरिणं नैव सेवेत सहायं नैव वैरिणः ।
अधार्म्मिकं तस्करञ्च परस्यैव च योषितम् ॥

उद्वर्त्तनं कृतमलापकर्षणं यवचूर्णादि । अपस्नानं कृतस्नानोपयोगजलं निष्ठ्यूतमुद्गीर्णताम्बूलादि ।

तथा,—

अधितिष्ठेन्न केशानि भस्मास्थिक-कपालिकाः ।
न कार्पासास्थि न तुषान् दीर्घमायुर्जिजीविषुः ॥

कपालिकाः मृण्मयभाण्डखण्डाः । कार्पासास्थि कार्पासबीजम् ।

शङ्खलिखितौ,—

नोद्धत-कुहकैस्सह एकत्र तिष्ठेत् ।

उद्धतोऽविनीतः । कुहको वशीकरणादिनिष्ठः ।

हारीतः,—आचमनापमार्ज्जनापस्नान-तुष-भस्मास्थि-कपालिकैः सह्यचनाधितिष्ठेत ।

आचमनं शौचादिभाण्डं अपमार्ज्जनं मार्ज्जनोपयुक्त-कुशादि, कपालं खर्परम् ।

शङ्खलिखितौ,-

नाहेः कुलमधितिष्ठेत् । न तुष-कपाल-भस्म-केशास्थि-तृण संकार कूटेषु तिष्ठेत् ।

संकार अवकरः ।

मार्कण्डेयपुराणे,—

नाधितिष्ठेत् शकृन्मूत्र केश-भस्म-कपालिकाः ।
तुषाङ्गारास्थि शीर्णानि रज्जु-वस्त्रादिकानि च ॥
नाधितिष्ठेत्तथा प्राज्ञः पथि पत्राणि वा भुवि ।

आपस्तम्बः,—

पाणिमुखनं ब्राह्मणस्य नाप्रोक्षितमधितिष्ठेत् । न भूमावनन्तरितायामासीत ।

विष्णुपुराणे,—

चतुष्पथश्चैत्यतरुः श्मशानोपवनानि च ।
दुष्टस्त्रीसन्निकर्षश्च वर्ज्ज्यानि निशि सर्व्वथा ॥
पूज्यदेव-पूजकयोश्छायां नातिक्रमेद्बुधः ।
केशास्थिकरकामेध्य बलि-भस्म-तुषांस्तथा ॥
स्नानार्द्रां धरणीञ्चैव यत्नेन परिवर्ज्जयेत् ।
श्लेष्म-विण्मूत्र-रक्तानि सर्व्वदैव न लङ्घयेत् ॥

देवीपुराणे,—

श्मशाने तिष्ठेन्न च पर्व्वतमस्तके ।

न श्मशाने न देवानां प्रासादेषु कथञ्चन ॥
न चैव गोः प्रसूताया विश्वसेत् स्त्रीजनेषु च।
न मुखेन धमेदग्निं न तु खड्गन्तु लङ्घयेत् ॥
तथा चैवायुधान् सर्व्वान् यन्त्रोपस्करमार्ज्जनीः।
न प्रमत्तजनाकीर्णे न स्त्री-बालकसेविते।
गृहे वा गमनं कुर्य्यात् विश्वासे क्रीड़नानि च ॥

मार्कण्डेयपुराणे,—

नोत्कृष्टशय्यासनयोर्न-निकृष्टस्य चावहेत्।

तथा,—

नोद्यानादौ विकालेषु प्राज्ञस्तिष्ठेत् कदाचन।
न चालपेज्जनद्विष्टां [1]वीरहीनां न च स्त्रियम् ॥

॥ इति गृहस्थरत्नाकरेऽनाक्रमणीयानधिष्ठेयादितरङ्गः ॥

---

१ (क) पुस्तके वीरहीनां यथा स्त्रियं।

## अथानवलोकनीयानि।

तत्र विष्णुः—

नादित्यमुद्यन्तं वीक्षेत नास्तं यान्तं नोपरक्तं न वाससा तिरोहितं न चादर्शदर्शनाद्युपगतं न मध्याह्ने।

उपरक्तो राहुग्रस्तः।

शङ्खलिखितौ,—

नोद्यन्तमादित्यं वीक्षेत। नास्तं यान्तमाप्यायनञ्च तस्मै विधिवद्विदधीत।

आप्यायनमिहार्घादिना पूजनं तस्मै आदित्याय विधिवत् यथाशास्त्रम्॥

हारीतः—

न नग्नां स्त्रियं पुरुषं वा ईक्षेत नोदयास्तमयौ चन्द्रमार्कौ।

याज्ञवल्क्यः,—

नेक्षेतार्कं न नग्नां स्त्रीं न संसृष्टमैथुनाम्।
न च मूत्रं पुरीषं वा नाशुची राहु-तारकाः॥

देवलः,—

सूर्य्याचन्द्रमसौ चेतौ नक्षत्राणि च सर्व्वतः।
नोदीक्षेताशुचिर्नित्यं ग्रहानन्यांश्च मानवः॥
पतित-व्यङ्गचाण्डालोच्छिष्टाद्यान्नावलोकयेत्।
अन्यदृष्टिगतैरेतैस्सम्भाषेत नृणाम्बुधः[१]॥

विष्णुपुराणे,—

ज्योतिरमेध्यामस्तानि नाभिवीक्षेत च प्रभो।

१ (ग) वरः।

तथा,—

संवत्सरं क्रियाहानिर्यस्य पुंसोऽभिजायते ।
तस्याऽभिलोकनात् सूर्य्यो निरीक्ष्यस्साधुभिः सदा ॥

मार्कण्डेयपुराणे,—

देवता पितृ-सच्छास्त्र यज्ञ-सन्ध्यादिनिन्दकैः ।
कृत्वा तु स्पर्शनालापं शुद्ध्येतार्कावलोकनात् ॥
अवलोक्य तथोदक्यामन्त्यजं पतितं शवम् ।
विधर्म्मि-सूतिका-षण्ड विवस्त्रान्त्यावसायिनम् ॥
मृतनिर्य्यातकाश्चैव परदाररताश्च ये ।
एतदेव हि कर्त्तव्यं प्राज्ञैः शोधनमात्मनः ॥

एतानवलोक्येत्यन्वयः ।

कृतघ्नं मानवं दृष्ट्वा नरकेष्वपि कुत्सितम् ।
शुद्ध्यर्थं देवि द्रष्टव्याः सोमानलदिवाकराः ॥

सोमादीनां यथासम्भवं विकल्पः ।

हारीतः,—

अवगुण्ठित उच्छिष्टोऽमेध्यान्तरो नाभिभाषेत ।
नोर्द्ध्वं ज्योतींषि वीक्षेत न देवान् न वयस्तीन् ॥

अवगुण्ठित इत्यवगुण्ठितशिराः । अमेध्यान्तरोऽमेध्यदेश-स्थितः । नोर्द्ध्वमिति ऊर्द्ध्वपदावस्थितस्य ज्योतिर्दर्शने निषेधः ।

शङ्खलिखितौ,—

न स्त्रियं विवस्त्रां न पुरुषमन्यत्र स्नाभाय्यात् ।

स्नाभाय्यमत्र वाच्ये परिधानानभिज्ञता ।

गौतमः,—

न नग्नां परयोषितमीक्षेत, न नग्नां स्वस्त्रियमीक्षेत अन्यत्र-मैथुनात् । अनाप्तमकार्यकारिणम् । अनाप्तं वैरिणं अकार्य्यकारिणं नेक्षेदित्यनुषङ्गः ।

नेक्षेतेत्यनुवृत्तौ विष्णुः—

न क्रुद्धस्य गुरोर्मुखं, न तैलोदकयोः स्वां छायां, न मलवत्या-दर्शं, न पत्नीं भोजनसमये, न स्त्रियं नग्नां न कथञ्चन मेहमान न चानाकाशभ्रष्टं कुञ्जरं न चापि विषमस्थो वृषादियुद्धं नोन्मत्तं न मत्तं तथा न कूपमधितिष्ठेत न कूपमवलोकयेत् ।

शङ्खलिखितौ,—

तथा न कूप—स्वभ्राण्यवलोकयेत् ।

मनुः,

न विण्मूत्रमुदीक्षेत ।

तथा,—

नाश्नीयाद् भार्य्यया सार्द्धं नैनामीक्षेत चाश्नतीम् ।
क्षुवतीं जृम्भमाणां वा न चासीनां यथासुखम् ॥
नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तां मनावृताम् ।
न पश्येत् प्रसवन्तीञ्च तेजस्कामो द्विजोत्तमः ॥

॥ इति गृहस्थरत्नाकरेऽनवलोकनीयतरङ्गः ॥

———

# अथ शूद्राप्रदेयानि।

तत्र मनुः,—

न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम्।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्॥
यो ह्यस्य हि धर्ममाचष्टे यश्चैवादिशति व्रतम्।
सोऽसंवृतं नाम तमस्तेनैव सह गच्छति॥

मतिं दैवविषयां अदृष्टार्थकार्य्यविषयमिति कल्पतरुः। उच्छिष्टं भक्तशेषविषयम्। अयञ्चोच्छिष्टदानप्रतिषेधोऽनाश्रित-शूद्रविषयः। आश्रितं प्रति—

उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च।

इति मनुवचनात्।

इतरे तु प्रतिषेधाः सङ्कोचाभावानुरोधेनान्यशूद्रविषया अपि। अत्र वर्णधर्मोपदेशस्य तु लोभादिनाऽतिक्रान्तप्रतिषेधेनैव करणोपपत्तेर्न तद्विधानापेक्षा इति कल्पतरुः।

हविष्कृतं हविष्ट्वेन कल्पितं पुरोडाशादि। धर्मः पञ्च-यज्ञादि। व्रतं प्राजापत्यादि।

यमः,—

वृषलाध्यापको यस्तु वृषलाध्यापितश्च यः।
तावुभौ नरके मग्नौ वसेतां शरदां शतम्॥

विष्णुः,—

न शूद्राय मतिं दद्यान्नोच्छिष्टं हविषं तिलान्।
न चास्योपदिशेद्धर्मं न ब्रह्म नैव च व्रतम्॥

शङ्खलिखितौ,—

कृशरपायसापूपमांस-दधि-मधु-घृत-कृष्णाजिनानि न शूद्रेभ्यो दद्यात् । नचोच्छिष्टं न हविष्कृतम् । नोपकृतं किञ्चिदन्यच्चा-प्रकृतात् ।

प्रकृतमिह्होत्सृतात्मकम् ।

आपस्तम्बः,—

नाब्राह्मणायोच्छिष्टं प्रयच्छेत् । यदि प्रयच्छेत् दन्तान् कृष्ट्वा तस्मिन्नवधाय प्रयच्छेत् ।

अब्राह्मणोऽत्र शूद्रः, कृष्ट्वा विलिख्य, तस्मिन् उच्छिष्टे अवधाय निःक्षिप्य दन्तमलानिति शेषः ॥

॥ इति गृहस्थरत्नाकरे शूद्राप्रदेयातरङ्गः ॥

---

## अथ क्रोधादीनां परिमार्ज्जनम्।

आपस्तम्बः,—

क्रोधादींश्च भूतदाहीयान् परिवर्ज्जयेत्।

भूतस्य शरीरस्य दाहीयान् दाहकारकान्॥

तथा,— अथ भूतदाहीयान् दोषानुदाहरिष्यामः।

क्रोधो हर्षो लोभो मोहो दम्भो द्रोहो मृषोद्यमत्याश-परीवादावसूयाकाममन्यू अनात्म्यमयोगः।

अत्याशो बहुतरभक्षणं मन्युः पराभिभवोत्थदोषानुवृत्तिः अनात्म्यमचावशित्वम्। अयोगो अनुयोगो वृथाभियोग इति यावत्।

हारीतः,—

औदर-रेतस-कामज-क्रोधज-हर्षजानशौच् यथावन्नियच्छेत्। औदराः सर्व्वकर्म्मेन्द्रियभावदोषाः सम्भवन्ति येरुपसृष्टो विविधसन्तापमुपैति तस्मात् शुचिर्यथा परिमिताहारः स्यात्। आहारशुद्धौ सत्त्वशुद्धिरित्याचार्य्याः। लोकद्वयसन्तापकत्वादशिवत्वमेतेषाम्। नियच्छेत् शमयेत्।

तथा,—

पुंयोगात् साहसं रेतस्यबीजं तदनृतावुत्सर्गदोषः स्यादृतौ चोत्सर्गे तद्ब्रह्मचर्य्येण व्याख्यातम्। देवादिप्रवृत्तत्वाज्जगतः प्रथमं द्वितीयं यज्ञनियमार्थं, तृतीयं मोक्षसिद्ध्यर्थं, सङ्कल्पात् कामः सम्भवत्याशयात् प्रवर्त्तते स्नेहान्निवर्त्तते। स चेच्छालक्षणोऽनेकविधः कामो येनाभिभूतोऽयम् एव कामानां लोके ह्यनेकसंसारकामावर्त्ते निमज्जति स, एव अनर्थः। कामो हि

भगवान् वैश्वानर इति श्रुतिः। तस्य संकल्पनं नियमनं, स व्याख्यातः। कामगीतौ चात्र श्लोकौ भवतः—

प्रवृत्तौ वा निवृत्तौ वा सर्व्वतः प्रतिभूरहम्।
सर्व्वार्थेष्वयथार्थोऽहं सदृते न हि किञ्चन॥
यो मां यथार्थं सर्व्वार्थं सर्व्वभूतेषु पश्यति।
सोऽध्वनः परमाप्याति नेतरे कामवादिनः॥

क्रोधाग्निनाऽभिभूतः खेषामप्यवक्रमतो नाभिगमनीयोऽविश्वसनीयश्च भवति। कार्य्याकार्य्य-वाच्यावाच्यानि न वितर्कयति। तत्र घोरां निरयप्रायां यातनामनुभूय क्रूर-क्रव्याद-श्व-तिर्य्यक्-योनिषु व्रजति। तत्र सर्व्वासां प्रजानां वध्यो भवति क्रमशोऽनु मनुष्यतां प्राप्य सर्व्वजनविद्विष्टतामुपैति।

क्रोधो हि [१]तमोरूपस्तस्य क्षमा नियमनं सा व्याख्यातेति। लोभाऽग्निनाऽभिभूतः पुण्यार्थेष्वप्रयुज्यमानमतिक्रान्तमात्मानं मन्यते सहं पुत्र-दार-बन्धूनामुपयुक्तं सुहृत्सम्बन्धिनामप्यनुपजीवनीयतमो भवति असद्वृत्तानामप्यादानमिच्छति तत्रानुबन्धात् सोऽपि तिर्य्यग्योनिषु जायते। लोभो हि तमोरूपस्तस्य सन्तोषो नियमनं सोऽपि व्याख्यातः।

एवं ह्याह,—

औदरो रैतसश्चापि कामजः क्रोधजोऽङ्गजः।
एते वै निर्ज्जिता येन स वै पञ्चतमः स्मृतः॥

वाचोवेगं मनसः, क्रोधवेगन्तूरःप्रशस्तवेगम्।

१. (ग) पुस्तके मोहरूपः।

एतान् वेगान् धारयेद्यस्तु विप्रास्तं प्रब्रुयुर्ब्रह्मिष्ठं वा मुनिं वा।
इति पौरुष्यं पुरुषव्यापारः। साहसं मदो बलं सत्त्वं तस्य पुरुषस्य रेतो बीजं यतस्तस्मात् तत् पर्व्वापर्व्व-साधारणेषु दारगमन-रूपं। ब्रह्मचर्य्येण पूर्व्वोक्त स्मरणश्रवणादिभेदेन प्रथमं निषिद्धा-निषिद्धसाधारणं गमनं। जगतः सर्व्वस्य तद्देवादारभ्य तिर्य्यक् पर्य्यन्तं स्वभावप्रवृत्तत्वात्। द्वितीयं पर्व्वादिवर्ज्जनरूपं यज्ञार्थं यज्ञसाङ्गतासिद्ध्यर्थं। तृतीयं ऋतुमात्रगमनं तपःसिद्ध्यर्थम्। चतुर्थ-मूर्द्ध्वरेतस्त्वं मोक्षार्थम्। सङ्कल्पाद्रमणीया युवतीत्यादि विज्ञानात्। कामो विषयरागः। आग्रयात् पौनपुन्येन भावनातः। स्नेहात्तथैव पक्षपातात्। अध्वन आर्त्तवादिमार्गात् परं पिपा-लक्षणम्।

विष्णुः,—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्॥

जाबालः,—

त्यजेदिन्द्रियचापल्यं ब्रह्मनिन्दान्तथैव च।
माया-मात्सर्य्य-लोभांश्च क्रोधवेगान् बलाय ते॥
परापवादमोहांश्च आत्मार्थे याचनान्तथा।
वृथा कलहमालस्यन्दिवामैथुनमेव च॥

मनुः,— नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च कुत्सनम्।
द्वेषं दम्भञ्च मानञ्च क्रोधन्तैक्ष्ण्यञ्च वर्ज्जयेत्॥

हारीतः,—

सर्व्वभक्ष्यभोजनमभोज्यभोजनमपेयपानमयाज्ययाजनमसत्प्रति-

वधो परदाराभिमर्षणं परद्रव्यहरणं परहिंसा चेति शारीराणि । पारुष्यमनृतं विवादः श्रुतिविक्रयश्चेति वाच्यानि । परोपतापः पराभिद्रोहः क्रोधो-लोभो-मोहो-ऽहङ्कारश्चेति एतान्यष्टादश नैरेयाणि कर्म्माणि ।

अभोज्यः पतितादिः तदन्नभोजनं, अभोज्यभोजनं नैरेयाणि निरयहेतवः ।

तथा,—

अथातः पापदोषान् मनोवाक्-शरीरजान् व्याख्यास्यामः । तत्र लोभ-द्वेष-राग-मान-मोह-मद-शोक-ममत्वाऽहङ्कार-भय-हर्ष-मोह-चिन्ताश्चेति द्वादश मानसाः ।

तेषाञ्च त्रिविधो मोहः सम्भवः सर्व्वपाप्मनाम् ।
अज्ञानं संशयज्ञानं मिथ्याज्ञानमिति त्रिकम् ॥
विज्ञानं सर्व्वविद्यानामर्थानां स्वयमूहनम् ।
दोषैरधर्षणञ्चेति ज्ञानमज्ञानमन्यथा ॥
श्रेयः-श्रेयसोर्म्मध्ये भ्रमणं संशयाद्भवेत् ।
मिथ्याज्ञानमिति प्राकुरहिते हितदर्शनम् ॥
भवत्यधर्म्मादज्ञानमविद्यातश्च संशयः ।
उभाभ्यामन्यथा ज्ञानं पापिष्ठमुपजायते ॥
अज्ञानाद्दुःख-सम्प्राप्तिः संशयाद्बध्यते पुनः ।
मिथ्याज्ञानात् पतत्येव मूढो तामिस्रयोनिषु ॥
आवृता विषयाः सर्व्वे धर्म्मदोषैर्यथा तनुः ।
शृणतो हृदि ताम् हत्वा रागो रागस्य कारणम् ॥

अ(स्व)सन्निकर्षादज्ञानात् सङ्कल्पादभिमानतः।
सुखाच्च जायते रागो विषयेषु शरीरिणाम्॥
ज्ञानाद्दोषादसामर्थ्यात् क्लेशादन्यप्रसङ्गतः।
वियोगात् कालतः शोकात् धर्म्माच्च विनिवर्त्तते॥
निवर्त्तते चेद्रागोऽयं पुंसो द्वेषादि-हेतुभिः।
भूयोऽप्युत्पद्यते सङ्गाज्ज्ञानान्नश्यति केवलम्॥
अतिप्रसक्तो भोगेषु रागो भवति दोषकृत्।
परस्त्रीषु परस्वेषु किञ्चित् प्रार्थनयाऽपि च॥
रोषोऽमर्षोऽभ्यसूया च द्रोहो मिथ्याभितर्क्कितम्।
दुःखार्हञ्चेति तत्त्वज्ञैर्दोषः षोढाऽभिधीयते॥
य उष्मा हृदये जन्तोः समुत्तिष्ठति वैकृतः।
परानिष्टचिकीर्षायां स रोष इति संज्ञितः॥
रोषोद्भवसमुत्थेन दोषेणैवाभिवेदितः।
किञ्चिद्दृष्ट्वेव यो द्वेषस्तदमर्षस्य लक्षणम्॥
परस्य शुद्धान्दृष्ट्वा तु स्वगुणाभ्यधिकान् गुणान्।
नाभिनन्दति यो द्वेषात् साऽभ्यसूयेत्युदाहृता॥
सुहृदामपि यो नित्यमर्थानुपजिघांसति।
असौहृदमतिः पापस्तथा द्रोहस्य लक्षणम्॥
यः साधूनपदोषांश्च मन्यते दोषकारिणः।
मिथ्या वितर्क्कितञ्चेति तदाज्ञभावदोषजम्॥
द्वेषाल्लोभाच्च संकल्पाच्चिन्तनं पापकर्म्मणाम्।
दुःखार्हमिति विज्ञेयं पूर्व्व-दुष्कृतसम्भवम्॥

दुःखान्मिथ्याभिलाषाच्च द्वेषोऽयं षड्विधो भवेत् ।
ज्ञानात् कालात्ययाद्धर्मात् [1]प्रीतेश्च विनिवर्त्तते ॥

अतत्त्वश्रवणं तापो वेपथुर्ग्लानिसंप्लवः ।
खेदोऽक्षिरोगः पारुष्यं श्वासस्तु द्वेषरोधतः ॥

सर्व्वत्रोत्कृष्टमात्मानं सर्व्वेभ्यो योऽभिमन्यते ।
स मान इति विज्ञेयो यथेष्टं स्पष्टवक्तृणः ॥

निरस्यात्माभिमानेन या उत्कृष्टिर्न्न शोभते ।
उत्कृष्टिर्याविता प्राकृतत्कृष्टिस्साऽवमानतः ॥

परार्थं परभोगांश्च परसामृद्ध्यमेव च ।
दृष्ट्वा श्रुत्वा तु या तृष्णा जायते लोभ एव सः ॥

अलोभमूलतर्काच्च पिपासापरिवर्द्धितः ।
अनर्थेष्वेव सम्मोह्य लोभः पतति दुर्नरम् ॥

नास्ति तृष्णासमं दुःखं नास्ति त्यागसमं सुखम् ।
तस्माच्च लोभसंज्ञा तां तृष्णां विद्वान् परित्यजेत ॥

प्राप्याऽपि मेदिनीं कृत्स्नां तृष्णा प्रायो न शाम्यति ।
विवर्द्धते हि भूयोऽपि हविषेव विभावसुः ॥

दुःखादित्वाद्दुरन्तत्वादनन्तत्वादतृप्तितः ।
पश्चाच्छोकावसत्त्वाच्च न कश्चिच्छ्रेयसी तृषा ॥

कुल-बुद्धि-वपुर्विद्या वित्तैश्वर्य्य-विभूतिभिः ।
स्वैरेतैर्बाधते योऽन्यान् स तन्मोहस्य लक्षणम् ॥

देवासुरमनुष्याणामुत्सिक्ता मदहेतवः ।

---

[1] (ग) पुस्तके प्रीतेश्चैव निवर्त्तते ।

उत्पत्त्यैव विनेयास्ते तस्मात्त्याज्यो मदो बुधैः ॥
हर्षशोकापलापाश्च दम्भाद्दर्पाच्च गर्व्वतः ।
अन्ये च तद्विधा भावास्ते मदस्य विकल्पजाः ॥
अनिष्टयोगजाद्द्वेषात् स्नेहाविष्टाच्च योगजात् ।
क्लेशाच्च हृदि यद्दुःखं स शोक इति पद्यते ॥
अनित्याः सर्व्वभावाश्चेत् शोकस्तत्र निवर्त्तते ।
अथवा यदि नित्याः स्युरतः शोकः प्रवर्त्तते ॥
नैवं शोचेच्च संत्वस्थस्तामंशो वापि केवलम् ।
शोकाद्दुःखमवाप्नोति समासेनेह मानवः ॥
इदं ममेति यः स्वाम्यमात्मनोऽर्थेषु मन्यते ।
अजानंस्तदनित्यत्वं ममत्वमिति तद्विदुः ॥
अहमित्यभिधानेन यः क्रियासु प्रवर्त्तते ।
कार्य्यकारणयुक्तासु तदहङ्कारलक्षणम् ॥
अहङ्कार-ममत्वाभ्यां वध्यन्ते सर्व्वदेहिनः ।
संसारविनियोगेषु ताभ्यां मुक्तस्तु मुच्यते ॥
आत्मवाधकरं श्रुत्वा दृष्ट्वा वा प्रत्युपस्थितम् ।
उद्वेगो जायते यस्तु हृदये तद्भयं स्मृतम् ॥
तावद्भये न भेतव्यं यावद्भयमनागतम् ।
आगतन्तु भयं दृष्ट्वा प्रवर्त्तव्यमभीतवत् ॥
भवितव्यं भवत्येव नास्ति कर्म्मव्यतिक्रमः ।
इत्येवं दृष्टतत्त्वानां न क्वचित् जायते भयम् ॥
आत्मनोऽभ्युदयं दृष्ट्वा परेभ्यो व्यसनानि च ।

आनन्दो मानसो जन्तोर्हर्ष इत्यभिधीयते ॥
सर्व्वद्रव्येष्वनित्येषु चणिकेष्वसुखेषु च ।
न हर्षस्यावकाशोऽस्ति विमृश्य यदि पश्यति ॥
माध्यस्थमपि दोषाय परेषां व्यसनागमे ।
किं पुनर्मूढभावेन प्रमोदस्य परिद्रवे ॥
यो वृथा चिन्तयेदर्थान् मनसा हि परस्परम् ।
मोघचिन्तेति तां प्राहुर्धर्म्मकर्म्मोपघातिनीम् ॥
लाभैश्वर्य्यधनादीनि लोभाद्यः संस्मरेत् सदा ।
स मोघचिन्तस्यात्मानं हन्ति बुद्धिस्य कर्म्म च ॥
तस्मादिदूरगां चिन्तां त्यक्त्वा शोकस्य कर्म्मजम् ।
आरभेत शुभं कर्म्म ध्रुवप्राप्तस्य सर्व्वशः ॥
राग-सङ्कल्पजान् दोषान् हृदये सुदृढार्पितान् ।
उच्छिद्य ह्येतान् मेधावी तत्त्वज्ञानासिना द्रुतम् ॥
आत्मदोषचयोपायमनित्यामेध्यतां तनोः ।
हितञ्च सर्व्वभूतानां चिन्तयेत् मनसा सह ॥
एते मनोभवा दोषा द्वादशाऽशिवहेतवः ।
मोहादयः समाख्याता देवासुर-नृ-मोहनाः ॥
सत्संयोगान् मनोगुप्ते ज्ञानधर्म्मप्रसङ्गतः ।
त्यागाच्च व्यसनादीनां हानिश्च्छन्ति (?) मानवाः ॥
अप्रकाशकरीं बुद्धिं तम आवृत्य धर्म्मतः ।
प्रथमं जायते मोहो देहिनां हृदि पाप्मजः ॥
मोहादुत्पद्यते रागो रागाद्दुःखं प्रजायते ।

त्रिभिरेतैर्भवत्येवं पापं शारीरवाङ्मयम् ॥
तस्माच्छरीरः सर्व्वेषु मानसेष्वपि च त्रयम् ।
सर्व्वान् दोषान् परित्यक्तुं त्रीणितान् प्रथमं त्यजेत् ॥

वाङ्मयानभिधाय पापदोष इत्यनुवृत्तौ देवलः,—

ततो हिंसाऽपचारः स्तेयमर्थदूषणमिति चतुर्विधाः शरीरजाः ।
हिंसादिलक्षणमभिधाय पुनर्देवलः,—

वेश्म-क्षेत्र-शस्यदहनं सेतुभेदनं भाजोवोपघातनम् । कृत-प्रणाशनं द्रव्यापध्वंसनञ्चार्थदूषणमित्येवम् ।

मनुः,—

आचार्य्यं नीतिवक्तारं पितरं मातरं गुरुम् ।
न हिंस्याद्ब्राह्मणं गांश्च सर्व्वांश्चैव तपस्विनः ॥
ब्राह्मणायावगुर्य्यैव द्विजातिर्वधकाम्यया ।
शतं वर्षाणि तामिस्रे नरके परिपद्यते[१] ॥
ताडयित्वा तृणेनापि संरम्भान्मतिपूर्व्वकम् ।
एकविंशतमा जातीः पापयोनिषु जायते ॥

जातीर्जन्मानि ।

अयुध्यमानस्योत्पाद्य ब्राह्मणस्यासृगङ्गतः ।
दुःखं स महदाप्नोति प्रेत्याप्राज्ञतया नरः ॥
शोणितं यावतः पांशून संगृह्णाति महीतले ।
तावतोऽब्दानमुत्रान्यैः शोणितोत्पादकोऽद्यते ॥

अमुत्र परलोके । अद्यते भक्ष्यते ।

१ क्वचित् अधिकं पद्यं विवादे वा विनिर्जित्य प्रणिपत्य प्रसादयेत् ।

यमः,—

न कदाचिद्द्विजं रोषात्तस्मादश्रवरेदपि (?) ।
न ताडयेत् तृणेनापि न गात्राच्छ्रावयेदसृक् ॥
अश्रवर्य्यस्त्वब्दशतं सहस्रमभिहन्यते ।
जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते ॥
शोणितं यावतः पांशून् संगृह्णाति द्विजन्मनः ।
तावन्त्यब्दसहस्राणि तत्कर्त्ता नरके वसेत् ॥

तत्कर्त्ता शोणितोत्पादनकर्त्ता ।

उशनाः,—

न ब्राह्मणस्यापदं कुर्य्यात् ।

यमः,—

वादेन ब्राह्मणं जित्वा हर्षं वै योऽधिगच्छति ।
श्मशाने पादपः स स्यात् कङ्क-गृध्रनिषेवितः ॥

हारीतः,—

देवा लोकास्तथा वेदा गावो यज्ञास्तथैव च ।
सर्व्वस्थानेषु भूयिष्ठं ब्राह्मणेषु व्यवस्थिताः ॥
पूजितैः पूजिता ह्येते दृष्टैर्दृष्टा भवन्त्युत ।
निन्दितैर्निन्दिता ह्येते तस्माद्विप्रोऽधिदैवतम् ॥

तथा,—

समीपस्थो दहत्यग्निस्तेजसैवेन्द्रियं तनुम् ।
मन्युना च दहेद्विप्रः कुलमायुर्गतिं यशः ॥

गतिः स्वर्गादिगतिः ।

आपन्नः प्रदहत्यग्निर्दूरात्तु दहति द्विजः।
तस्मात्तं पूजयेन्न्यायात् स हि तीव्रतरोऽनलात् ॥
छिन्नं रोहति शस्त्रेण दग्धं रोहति वह्निना
विप्रमन्युप्रदग्धस्य रोहणं नेह विद्यते ॥
ब्राह्मणानां प्रसादेन सर्व्वतः शान्तिमाप्नुयात्।

पूजनं प्रणामादिना। अर्च्चनं सुवर्णादिना।

यथा प्लवे नौर्महती प्रयुक्ता
सन्तारयत्याशु जलांश्च दुर्गात्।
दृष्ट्वा द्विजास्तद्वदिह क्षणेन
सन्तारयेयुर्महतोऽधमस्मात्[1] ॥

मनुः,—

परस्य दण्डं नो यच्छेत् क्रुद्धो नैनं निपातयेत्।
अन्यत्र शिष्यात् पुत्राद्वा शिक्षार्थं ताडयेदुभौ ॥

एनं दण्डम्। शिष्टिः शिक्षा।

याज्ञवल्क्यः,—

न निन्दा-ताडने कुर्य्यात् सुतं शिष्यञ्च ताडयेत्।
हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् वयोऽधिकान् ॥
रूपद्रविणहीनांश्च जातिहीनांश्च नाक्षिपेत्।

विष्णुः,—

अथ कथञ्चन नावमन्येत। यथा एवं स्त्रीं नावमन्येत। नाभ्यवहसेत्। न हीनानुपहसेत्।

[1] (ग) — दुर्गात्।

मनुः,—

क्षत्रियञ्चैव वैश्यञ्च ब्राह्मणञ्च बहुश्रुतम्।
नावमन्येत वै दृष्टं मनसाऽपि कदाचन॥
एतत्त्रयं हि पुरुषं निर्द्दहत्यवमानितम्।
तस्मादेतत् प्रयत्नेन नावमन्येत बुद्धिमान्॥
नात्मानमवमन्येत सर्व्वाभिरसमृद्धिभिः।
आमृत्योः श्रियमीहेत नैनामीहेत दुर्लभाम्॥

शङ्खलिखितौ,—

न शिष्टानसत्कुर्य्यात्।

बौधायनः,—

दैन्यं शाठ्यं तैक्ष्ण्यं च वर्ज्जयेत्।

अथाप्युशनो—वृषपर्व्वदुहित्रोस्सम्वादे गाथामुदाहरन्ति।

स्तुवतो दुहिता त्वं वै याचतः प्रतिगृह्णतः।
अथाहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः॥

देवलः,—

आत्मानं न शपेत् कोपाद्रजो न क्षिपेद्दिवा।
न नक्तं विलिखेद्भूमौ गाश्च रात्रौ न सन्विशेत्॥
न नदीषु नदीं ब्रूयात् पर्व्वतेषु च पर्व्वतम्।
नान्यं प्रशंसेत्तत्रस्थस्तीर्थेष्वायतनेषु च॥
आवासे भोजने वापि न त्यजेत् सहयायिनम्।
देवान्नृपानृषींश्चैव नासन्नमपदं व्रजेत्॥
ब्राह्मणान्नृपतीन् वृद्धान् गाश्च साधून् शिशूनपि।

